आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रम् ।

महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

एकादशादिचतुर्दशान्तप्रश्नात्मकः पञ्चमो भागः ।

एतत्पुस्तकं
वे० शा० सं० रा० शंकरशास्त्रीमारूलकर
इत्येतैः संशोधितम् ।

तच्च
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४९
खिस्ताब्दाः १९२७



मूल्यं रूप्यकत्रयम् ( ३ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य प्रयोगचन्द्रिकाव्याख्यासहितस्य सत्याषाढविरचितहिरण्यकेशिश्रौतसूत्रस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

(क.) इति संज्ञितम्—केवलं व्याख्यानं दण्डवत्युपाख्यभट्टरघुनाथदीक्षितानाम् । आन्ध्राक्षरलिखितं पत्राणि १६१० संपूर्णम् ।

(ख.) इति संज्ञितम्—दण्डवत इत्युपाह्वय शिवदीक्षित इत्येतेषाम् । संपूर्णम् ।

(ग.) संज्ञितम्—वे० शा० सं० शंकरदीक्षित तापसकर इत्येतेषाम् । प्रश्नाः ११–१४ पत्राणि ३२७

(घ.) इति संज्ञितम्—वे० शा० सं० गुरुनाथदीक्षित मुळगुन्दकर इत्येतेषाम् । प्रश्नौ ११–१२ पत्राणि ११७

(ङ.) इति संज्ञितम्—मूलमात्रम् । पाचवड ( सातारा ) ग्रामनिवासिनां श्रौतचूडामणिपदविभूषितानां स्वाध्यायसंपादकानां वे० शा० सं० धुण्डिराज दीक्षित सोमयाजी बापट इत्येतेषां संपूर्णम् ।

(च.) इति संज्ञितम्— मूलमात्रम् । संपूर्णम् । पुण्यपत्तननिवासिनां वे० शा० सं० ‘ अण्णंभट्ट अभ्यंकर ’ इत्येतेषाम् ।

(छ.) इति संज्ञितम्—मूलमात्रम् । प्रश्नाः-( ११।१२।१५।२४।२५ ) समाप्तं किंचित्त्रुटितम् ( गौर्मेण्ट मैसूर—औरियण्टल् लैब्ररी ) संस्कृतग्रन्थसंग्रहालयस्थं नागराक्षरं देवनागराल्लिखितम् ।

(ज.) इति संज्ञितम्—मूलमात्रम् । प्रश्नौ ( २१।२२ ) लेले इत्युपाह्वधर्ममार्तण्डेत्युपाधिविभूषितानां कै० ब्रह्मश्री काशीनाथ शास्त्री सोमयाजी वाई इत्येतेषाम् ।



## आदर्शपुस्तकोल्लेखपत्रिका ।

अथ सत्याषाढविरचितहिरण्यकेशिश्रौतसूत्रस्य पुस्तकानि यैः परहितैकप्रवणस्वान्ततया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते–

(क.) इति संज्ञितम्—एकादशप्रश्नादारभ्य समाप्तिपर्यन्तं पुण्यपत्तनस्थानां वे. रा. रा. वामन 'रघुनाथभट्ट डोंगरे' इत्येतेषाम् । अस्य लेखनकालः शकाब्दाः १७०९

(ख.) इति संज्ञितम्—२२० पत्रात्मकं त्रुटितं रा. रा. 'कुशाभाऊ अभ्यंकर वकील' इत्येतेषाम् ।

(ग.) इति संज्ञितम्—१६३ पत्रात्मकं त्रुटितं वे. रा. 'विनायकशास्त्री वाईकर' इत्येतेषाम् ।

(घ.) इति संज्ञितम्—२४७ पत्रात्मकं त्रुटितं वे. रा. 'बाळशास्त्री अभ्यंकर निवासस्थानं वाई' इत्येतेषाम्

(ङ.) इति संज्ञितम्—३०१ पत्रात्मकं त्रुटितं वे. रा. 'भास्कर कृष्णंभट्ट लिमये दीक्षित निवासस्थानं पुणें' इत्येतेषाम् ।

एवं हिरण्यकेशीयचयनाश्वमेधराजसूयकाठककाम्यपशुप्रायश्चित्तादिप्रयोगाणां हस्तलिखितपुस्तकानि मिलित्वा विंशतिसंख्याकानि वे. मू. रा. 'भास्कर कृष्णंभट्ट लिमयेदीक्षित' इत्येतैरवलोकनार्थं प्रदत्तानि। तैः प्रयोगचन्द्रिकायाः संशोधनकर्मणि बहूपकृतमिति ।



## महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यायामुदाहृतग्रन्थानां ग्रन्थप्रणेतृणां च अकरादिमातृकाक्रमेण निर्देशः।

---

अष्टाध्यायी—पाणिनिमुनिविरचिता।
अग्निपुराणम्—महर्षि वेदव्यासप्रणीतम्।
अथर्ववेदः—
अत्रिस्मृतिः—
आङ्गिरःस्मृतिः—
अमरकोषः—
अनन्तदेवकृता श्रौतपद्धतिः—
अण्डिलाचार्यकृता (आपस्तम्बश्रौतप्रयोग) दीपिका।
आपस्तम्बस्मृतिः—
आपस्तम्बसूत्रम्—
आश्वलायनस्मृतिः—
आश्वलायनसूत्रम्—
उद्गातृपद्धतिः—रामकृष्णत्रिपाठीकृता।
ऋग्वेदसंहिता—सायणभाष्योपेता।
एकाग्निकाण्डः—हरदत्तकृतभाष्योपेतः।
ऐतरेयब्राह्मणम्—सायणभाष्योपेतम्।
ऐतरेयारण्यकम्—सायणभाष्योपेतम्।
औशनःस्मृतिः—
कपर्दिकारिका—
कपर्दिस्वामिविरचितं (आपस्तम्ब)श्रौतसूत्रभाष्यम्।
कर्मान्तसूत्रम्—
कर्मप्रदीपः—कात्यायनविरचितः।
कश्यपसंहिता—
कर्कभाष्योपेतं—कात्यायनश्रौतसूत्रम्।

कृष्णयजुर्वेदसंहिता—भट्टभास्करभाष्योपेता।
कृष्णयजुर्वेदब्राह्मणम्—,,
कृष्णयजुर्वेदारण्यकम्—,,
कृष्णयजुर्वेदमन्त्रब्राह्मणम्।
काशीखण्डः (स्कान्दं) रामेश्वरयोगिव्याख्यासमेतः।
काण्वसंहिता—सायणभाष्योपेता।
कात्यायनसूत्रम्—
कात्यायनस्मृतिः—
कौषीतिकीसूत्रम्—
खादिरगृह्यसूत्रम्—रुद्रस्कन्दभाष्योपेतम्।
गृह्यसूत्रम् (सत्याषाढविरचितम्)
,, मातृदत्तभाष्योपेतम्।
,, गोपीनाथकृतवृत्तियुतम्।
,, महादेवशास्त्रिसंकलिता प्रयोग-
,, चन्द्रिका।
गृह्यसूत्रम्—(आश्वलायनीयम्) गार्ग्यनारायणवृत्ति०
गृह्यसूत्रम् आपस्तम्बविरचितम्—
,, कपर्दिस्वामिभाष्योपेतम्।
,, हरदत्तकृतवृत्तिसहितम्।
अण्डिलाचार्यप्रयोगवृत्तिसमेतम्।
,, सुदर्शनाचार्यभाष्योपेतम्
,, महादेवयज्वकृतवृत्तियुतम्
गृह्यसंग्रहः—(छन्दोगः)
गृह्यपरिशिष्टम्—(आश्वलायनीयम्)

गृह्यरत्नकण्ठभूषणम्—वैदिकसार्वभौमकृ-तम् ।

गोभिलगृह्यसूत्रम्–चन्द्रकान्तभट्टाचार्यभाष्योपेतम् ।

गोतमसूत्रम्-मस्करीभाष्योपेतम् ।

गोतमसूत्रम्( क्रियाकाण्डः । )

गोत्रप्रवरनिबन्धसंग्रहः—

चन्द्रचूडीभट्टकृत(आपस्तम्बगृह्य) संस्कार-निर्णयः ।

चन्द्रिका(श्रौतवृत्तिः) ।

छन्दोगपरिशिष्टम्—नारायणकृतभाष्यं चन्द्र-कान्तवृत्तियुतं च ।

जैमिनिगृह्यसूत्रम्– भट्टकुमारिलभाष्योपे-तम् ।

जैमिनिश्रौतसूत्रम्—

जैमिनिसूत्रं(पूर्वमीमांसा) शाबरभाष्योपेतम्।

जैमिनिन्यायमाला माधवाचार्यविरचिता ।

जैमिनिसूत्रवृत्तिः–(ज्योतिषम् ।

तत्त्वमुक्तावलिः-नन्दपण्डितकृता

तन्त्ररहस्य—रामानुजाचार्यकृतम् ।

तैत्तिरीयसंहिता—माधवीयभाष्योपेत

तैत्तिरीयब्राह्मणम्—माधवीयभाष्योपेतम् ।

तैत्तिरीयारण्यकम्--

तैत्तिरीयप्रातिशाख्या-त्रिभाष्यरत्नसहिता।

त्रिकाण्डमण्डनम्- भट्टभास्करविरचितम् ।

दत्तकमीमांसा—नन्दपण्डितकृता ।

दत्तकचन्द्रिका—कुबेरकृता ।

दत्तकौस्तुभः—अनन्तदेवकृतः ।

दत्तकदर्पणः—

दत्तकसारः—

दशानिर्णयः—वैदिकसार्वभौमकृतः ।

दक्षस्मृतिः—

दानखण्डः—( हेमाद्रेः )

द्वैधसूत्रम्—

द्राह्यायणगृह्यसूत्रम्–रुद्रस्कन्दभाष्योपेतम् .

धर्मप्रदीपः—

धर्मप्रवृत्तिः—

धर्मसूत्रं सत्याषाढविरचितम् । महादेव-कृतवैजयन्तीव्याख्या०

,, ( आपस्तबीयं ) हरदत्तकृतं उज्ज्व-लासहितम् ।

" ( बोधायनीयं ) गोविन्दाचार्यवृ-त्तियुतम् ।

" ( वैखानसीयं ) ।

धूर्तस्वामिभाष्योपेतमापस्तम्बसूत्रम् ।

नृसिंहकृतप्रयोगपारिजातः ।

नारसिंहप्रतापः–रुद्रदेवकृतः ।

निर्णयामृतः–

निर्णयसिन्धुः–

पराशरमाधवीयः

परिभाषासूत्र–बोधायनीयम् ।

पाकयज्ञनिर्णयः–

पितृमेधसूत्रम्–( भरद्वाजविरचितं ) कपर्दि-भाष्योपेतम् ।

पारस्करगृह्यसूत्रम्–हरिहरभाष्योपेतम् ।

पितृमेधसूत्रम् ( आपस्तम्बीयम् ) गोपाल-यज्वभाष्योपेतम् ।

" " महादेवयज्वभाष्योपेतम् ।

" " यल्लाजीयविवरणोपेतम् ।

पितृमेधसूत्रम् ( बोधायनीयम् )

पितृमेधसूत्रम् ( वैखानसीयम् )

प्रयोगरत्नं ( हिरण्यकेशीयं ) महेशभट्टीयम्।

प्रायश्चित्तशतद्वयी—वेंकटेशकृतव्याख्यास०
प्रायश्चित्तप्रदीपः—गोपालयज्वकृतः।
प्रायश्चित्तदीपिका—वरदराजयज्वकृता।
प्रायश्चित्तचन्द्रिका—गणेशयज्वकृता।
बौधायनश्रौतसूत्रं—महादेवयज्वकृतवृत्तियुतम्।
बौधायनगृह्यसूत्रम्
बृहस्पतिस्मृतिः
ब्रह्मपुराणम्
भरद्वाजश्रौतसूत्रम्—महादेवयज्वकृतभाष्योपेतम्।
भरद्वाजगृह्यसूत्रम्
भाट्टदीपिका—खण्डदेवकृता।
भाट्टरहस्यम्—
भाट्टाध्वरमीमांसा—वासुदेवदीक्षितकृता।
मनुस्मृतिः—कुल्लूकभट्टकृतव्याख्यास.०
महाभाष्यं ( पतञ्जलिः )
माध्यंदिनसंहिता—महीधरभाष्योपेता।
मानवकल्पसूत्रम्—
मत्स्यपुराणम्—
यमस्मृतिः—
याज्ञवल्क्यस्मृतिः—मिताक्षरा।
" अपरार्कटीका।
याजुषहौत्ररत्नमाला—महादेवयज्वकृता।
रामाण्डारवृत्तिः—(धूर्तस्वामिभाष्यस्य)।
रुद्रदत्तवृत्तिः—(आपस्तम्बश्रौतसूत्रस्य)।
लाट्यायनश्रौतसूत्रम्—अग्निस्वामिभाष्योपेतम्।
लिखितस्मृतिः—
वासिष्ठधर्मशास्त्रम्—
वाराहगृह्यसूत्रम्—
विधानमाला—नृसिंहभट्टकृता।
विष्णुस्मृतिः...
विश्वप्रकाशः ( संस्कारकाण्डः )
विद्यारण्यकृतापस्तम्बगृह्यसूत्रवृत्तिः।
वैजयन्तीव्याख्यासमेतं सत्याषाढसूत्रम्।
वैखानसश्रौतसूत्रम्—महादेवयज्वकृतवृत्तियुतम्।
वैखानसगृह्यसूत्रम्—
व्यासस्मृतिः—
शङ्खस्मृतिः—
शतपथब्राह्मणम्—सायणभाष्योपेतम्।
शातातपस्मृतिः—
शान्तिरत्नमाला—
शान्तिकमलाकरः—
शान्तिसारः—
शास्त्रदीपिका—
शारीरकशाङ्करभाष्यम्—
शाङ्खायनगृह्यसूत्रम्—
शाङ्खायनश्रौतसूत्रम्—
शुल्बसूत्रम् ( बौधायनीयम् )
शुल्बसूत्रम् ( आपस्तम्बीयम् )
कपर्दिभाष्योपेतम्।
" "
महादेवयज्वभाष्योपेतम्।
" " करविन्दीयविवरणोपेतम्।
" " सुन्दरराजीयवृत्तिसहितम्।
श्रौतसूत्रवृत्तिः ( आपस्तम्बीया ) महादेवयज्वकृता।
श्रौतसूत्रं—( आपस्तम्बीयं ) चौण्डपाचार्यभाष्योपेतम्
संकर्षणकाण्डः—भाट्टचन्द्रिका भास्कररायकृता।

# प्रस्तावना ।

—:+:—

अद्य खलु श्रीमदनन्तसद्गुणगणालंकृतानन्तकोटिब्रह्माण्डमण्डलाखण्डलप्रभृतिवृन्दारकवृन्दवन्दितपदारविन्दनिष्यन्दमानामन्दानन्दसंदोहमिलिन्दायमानमानसवैखानसमुनिजनजेगीयमानविमलबिरुदावलिविराजमानदिव्यलीलावतारसमनुगृहीतसमस्तभक्तजनकामनापरिपूरणनिबद्धपरिकरश्रीपरमेश्वरकृपाप्रसादसमवाप्तविशुद्धशेमुषीविशेषविकसितविद्यावैभवकृतार्थीकृतधरित्रीवलयानां समस्तधरणीतलविराजमानविविधसभ्यसंभावितसभासभाजितविद्वत्त्वसौजन्यमौशील्यप्रभृतिसद्गुणगणावाप्तप्रसरबुधजनसरस्वतीजेगीयमानविमलयशोवलक्षीकृतदिङ्मण्डलानां परमपूज्यताभाजनसमस्तसज्जनशिरःसरोजसंभावितनमस्क्रियाप्रभृतिपुरस्क्रियाणां सकलवेदशास्त्रपारावारपारदृश्वनां निखिलकलाकलापकौशल्यशल्योत्खलितदुर्बुद्धिनिबद्धाशयानां समस्तभूमण्डलनिवासिनां सन्मान्यविद्वज्जनानां पुरतोऽद्य नूतनपरिचयप्रभावपरिस्फुरदभिनवादरातिशयसमुत्कण्ठितसरस्वतीसुप्रसादसमवाप्तसुमङ्गलमयगीर्वाणवाग्देवतामधुरतरविलासप्रोल्लासविकसितैः प्रास्ताविकैः कतिपयैर्वाक्यनिकुरम्बैः सुमङ्गलमयमभिनवोदन्तं निवेदयितुं समुत्कण्ठतेऽस्मदीयं मानसम् । तदत्र समस्तविद्वज्जनानां सुविचारविलासितं चित्तमासमन्ततो विविधविचारणीयप्रस्तुतकार्यकदम्बकादावर्ज्य प्रकृतेऽस्मदीयेऽभिनवोदन्तनिवेदनीये वक्तव्यांशे समवधानाय कृतक्षणं जायतामिति सप्रश्रयं साञ्जलिबन्धं संप्रार्थ्य संप्रति निजवक्तव्यांशमुपोद्घातमुखेन प्रस्तोतुमारभामहे—

अयि समस्तसज्जनाः—विदितमेव खलु सकलवैदिकधर्ममार्गानुयायिनां सदाचारसंपन्नानां तत्रभवतां भवताम् । यत्सकलवाङ्मयस्याऽऽदिबीजभूतो वेदो भगवद्रूप इति । तदेतदेव किंचिदत्र विविच्यते—

तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ।
तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं प्रवदन्ति सोऽभूत् ॥

इति श्रुतिमैत्रेयोक्तेः साक्षाद्विष्णुरूपः स्वयंभूः सर्ववेदोपवेदेतिहासपुराणोपपुराणवार्तादण्डनीत्यान्वीक्षिक्यादिभिः स्वोत्पन्नज्ञानविभूतिभिः सह सदैव विराजमानो वरीवर्ति । तस्मादेव च ज्ञानस्वरूपेणोपादानकारणरूपाद्भगवतो वेदविद्याविर्भावः समभवत् । तदुक्तम्—

ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजत् ।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥
आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ।
स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥

इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः समृजे सर्वदर्शनः ॥ ( भा० तृ० ) ।

इत्यादिना । तांश्च स्वस्वरूपवन्नित्यसिद्धान्वेदान्भगवान्निजाचिन्त्यशक्त्या वैधदीक्षया ब्रह्माणमुपदिदेश । एतदेवोक्तं श्रुतौ—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति ।

अनया श्रुत्या च नित्यसिद्धानेव स्वान्तःस्थितान्वेदान्प्रणवमातृकारूपेण सुसूक्ष्मान्ब्रह्ममुखेभ्य ऋगादिस्थूलरूपेणाऽऽविर्भावयामासेति तावदुच्यते । अत एव—

'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ' ॥ इति स्मृतेः ।

'वाचा विरूपनित्यया' ( तै० सं० २।६।११ ) इति श्रुतेश्च वेदानां नित्यत्वम् । यच्चोक्तम्–'ऋचः सामानि जज्ञिरे ' ( तै० आ० ३।११ ) इति । तत्राप्याविर्भाव एव बोध्यः । जनेः प्रादुर्भावार्थकत्वात् ।

ननु—शास्त्रयोनित्वात् ( ब्र० सू० १।१।३ ) इति व्याससूत्रस्य का गतिरिति चेत्—तत्र योनिशब्दः प्रमाणार्थक एव बोध्यः । तेन 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्युपनिषद्वेद्यत्वं ब्रह्मणस्तत्सूत्रं प्रशास्ति । किंच " एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः " (बृह०२।४।१०) इत्यादिश्रुतिरपि वेदानामुत्पत्तिं निराकरोति । श्वासप्रश्वासादिवद्भगवानन्तःस्थितान्वेदाँल्लीलयाऽऽविर्भावितवानित्यस्मिन्नेवार्थे श्रुतेस्तात्पर्यात् । ननु—लीलयाऽऽविर्भावकर्तृत्वेऽपि ब्रह्मोपादानता वेदानां जातैव । तथात्वे च तेषां पौरुषेयत्वं कथं न भविष्यति । न च ब्रह्मकार्यत्वेऽपि तेषां वेदानां पौरुषेयत्वं नामास्ति—पुरुषमात्रजन्यत्वेऽपि पौरुषेयत्वे वर्णानां नित्यत्वेऽप्यानुपूर्वीविशेषस्य पुरुषजन्यत्वान्मीमांसकंमन्यस्यापि वेदाप्रामाण्यप्रसङ्गात् वर्णनित्यत्वमात्रेणैवापौरुषेयत्वव्यवस्थापने लौकिकतदादिवाक्यस्याप्यपौरुषेयत्वप्रसङ्गाच्च । तस्मान्मानान्तरेणार्थमुपलभ्य रचितत्वं पौरुषेयत्वं सापेक्षत्वलक्षणाप्रामाण्यप्रयोजकम् । तच्च न वेदेषु वेदार्थस्य मानान्तरागोचरत्वात् । इदमेव हि श्रुत्या निःश्वासदृष्टान्तेन दर्शितम् ।

तथा हि—निःश्वासः पुरुषाज्जायमानोऽपि न पुरुषचिकीर्षाजन्यः सुषुप्तावपि तद्दर्शनात् । एवं समग्रो वेदो ज्ञानस्वरूपेणोपादानकारणरूपाद्ब्रह्मणो जायमानोऽपि न ब्रह्मचिकीर्षाजन्यः । वेदार्थस्य वेदातिरिक्तमानाविषयत्वात् । इत्यनया विधया ' कारणगुणा हि कार्यगुणानारभन्ते ' इति न्यायेन कारणरूपस्य ब्रह्मणो नित्यत्ववत्तदाविर्भूतवेदानामपि नित्यत्वं तावत्सिद्धम् ।

एतेषां वेदानां च प्रथमतः प्रणवरूपेण सूक्ष्मतयाऽवस्थितिरासीत् । ततः प्रणवतो मातृकाणामाविर्भावोऽभवत् । तास्ता एव मातृका या अक्षरसमाम्नायत्वेनोच्यन्ते । तस्मादक्षरसमाम्नायत एव सर्वा आन्वीक्षिक्यादयोऽष्टादशविद्या अपि ब्रह्मद्वारा संभूताः । तदेतदुक्तं श्रीमद्भागवते तृतीयस्कन्धे विदुरं प्रति मैत्रेयेण—

'ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजत् । इत्यारभ्य
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ' इत्यादिना

'शब्दब्रह्मात्मनस्तात ' इत्यन्तेन । तत्रैतासामष्टादशविद्यानां भेदाः प्रत्येकशोऽनन्तशाखावशादनन्तशः प्रसृताः सन्ति । मुख्यतया ता अष्टादशविद्याश्चाधुनोद्देशादिक्रमेण स्तोकं प्रदर्श्यन्ते—

तत्र—ऋग्यजुःसामाथर्वभेदेन वेदाश्चत्वारः । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिःशास्त्रं छन्दोविचितिरिति षड्वेदाङ्गानि । पुराणानि न्यायविस्तरः मीमांसा धर्मशास्त्रमिति चत्वार्युपाङ्गानि । आयुर्वेदधनुर्वेदगान्धर्वार्थशास्त्राणीति चत्वार उपवेदा इति मिलित्वा संकलनयाऽष्टादश विद्या भवन्ति । तत्र च महापुराणेषूपपुराणानामन्तर्भावः । न्यायनये वैशेषिकनयस्यान्तर्भावः । मीमांसायां वेदान्तस्यान्तर्भावः । धर्मशास्त्रे च महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां चान्तर्भावः । एवमष्टादशविद्यारूपाण्येतावन्ति ह्यास्तिकानां धर्मप्रस्थानानि भवन्ति । अन्येषामेकदेशिनां धर्मप्रस्थानानामेष्वेवान्तर्भावः । इत्थमिह साक्षात्परम्परया परमार्थोपयोगिनां वेदोपाकरणानामेव प्रस्थानानां भेदो दिङ्मात्रेण दर्शितः ।

अथैतेषां प्रस्थानानां स्वरूपभेदहेतुः प्रयोजनभेदस्तावत्किंचिदुच्यते— तत्र धर्मप्रतिपादकमपौरुषेयं वाक्यं वेदः । स च मन्त्रब्राह्मणात्मकः । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' ( आप० श्रौ० परि० ) इति तत्स्वरूपस्यान्यत्रोक्तेः । तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । ते चर्ग्यजुःसामभेदेन त्रिविधाः । अथर्वणवेदस्यैतेषु त्रिष्वेवान्तर्भूतत्वेन पृथक्तया‌ऽनभिधानम् । तदेवं निरूपिता मन्त्राः । मन्त्रव्याख्यानरूपं ब्राह्मणमपि त्रिविधम् । विधिरूपमर्थवादरूपं तदुभयविलक्षणं चेति । तत्र विध्यादीनां लक्षणभेदादिविस्तरोऽन्यतोऽवसेयः । तदेतद्ब्राह्मणं च पुनरष्टविधम् । तदुक्तं बृहदारण्यके— 'इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि व्याख्यानान्यनुव्याख्यानान्यस्यैव निःश्वसितानि ' इति । तत्र कथाप्रतिपादक इतिहासः । विश्वस्य पूर्वावस्थानिरूपकं पुराणम् । उपासनात्मविद्याप्रतिपादिका विद्याः । या चोपास्यदेवरहस्यप्रतिपादिका सोपनिषत् । ये मन्त्राः श्लोकवत्पठ्यन्ते ते श्लोकाः । संक्षिप्तार्थप्रतिपादकं सूत्रम् । विस्तृतार्थप्रतिपादकं व्याख्यानम् । व्याख्यानस्यापि स्फुटतापादकमनुव्याख्यानम् । एता-

न्यष्ट ब्राह्मणानि । शिक्षाकल्परहस्यादीनां च वेदसाङ्गतापादकत्वमेव मन्त्रब्राह्मणयोर्व्याख्येयव्याख्यानताभावोऽस्ति । तच्च ' मान्त्रवर्णिकम् ' इति सूत्रव्याख्याने प्रतिपादितं वृत्तिकारैः । एवं च कर्मकाण्डगुणकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च हौत्राध्वर्यवौद्गात्रप्रयोगत्रयरूपेण यज्ञकर्मविभागनिर्वाहार्थं भिन्नः । अथर्ववेदस्तु चतुर्थो वेदत्रयव्यवशिष्टब्रह्मत्वकर्तव्यताप्रतिपादकोऽपि ( गार्ह्याणि कर्माणि ) शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेन सर्वोपयोग्येव । आचार्यप्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः सन्ति । तज्ज्ञानं च चरणव्यूहाख्यवैदिकग्रन्थाद्बोध्यम् ।

अथ षण्णां शिक्षादिवेदाङ्गानां च प्रयोजनं तावदुच्यते । तत्र शिक्षाया व्याकरणस्य च सुस्पष्टवर्णोच्चारपदसाधुत्वविज्ञानार्थमुपयोगः । मन्त्रपदार्थज्ञानार्थं निरुक्तस्योपयोगः । तत्र हि निरुक्ते नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निर्वचनेन निरूप्य वैदिकपदानामर्थः प्रदर्शितः । एवमृङ्मन्त्राणां पादबद्धानुष्टुबादिच्छन्दोविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोज्ञानार्थं पिङ्गलविरचितायाश्छन्दोविचितेरुपयोगः । एवं वैदिककर्मदर्शादिकालज्ञानार्थमादित्यप्रभृतिप्रणीतस्य ज्यौतिषस्योपयोगः । एवं शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषविज्ञानायाऽऽश्वलायनसांख्यायनसत्याषाढापस्तम्बबौधायनवाधूलभरद्वाजवैखानसाग्निवेशजैमिनिमानववराहमैत्रायणीकात्यायनपारस्करलाट्यायनद्राह्यायणगोभिलखादिरकौशिकादिप्रणीतानां कल्पसूत्राणामुपयोगः । एवं निरूपितः षण्णां वेदाङ्गानां प्रयोजनभेदः ।*

अथ चतुर्णामुपाङ्गानां प्रयोजनभेदस्तावत्किंचिदुच्यते । तत्र सर्गप्रतिसर्गमन्वन्तरवंशवंश्यानुचरितप्रतिपादकानि भगवता बादरायणेन निरूपितानि पुराणानि । तानि च महापुराणोपपुराणोपोपपुराणभेदाच्चतुःपञ्चाशत् । तेषां पुराणानां च सर्गप्रतिसर्गादिज्ञानं सद्धर्माचरणप्रवृत्तिदर्शनमेव सम्यक्प्रयोजनम् । न्याय आन्वीक्षिकी विद्या गौतमप्रणीता । प्रमाणप्रमेयादिषोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानान्निःश्रेयसाधिगम एव तत्प्रयोजनम् । कणादादिप्रणीतं वैशेषिकं शास्त्रमपि सप्तपदार्थवि(व्यु)त्पादनैकप्रयोजनम् । तच्च न्याय एवान्तर्भूतमित्युक्तं प्राक् ।

मीमांसा द्विविधा—धर्ममीमांसा शारीरमीमांसा चेति । तत्र (द्वादशाध्यायी) । षोडशाध्यायी । धर्ममीमांसा 'अथातो धर्मजिज्ञासा' इत्यारभ्य (अन्वाहार्ये च दर्शनात् । ) 'यथा याज्यसंप्रैषो यथा याज्यसंप्रैषः' इत्यन्ता भगवता जैमिनिना प्रणीता । तस्याश्च धर्मप्रमाणादिविज्ञानपूर्वककर्मकाण्डव्यवस्थापरिज्ञानायोपयोगः । शारीरकमीमांसा च—

* तद्विषये विशेषतोऽत्र पृथग्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः

'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य--'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान्न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता। तस्याश्च जीवब्रह्मैक्यसाक्षात्कारः प्रयोजनम्।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षशातातपपराशरगोतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि। वर्णाश्रमधर्मविशेषविज्ञानमेवैषां प्रयोजनम्। एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं चेतिहासत्वेन प्रसिद्धे। ते च धर्मशास्त्र एवान्तर्भूते इत्युक्तं प्राक्। एवं सर्वदेवसाधारणमन्त्रशास्त्रं श्रीमहादेवब्रह्मगौतमादिप्रणीतं धर्मशास्त्र एवान्तर्भूतम्। स्वेष्टदेवतायाः सकाशात्स्वाभीप्सितफलप्राप्तिस्तत्प्रयोजनम्। एवं निरूपितश्चतुर्णामुपाङ्गानां प्रयोजनभेदः।

अथ चतुर्णामुपवेदानां प्रयोजनभेदस्तावत्किंचिदुच्यते। वेदचतुष्टयस्य च क्रमेण चत्वार उपवेदाः। तत्रर्ग्वेदोपवेदस्य ब्रह्मप्रजापत्यश्व्यादिनिर्मितस्याऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति। सूत्रं शारीरमिन्द्रियं चिकित्सा निदानं विमानं कल्पं प्रसिद्धिश्चेति। कामशास्त्रस्याप्यायुर्वेद एवान्तर्भावः। सुश्रुतेन वाजीकरणाख्यकामशास्त्रस्याभिधानात्। एवं समस्तस्याऽऽयुर्वेदस्य रोगतद्धेतुरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम्। तच्च मोक्षसाधनीभूतशरीरारोग्यसंपादकत्वेन मोक्षोपयोग्येव। एवं यजुर्वेदोपवेदो धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम्। एवं सामवेदोपवेदो गान्धर्वं शास्त्रं भरताचार्येण प्रणीतम्। तत्र नृत्यगीतवाद्यभेदेन बहुविधोऽर्थः प्रपञ्चितः। तस्य गान्धर्ववेदस्य देवताराधननिर्विकल्पकसमाध्यादिसिद्धिः प्रयोजनम्। रसशास्त्रं च बहुविधं भरतेनैव प्रणीतं गान्धर्ववेदान्तर्भूतम्। तच्च रसरीतिशब्दालंकारार्थालंकारनायकनायिकादिवर्णनरूपम्। अथार्ववेदोपवेदोऽर्थशास्त्रम्। तच्चैहिकसर्वसुखोपलब्धिप्रयोजनम्। अथ च तदनुसार्येव नीतिशास्त्रमपि मन्वादिभिः सूत्रितं कामन्दकादिभिः प्रणीतम्। तत्संधिविग्रहादिभेदैरनेकधा। लौकिकसर्वव्यवहारनैपुण्यमेव तत्प्रयोजनम्। एवमश्वशास्त्रं गजशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानाशास्त्राणि शालिहोत्रादिनानामुनिभिः प्रणीतानि। तेषां च सर्वेषां लौकिकतत्तत्प्रयोजनभेदो द्रष्टव्यः।

एवमष्टादश विद्याः सप्रयोजनाः संक्षेपतो नामनिर्देशेन प्रोक्ताः। एवमेव कपिलमुनिप्रणीतं सांख्यशास्त्रं पतञ्जलिमुनिप्रणीतं योगशास्त्रं भगवता पशुपतिना निर्मितं पाशुपतशास्त्रं नारदादिभिः कृतं पाञ्चरात्रादिकं वैष्णवशास्त्रं चेत्येवमादिर्वेदानुकूलः प्रस्थान-

भेदः प्रदर्शितः । इत्थं हि वेदराशिमयस्य भगवतो ज्ञानमयं शरीरमित्याख्यायते । एतस्माद्वेदमयाद्ब्रह्मण एव सकलसृष्ट्युत्पत्त्यादिव्यवस्था प्रचाचलीतीति सर्वमनवद्यम् ।

अथ प्रकृतमनुसरामः । यदुक्तं प्राग्वेदमयस्य भगवत ( उपाङ्गेषु ) अङ्गेषु परिगणनमिति । तद्विषयेऽधुना किंचिद्विवेकः प्रस्तूयते—'यदृचोऽध्यगीषत' ( तै० आ० २।९ ) इत्युपक्रम्य ' पुराणानि कल्पान् ' ( तै० आ० २ । ९) इति कल्पाः । ' कल्पसूत्राणि प्रयोगप्रतिपादकानि' इति माधवः । तथा चाथर्ववेदीयगोपथब्राह्मणे— 'एवमिमे सर्वे वेदा निर्मिताः सकल्पाः' ( गो० पू० प्र० २ ९ ) इति । तथा च मुण्डकोपनिषदि— 'तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते' ( मु० १।२।५ इति । कल्पः सूत्रग्रन्थः । अनुष्ठेयक्रमः कल्प इत्यर्थः ।

कल्पसूत्राणां स्वतःप्रामाण्याधिकरणे ( जै०सू० १।३।७ ) । कल्पसूत्राणि किं स्वतन्त्रतया प्रमाणमुत परतन्त्रतयेति विप्रतिपत्तौ तानि पौरुषेयाणि—उतापौरुषेयाणीति चिन्तायां प्रामाण्यान्यथानुपपत्तेरपौरुषेयत्वेन स्वतन्त्रतया प्रामाण्यमेव कल्पसूत्रादीनामिति ब्रूमः । मूलकल्पने गौरवात् । ' षडङ्गमेके ' इति स्मरणात् । कल्पसूत्रेषूपलभ्यमानानां प्रत्यक्षश्रुतिवाक्यानां पौरुषेयत्वे सार्थक्यस्य दुरुपपादत्वात् । सत्याषाढीयादिसमाख्यानां शाकलादिवदुपपत्तेः । ' पुराणानि कल्पान् ' ( तै० आ० २।९ १० ) इति कल्पानामपि अध्ययनविधिदर्शनाच्चेति पक्षोपक्षेपः । तन्निराकरणं च—सत्याषाढीयादिसमाख्यानां दृढकर्तृस्मरणात्प्रवचननिबन्धनत्वायोगेन पौरुषेयत्वस्याक्षतत्वात् । दुर्बोधोपसंहारार्थेषु कल्पेषु सुबोधकैः शब्दैः प्रत्यक्षनिबन्धनस्याप्यावश्यकत्वात् । नित्यब्रह्मयज्ञविधिविषयत्वस्य प्रवाहनित्यतयाऽप्युपपत्तेश्च न स्वतन्त्रतया कल्पसूत्रजालं प्रमाणमिति । अर्थवादाभावोऽप्यत्र कल्पस्यावेदत्व एव लिङ्गम् । प्रयोजनं च—'सर्वोऽपरपक्षः' ( खा० गृ० ७।१ ) इत्याद्यंशेषु संनिहिताभिः—'अमावास्याय म् ' (स० सू० १।३।१९ ) इत्यादिप्रत्यक्षश्रुतिभिर्बाधितेषु कल्पसूत्राणामप्रामाण्यम् । अत्र भाष्यकृदभिमतं ' सर्वोऽपरपक्षः ' इत्याद्युदाहरणं चिन्त्यम् । पूर्वपक्षापरपक्षयोरपि दर्शपूर्णमासकालत्वस्य प्रत्यक्षश्रुतिसिद्धत्वात् । दर्शपूर्णमासकालातिक्रमप्रायश्चित्तपथिकृदिष्टेस्तत्समानतन्त्रतानिन्दापूर्वकं दार्शपूर्णमासिकस्याऽऽग्नेययागस्यैव पथिकृद्गुणकत्वविधायिन्यां सूत्रकाराद्युदाहृतायाम्—' अथैकेषां विवा एतस्य ' ( स० श्रौ० १९।३।२ ) इत्यादिशाखान्तरीयश्रुतावत्रगम्यमानया निन्दया नहि निन्दान्यायेन पथिकृद्गुणकत्वप्रशंसामात्रपरया विकल्पेन समानतन्त्रताया अपि शाखान्तराभिमतत्वेनानुमिते ' समानतन्त्रे

वा ' ( स० श्रौ० १९।४।३ ) इत्यादिभिः सत्याषाढादिवाक्यैरनुगृहीताया अन्यथा-नुपपत्त्या कालान्तरेऽपि दर्शपूर्णमासकरणस्य संभवाच्च । यच्च वार्तिकादिषु— 'अविशे-षादुभौ वा' ( का० श्रौ० ३।८४ ) इत्यादिसूत्राणां श्रुतिविरोधेन तत्तन्न्यायाभासमूल-कतया चाप्रामाण्यमभिप्रेतं तदप्यनुपपन्नमिति द्रष्टव्यम् ।

अयं च सत्याषाढाख्यसूत्रकारः कस्मिन्नदीतीरे कस्मिन्क्षेत्र आसीदिति वृत्तं किंचि-न्निवेदयामः ।

महर्षिवैशम्पायनवंशसंभूतो महामुनिः सत्याषाढः सह्याद्रेः पूर्वभागे परशुरामक्षेत्रे वा हरणकाशीनदीतीरे बभूवेति स्कन्दोपपुराणतोऽवगम्यते । एकदा मुनिः सत्याषाढः स्वाश्रममागच्छन्तं परमपूज्यं वेदव्यासमपश्यत् । यथावत्कृतातिथ्यं सुस्थितं च तं पप्रच्छ देवेषु कः श्रेष्ठ इति । तदा तस्य मुखाच्छिव एव श्रेष्ठ इत्यवगत्य तपसे हरण-काशीं ययौ । ततश्च तपसा सुसंतुष्टः शंकरः प्रत्यक्षीभूय तस्मै वरानिष्टान्वितताार । एवं शिवप्रसादतोऽधिगतदिव्यचक्षुर्मुनिः सत्याषाढो हिरण्यकेशी सर्वत्र पूज्यो बभूवेति सुविदितमेव प्रायो निगमविदाम् । तस्य च सूत्रानुयायिनः परशुरामक्षेत्रे ( देशे देशे ) बहवो निवसन्ति । तस्मिन्सूत्रे पदार्थाश्च संक्षेपतो लिख्यन्ते—

' व्यासाद्गुरोरधिगतार्थयजुःसमाख्य-
वेदप्रवर्तकमुनेरधिगत्य शाखाम् ।
देहेन तित्तिरखगाकृतिना मुनीन्द्रा-
नध्यापयन्मुनिवरो व्यभजत्स्वशाखाम् ॥
हिरण्यकेशी भगवान्सत्याषाढाभिधानकः ।
सप्तविंशतिप्रश्नाख्यं कल्पसूत्रमुदैरयत् ॥
आद्यप्रश्नद्वये दर्शपूर्णमासौ सुविस्तरौ ।
तृतीये साङ्गमाधानमग्निहोत्रसमान्वितम् ॥
चतुर्थे पशुबन्धं च चातुर्मास्यानि पञ्चमे ।
षष्ठे हवियाजमानं प्रवासविधि मे( रे )व च ॥
ज्योतिष्टोमाध्वर्यवं च त्रिभिः प्रश्नैरुदैरयत् ।
दशमे तद्याजमानं ब्रह्मत्वं दक्षिणाविधिम् ॥
प्रश्नद्वयेऽग्निचयनमुखासंभरणादिकम् ।
त्रयोदशे वाजपेयमश्वमेधं चतुर्दशे ॥
ततः पञ्चदशे प्रश्ने प्रायश्चित्तं सविस्तरम् ।
अग्निहोत्रं चैष्टिकं च पाशुकं सौमिकं तथा ।

षोडशे तु द्वादशाहं महाव्रतविधिं गवाम् ।
ततः सप्तदशप्रश्ने एकाहाहीनसत्क्रियाम् ॥
अष्टादशे ततः प्रश्ने सत्राणि विविधानि च ।
एकोनविंशे विंशे तु गृह्यकर्मविनिर्णयम् ॥
अथैकविंशे प्रश्ने तु हौत्रप्रवरनिर्णयौ ।
काम्येष्टिकाम्यपशवः प्रश्ने द्वाविंश ईरिताः ॥
त्रयोविंशे च कौकिलीं सौत्रामणीं सकाठकाम् ।
चतुर्विंशे प्रवर्ग्यं च सप्रायश्चित्तकं तथा ॥
पञ्चविंशे विशेषेण विहारयोगनिर्णयम् ।
षड्विंशे सप्तविंशे तु सर्वधर्मानशेषतः ॥
एवं सामान्यतः सर्वप्रश्नानामर्थसंग्रहः ।
पुनरेव हविः सोमः पाकयज्ञ इति त्रिधा ॥
अग्निहोत्रं दर्शपूर्णमासावाग्रयणः पशुः ।
चातुर्मास्यं पिण्डयज्ञः सौत्रामणी हविः क्रियाः ।
अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यषोडशिनौ तथा ।
वाजपेयातिरात्राप्तोर्यामाः सोमक्रतोर्भिदाः ॥
होमौ पाकावमाश्राद्धं माध्यावर्षं तथाऽष्टकाः ।
श्रवणाकर्माग्रहायणीः पाकयज्ञाः स्मृता बुधैः ॥

इत्येवं भगवान्सत्याषाढः सप्तविंशतिप्रश्नात्मके सूत्रे श्रौतगार्ह्यसामयाचारिकान्धर्मा-न्व्याख्यातवान् ।

ननु—'चोदनालक्षणोऽर्थो धर्मः' (जै० सू० १।१।२) इत्यत्र परोक्षापरोक्षद्विवि-धचोदनाया अपि संग्रहो विद्यत इति प्रत्यक्षवेदस्य विधिमन्त्रार्थवादरूपस्य प्रामाण्यविचारानन्तरं परोक्षतद्वाक्यप्रामाण्यविचार इत्युपपन्नम् । परोक्षत्वं चेदं न मन्वा-दिदृष्ट्या किंत्वस्मदादिदृष्ट्या । मन्वादीनां तु तदपि प्रत्यक्षमेव । परंतु तत्तद्वाक्यं मन्वादिस्मृतिमूलभूतं विप्रकीर्णशाखागतमिति न तस्यापि मन्वादिभिः संप्रदायोच्छेदा-दिभिया पाठनं स्वकीयस्मृतीनामिव कृतमिति न दोषः ।

अयं भावः—'स्वाध्यायोऽध्येतव्यः' (तै० आ० २।१५) इति विधिवाक्ये अध्या-यस्य स्वत्वविशेषणादेकवेदगतस्वपरम्पराप्राप्तशाखाध्ययनम् ।

'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्' ।

इति वचनाद्वेदान्तरीयसर्वशाखाध्ययनं च विधीयते। तथा च कृष्णयजुःशाखाध्यायिनां यजुर्वेदगतशुक्लयजुःशाखाध्ययनादिकं, ऋग्वेदगतस्वपरम्पराप्राप्तैकशाखाध्यायिनां तद्वेदगतशाखान्तराध्ययनं च निषिद्धं गम्यते। गुणोपसंहाराधिकरणे च ( २। ४। २ ) सर्वशाखीयानां धर्मे सर्वैरनुष्ठानं कर्तव्यमसति विरोधे, सति तु विरोधे व्यवस्थितविकल्पादिकं निरूपितम्। तथा च शाखान्तरीयाणां धर्माणां शाखान्तरीयवाक्याध्ययनासंभवात्तेषामप्रत्यक्षत्वेऽपि मन्वादिस्मृतिमात्रपर्यालोचनया तादृशं किमपि वाक्यं शाखान्तरे स्यादिति विश्वासेन तदर्थानुष्ठानमावश्यकम्।

तत्र च मन्वादिभिः स्वसाक्षात्कृतस्यापि शाखान्तरीयवाक्यस्याध्ययनं यदि क्रियेत तर्हि 'स्वाध्यायोऽध्येतव्यः' ( तै० आ० २। १९ ) इति विधिविच्छेदः कृतः स्यात्।

सत्याषाढादिकल्पसूत्रकारमते ह्यपूर्वस्य फलदातृत्वम्। आपातत ईश्वरानङ्गीकारः। मन्त्रमयी देवता, न विग्रहवती। अतीन्द्रियसुखाभावः। क्रियापरः सर्वो वेदः। वटबीजवत्संसारोऽनादिः। स्वर्गसुखप्राप्तिरेव कर्मणा मोक्षः। क्रियान्विते शब्दशक्तिः। अख्यातिवादः। सर्वं ज्ञानं प्रमैव। स्थूलशरीराद्भिन्न आत्मा परमार्थनित्यः। धर्मस्य ( कर्मणः ) परमेश्वरबुद्ध्या निष्कामतयाऽऽचरणेऽन्तःकरणशुद्ध्या क्रमेण ब्रह्मात्मैक्यज्ञानेन कैवल्यमुक्तिरिति सत्याषाढगुरोर्व्यासमतं ब्रह्मकाण्डसिद्धान्तश्च।

शास्त्रान्तरेषु यावन्ति पुस्तकान्यतिगभीराणि दुरवगाहाणि च वर्तन्ते ततोऽन्यूनं तानि कल्पसूत्रेऽपि विद्यन्त इति न वयमल्पज्ञाः पारयामोऽस्य परिच्छेत्तुं गभीरतादिकम्।

अस्य सत्याषाढसूत्रस्य प्राचीनं कौशिकगोत्रोत्पन्नभट्टमहादेवकृतवैजयन्तीव्याख्यानं विस्तृतं प्रथमषट्कान्तं, ततः सप्तमप्रश्नादारभ्य दशमान्तं गोपीनाथभट्टकृतं ज्योत्स्नावृत्तिनामकं व्याख्यानमुपलभ्यते संमुद्रितं च। तत एकादशप्रश्नादारभ्यापरं नूतनं प्रयोगचन्द्रिकाव्याख्यानं महादेवदीक्षितसोमयाजिसंकलितं स्वतन्त्रम्। अत्रेदानीं मुद्रितुमारब्धं भागशः सत्वरं प्रकाश्येतेति विज्ञाप्य श्रीमतां विनायक गणेश आपटे बी. ए. तथा श्रीमतां दत्तात्रेय विष्णु आपटे बी. ए. आनन्दाश्रमव्यवस्थापकानां चाऽऽयुरारोग्यादि संपदे भगवन्तमुमारमणं रमारमणं च सविनयं प्रार्थयते—

**पुण्यपत्तने.**
**कार्तिकवदि द्वादश्यामिन्दुवासरे**
**शके १८४९ प्रभवसंवत्सरे**

**धारवाडग्रामनिवासी**
**दण्डवत्युपाह्वत्रिकाण्डमण्डनाचार्य-**
**महादेवदीक्षितः सोमयाजी।**

# सत्याषाढचयनसूत्रोपोद्घातः ।

सत्याषाढं नमस्कृत्य महादेवः सतां मुदे ।
तनुते तत्प्रसादेन करणीमिष्टकां शुभाम् ॥

अथ द्वितीयश्येनस्यैकविधस्येष्टकाकरणानि वक्ष्यन्ते । तत्राऽऽदौ पुरुषप्रमाणानयनम् । ' विधासप्तमकरणीं पुरुषस्थानीयां कृत्वा विहरेत् ' ( स० शु० सू० २९ । ९) इति शुल्बसूत्रम् । यावत्योऽग्नेर्विधाः सन्ति तासां सप्तमं या करोति सा विधा सप्तमकरणी । तां पुरुषस्थाने कृत्वा तया चाऽऽत्मपक्षपुच्छानि विहरेत् । अयमर्थः—यद्येकविधोऽग्निस्तं पञ्चदशधा विभज्य द्वौ भागौ समस्य समचतुरश्रं कृत्वा तस्य प्रमाणं पुरुषस्थाने कृत्वाऽनेनाऽऽत्मपक्षपुच्छानि विहरेत् । एवमेव द्विविधादिषु कुर्यात् । चत्वारि सहस्राण्यशीतिः सप्तमकरणीति ताः ( पुरुषः ) तेषां वर्ग एककोटिः षट्त्रियुतानि षड्युतानि चत्वार्ययुतानि षट्सहस्राणि चत्वारि शतानि । यद्यष्टविधं पुरुषवर्गमष्टाभिर्गणयित्वा पूर्वराश्यर्धेन संयोज्य तत्पञ्चदशभिर्विभज्य लब्धं द्विगुणीकृत्य मूले गृहीते ( स ) तस्य पुरुषो भवति । अपचये त्वरत्निप्रादेशानामभावान्नार्धसंयोग इतरदुपचयवदिति ।

अथ पुरुषानयनप्रकारः । विधासप्तमकरण्या अङ्गुलयः १२० । एत एव चतुस्त्रिंशताऽङ्कैः ३४ गुणिताश्चे ४०८० तिला भवन्ति । एते तिला एतैरेवाङ्कैर्गुणिता १६६४ ६४०० वर्गसंज्ञा भवन्ति । वर्गेषु १५० भक्तेषु सत्सु लब्धाङ्काः ११०९-७६० । लब्धाङ्केषु द्विगुणितेषु सत्सु प्राप्ताङ्काः २२१९५२० । एतेषामङ्कानां त्यक्त्वाऽन्त्याद्विषमाद्वर्गं मूलं द्विघ्नं न्यसेत्समे तद्धृते लब्धवर्गं हित्वाऽग्राद्विषमात्पुनः, इति रीत्या मूलगणिते कृते लब्धमूलाङ्काः १४८९ एते च तिलाः । एतेषु ३४ भक्तेषु सत्सु ४३ अङ्गुलयः अवशिष्टाः २७ तिला मूलावशेषितं सैकमिति रीत्या शिष्टतिलेष्वेकाङ्के मिलिते अङ्गुलयः ४३ तिला २८ अयमेकविधस्याग्नेः पुरुषो भवति । एतत्प्रमाणेनैव शुल्बोक्तप्रकारेणाग्निमानेष्टकाकरणादीनि विधेयानि ।

तत्रेयं प्रक्रिया—अष्टाविंशतितिलाधिकत्रिचत्वारिंशदङ्गुलप्रमाणः पुरुषः ४३ तिलाः २८ । एकत्रिंशत्तिलाधिकैकविंशत्यङ्गुलयः २१ तिलाः ३१ पुरुषार्धम् । सार्धद्वात्रिंशत्तिला अधिकदशाङ्गुलयः १० तिलाः ३२ पुरुषचतुर्थोऽशः । अष्टमांशो नवतिलाधिकषडङ्गुलयः ६ तिलाः ९ पुरुषसप्तमः सपादषोडशतिलाधिपञ्चाङ्गुलयः ५ तिलाः १६ पुरुषाष्टमोऽष्टमांशसहितपञ्चविंशतितिलाधिकाङ्गुलिद्वयं २ तिलाः २९ पुरुषषोडशोष्टादशतिलाधिकपञ्चदशाङ्गुलयः १५ तिलाः १८ पुरुषचतुर्थः सविशेषः षड्विंशतितिला अधिकसप्ताङ्गुलयः ७ तिलाः २६ चतुर्थं सविशेषार्धं पादोनपञ्चदशतिला अधिकषोडशाङ्गुलयः १६ तिलाः १४ त्रिगुणिताष्टमः पञ्चविंशतितिला अधिकत्पन

दशाङ्गुलयः १४ तिलाः २९ पक्षेष्टकादीर्घकरणी दशतिलाधिकदशाङ्गुलयः १० तिलाः १० पक्षेष्टकाह्रस्वकरणी द्वाविंशतितिलाधिकाङ्गुलिद्वयं २ तिलाः २२ पक्षकरणीसप्तमः—अष्टमांशेन त्रयोविंशतितिलाधिकपञ्चाङ्गुलयः ५ तिलाः २३ पक्षकरणीसप्तमः। पक्षायामस्त्रयोदशतिलाधिकनवत्यङ्गुलयः ९० तिलाः १३ चतुर्दशतिलाधिकैकोनाशीत्यङ्गुलयः ७९ तिलाः १४ पक्षाग्रव्यतिरिक्तपक्षायामश्चतुर्विंशतितिलाधिकैकोनचत्वारिंशदङ्गुलयः ३९ तिलाः २४ पक्षकरणी अष्टादशतिलाधिकाष्टादशाङ्गुलयः १८ तिलाः १८ पक्षनमनी[1]। सप्तदशतिलाधिकपट्चत्वारिंशदङ्गुलयः ४६ तिलाः १८ अष्टादशकरणी।

अत्र प्रक्रियायामुदाहृतप्रमाणानां केषांचिदिष्टकासूपयोगः। केषांचिदग्निमाने।

अथेष्टकाकरणानि। तत्र तावद्द्वितीयश्येनेष्टकाः पड्विधाः षोडश्यर्धा पादा पक्षा पक्षमध्यीया पक्षाग्रीया इति।

तत्राऽऽदौ षोडशी। षोडशीं चतुर्भिः परिगृह्णीयादष्टमेन त्रिभिरष्टमैश्चतुर्थेन चतुर्थसविशेषेण इति सूत्रम्। अस्यार्थः—षोडशीसंज्ञकामिष्टकां चतुर्भिः फलकैः संपादयेत्। अष्टमेन सपादषोडशतिलाधिकपञ्चाङ्गुलिकेनैकं फलकम्। त्रिभिरष्टमैः, त्रिगुणिताष्टमेनेत्यर्थः। पादोनपञ्चदशतिलाधिकषोडशाङ्गुलिकेनैकं, इमे पार्श्वफलके। चतुर्थेन सार्धतिलोनैकादशाङ्गुलिकेनैकं तिर्यक्। चतुर्थसविशेषेण अष्टादशतिलाधिकपञ्चदशाङ्गुलिकेनैकमक्षणया तिर्यक्। इमे तिर्यक्फलके। एवं चत्वारि। एतैः फलकैः षोडशी कार्या। एवमग्रेऽपि ज्ञेयम्।

अथार्धेष्टकाः। अर्धेष्टकां त्रिभिर्द्वाभ्यां चतुर्थाभ्यां चतुर्थसविशेषणेति। अस्यार्थः पूर्ववत्। चतुर्थाङ्गुलयः ( चतुर्थम्—अङ्गुलयः ) १० तिलाः ३२। एवं द्वे चतुर्थसविशेषः। अङ्गुलयः १५ तिलाः १८ इदमेकम्। एवं त्रीणि फलकानि। एतैरर्धेष्टका कार्या। इयं त्रिकोणा।

अथ पादेष्टकाः। 'पादेष्टकां त्रिभिश्चतुर्थेनैकं चतुर्थसविशेषार्धाभ्यां च' इति। अर्थः पूर्ववत्। चतुर्थं, अङ्गुलयः १० तिलाः ३२ इदमेकम्। चतुर्थसविशेषार्धेऽङ्गुलयः ७ तिलाः २६ इमे द्वे। एवं त्रिभिः फलकैः पादेष्टका कार्या। इयमपि त्रिकोणा।

अथ पक्षेष्टकाः। पक्षेष्टकां चतुर्भिर्द्वाभ्यां चतुर्थाभ्यां सप्तमाभ्यां चेति[2]। अर्थः पूर्ववत्। चतुर्थमङ्गुलयः १० तिलाः ३२ इमे द्वे पार्श्वे फलके। सप्तमम्—अङ्गुलयः ६ तिलाः ९ इमे द्वे फलके तिर्यक्। एतैश्चतुर्भिः फलकैः पक्षेष्टका कार्या।

दीर्घचतुरश्रं कृत्वाऽनन्तरं नमयेत्। नमनप्रकारमाह सूत्रकारः—'पक्षकरण्याः सप्तमं तिर्यङ्मानी पुरुषचतुर्थं च पार्श्वमानी तस्या अक्षणया रज्ज्वा करणं प्रजम्भयेत्'

---

१ नक्षनमनी सप्तमः। २ चेति।

इति । अस्यार्थः-पूर्वोक्तप्रकारेण दीर्घचतुरश्रं चतुष्फलकैः कृत्वाऽऽग्नेयकोट्यामेकां रज्जुं प्रबद्ध्य वायव्यकोट्यामेकां रज्जुं प्रबध्य च बलेन रज्ज्वाऽऽकर्षयेत् । यथा कर्षणे कृते पार्श्वमान्योरन्तरालमृजुत्वेन पक्षकरणी सप्तमेन किंचिदूनत्रयोविंशतितिलाधिकपञ्चाङ्गुलिकेन समं भवति तथाऽऽकर्षयेत् । तिर्यङ्मान्योरन्तरालं तु पुरुषचतुर्थमेकं न तस्य ह्रासः किंतु पार्श्वमान्योरन्तरालस्यैव । एवं च वायव्यकोणमारभ्याऽऽग्नेयकोणपर्यन्तं पञ्चविंशतितिलाधिकचतुर्दशाङ्गुलयो १४ तिलाः २९ भवन्ति । नैर्ऋत्य(ती)कोणमारभ्यैशानीपर्यन्तं दशतिलाधिकदशाङ्गुलयः १० तिलाः १० भवन्ति । अथ पक्षमध्यीयाः । पक्षमध्यीयां चतुर्भिर्द्वाभ्यां द्विसप्तमाभ्यां चेति । अर्थः पूर्ववत् । चतुर्थे अङ्गुलयः १० तिलाः ३२ इमे द्वे पार्श्वे फलके । द्विसप्तमेऽङ्गुलयः १२ तिलाः १७ इमे द्वे तिर्यक्फलके । एवं चतुर्भिः फलकैः पक्षमध्यीया कार्या ।

एवं दीर्घचतुरश्रं कृत्वाऽनन्तरं नमयेत् । नमनप्रकारमाह सूत्रकारः—'पक्षनमन्याः सप्तमेन फलकानि नमयेत्' इति । अस्यार्थः—पूर्वोक्तचतुरश्रस्य द्विसप्तमात्मकफलकयोर्मध्यभागौ संनमयेत् । अथ ( त्र ) मध्ये नमने कृते पक्षमध्यीयां भागद्वयं पक्षकरण्याः सप्तमेन किंचिदूनत्रयोविंशतितिलाधिकपञ्चाङ्गुलिकेन समं भवति, तथा नमयेत् । तिर्यङ्मान्योरन्तरालं तु पुरुषचतुर्थमेव । अष्टादशतिलाधिकाष्टादशाङ्गुलात्मकपक्षनमन्याः सप्तमेन द्वाविंशतितिलाधिकद्व्यङ्गुलात्मकेनैकस्मिन् तिर्यक्फलकमध्यभाग उन्नतिं चैकस्मिन्निन्निर्तिं ( म्नतां ) च कुर्यात् ।

तथा चायं निष्कर्षः । एकां पक्षेष्टकामाग्नेयोन्नतकोणां संस्थाप्य तद्दक्षिणतोऽन्यामीशानोन्नतकोणां संश्लेषयेत् । संश्लिष्टमध्यफलके द्वे उद्धरेत् । एवं कृते पक्षेष्टकाद्वयपरिमिता षट्कोणा भवन्ति ।

अथ पक्षाग्रीयाः । पक्षाग्रीयां त्रिभिश्चतुर्थेनैकं चतुर्थसप्तमाभ्यामेकं चतुर्थसविशेषसप्तमाभ्यां चेति । अर्थः पूर्ववत् । चतुर्थे—अङ्गुलयः १० तिलाः ३२ । इदं पार्श्वफलकम् । चतुर्थसप्तममङ्गुलयः १७ तिलाः ७ चतुर्थसविशेषसप्तमं—अङ्गुलयः २१ तिलाः २७ इमे द्वे तिर्यक्फलके । एवं त्रिभिः फलकैः पक्षाग्रीया कार्या ।

एवं चेशानोन्नतकोणामेकां पक्षां संस्थाप्य तद्दक्षिणतः पूर्वभागस्थचतुर्थसविशेषपूर्वफलकामर्धां संश्लेषयेत् । संश्लिष्टमध्यफलके द्वे उद्धरेत् । एवं कृते पक्षेष्टकार्धेष्टकोभयपरिमिता पञ्चकोणा भवन्ति । एवं षड्विधाः । सहस्रचितिपक्षे षड्विधेष्टकानां प्रत्येकैकाः संख्याः—षोडश्यः ( १९२ ) अर्धेष्टकाः ( १०४ ) पादेष्टकाः ( १६८ ) पक्षेष्टकाः ( ४६४ ) पक्षमध्यीयाः ( २४ ) पक्षाग्रीयाः ( ४८ ) इति संभूय संख्याः (१०००) एतासामिष्टकानामाकाराः प्रदर्श्यन्ते—आदौ षोडश्याः—अर्धेष्टकायाः—पादेष्टकायाः—पक्षेष्टकायाः ।

त्रिगुणिताष्टमङ्गुल्यः १६ तिला १४॥।




पु. च. सवि. अ. १५ ति. १८




पु. च. अं. १० ति. ३२॥




पुरु. चतु. अं. १० ति. ३२॥




द्वि सप्तमं फलकं अं. १२ ति. १७॥।




पुरु च. सप्तमं. अं. २१ ति. २७




अथ गार्हपत्यधिष्णियानां चतुरस्र करणत्व मित्येकः पक्षः पीरमण्डल-मित्यपरः तत्र चतुरस्र पक्षे करणानि आकारः परिमाणं च वक्ष्यन्ते

अंगुल ३२

अं.१३ ति.२४ | गार्हपत्येष्टका सं.१०५ | अं.१३ ति.२४

अंगुल ३२

होतुर्धिष्णियाकारः

अं.८

अं.६ | संभूय सं. १२ ब्राह्मणाच्छं. ९ | अं.६

अं.८

आग्नीध्रीयधिष्णियाकारः

अं.८

अं.८ | संभूय.८ | अं.८

अं.८

अथ प्रशास्तृ पोतृ नेष्टृच्छावाक शामित्र चात्वालावभृथधिष्णियानां करणानि, आकारः परिमाणञ्च प्रदर्श्यन्ते।

प्रशास्त्राद्यष्टानां धिष्णियाकारः

अं.१२

अं.६ | संभूय सं. ५६ ब्राह्मणाच्छंसि २ | अं.६

अं.१२

मार्जालीयधिष्णियेष्टकाकारः

अं.१२

अं.८ | संभूय.६ | अं.८

अं.१२

षोडश्यादयः सर्वा इष्टकाः सार्धत्रयोदशतिलाधिकषडङ्गुलोच्छ्रायाः कार्याः। एतासां पाकवशेन प्रमाणह्रास उपधानकाले पुरीषेण तां पूरयेत्। ब्राह्मणाच्छंसिधिष्णियेष्टका एकादश ( ११ ) तासां मध्ये नवहोतृधिष्णियेष्टका ( ९ ) द्वे हौत्रकधिष्णियेष्टके एवमेकादश ( ११ )। अथवा प्रशास्त्रादिधिष्णियानां करणमपि नास्त्येव। होतुमार्जालीयधिष्ण्याभ्यां, एव चरितार्थत्वात्। संप्रदायवशादत्र प्रदर्शितमस्माभिः। एवं धिष्णियानां पञ्च करणानि। एकविधेऽग्नौ। गार्हपत्यातिरिक्तधिष्णियानां चतुर्विंशत्यङ्गुलसमचतुरश्रता। परस्परमष्टादशाङ्गुलः संचारः ( संचरः ) सदसि पृष्ठ्याया दक्षिणत उत्तरतश्च द्वादशाङ्गुल इति। होतुर्धिष्णियदक्षिणतः प्रशास्तुः—उत्तरतो ब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानामाग्नीध्रीयादयः स्वस्वस्थानीयाः ( स्थानेषु )।

अथ विहारः। तत्र साग्निक्या वेदेर्द्विपदक्रमेण प्रमाणम्। एकविधे तु द्वादशाङ्गुलप्रमाणं पदम्। चतुर्विंशत्यङ्गुलात्मकप्रक्रमेण विमानम्। आदौ पञ्च पञ्चदशारत्न्यायामां त्रिंशदरत्निविस्तरां देवयजनयोग्यां भूमिं कृत्वा प्राक्पश्चिमप्रान्तमध्यदेशे शङ्कू निखाय तयोः शङ्क्वो रज्जुं प्रसारयेत्। एषा रज्जुः पृष्ठ्यासंज्ञिका। पश्चिमनिहिताच्छङ्कोः पुरस्तादनुपृष्ठ्यं षोडशप्रक्रमे शङ्कुः। प्रथमशङ्कोर्दक्षिणतः षट्प्रक्रमे शङ्कुः। एवमुत्तरतः। द्वितीयशङ्कोर्दक्षिणतः षट्प्रक्रमे शङ्कुः। एवमुत्तरतः। एवं षोडशारत्न्यायामो द्वादशारत्निविस्तारः प्राग्वंशः। प्राग्वंशस्य पुरस्तादनुपृष्ठ्यं त्रिषु प्रक्रमेषु शङ्कुः। एष शङ्कुर्महावेदेः पश्चिममर्यादा।

अथ महावेदिः पूर्वोक्तवेदिमर्यादा शङ्कोः पुरस्तादनुपृष्ठ्यं विंशतिशङ्क्वः। पृष्ठ्यान्तप्राचीशङ्कुमर्यादाशङ्कुभ्यां सह द्वाविंशतिः। तथाहि मर्यादाशङ्कुः प्रथमः। ततः—त्रया (३) ङ्कै (६) कै ( १ ) क ( १ ) भू ( १ ) चन्द्र ( १ ) दृक् ( २ ) चन्द्र- (१) द्वय (२) वह्निषु (३)। भू (१) द्व्ये (२) क (१) द्वि ( २ ) तथैकेषु (१) तथा द्व्ये(२) कै (१) क ( १ ) भूमिषु ( १ )। आदिमेन सहैवात्र स्युर्द्वाविंशतिशङ्क्वः। ( इति ) एतत्संख्याव्यवहितेषु प्रक्रमेषु शङ्कून्निहन्यात्। ततः षट्त्रिंशत्परिमितामेकां रज्जुमुभयतःपाशां कृत्वा तस्यां षोडशप्रक्रमे कर्षणार्थं लक्षणं कुर्यात्। अस्यां षोडशिका तिर्यङ्मानी विंशतिका अक्ष्णया रज्जुः। अन्यां रज्जुं द्वादशप्रक्रमपरिमितामुभयतःपाशां कुर्यात्। अस्या द्वादशिकेति संज्ञा। विमानकाले अभिमतशङ्कुषु द्वादशिकां प्रसार्य तयोः शङ्कोरेव षट्त्रिंशिकां, पाशौ प्रतिमुच्य वक्ष्यमाणस्थानानि कल्पयेत्। आद्यषष्ठयोर्द्वादशिकां प्रसार्य तत्रैव षट्त्रिंशिकां पाशौ प्रतिमुच्य षोडशिकां पश्चिमतः कृत्वा लक्षणेनापायम्य प्रथमशङ्कोर्दक्षिणतः पञ्चदशे शङ्कुः। एवमुत्तरतः। इयं महावेद्याः पश्चिममर्यादा। एवमग्रेऽपि विमाने क्रमो ज्ञेयः। द्वितीयशङ्कोर्दक्षिणतो दशप्रक्रमे शङ्कुः। उत्तरतोऽष्टप्रक्रमे शङ्कुः। एषा सदसः पश्चिममर्यादा। तृतीयचतुर्थयोः शङ्क्वोर्दक्षिणतो द्वादशाङ्गुले शङ्कुः। एवमुत्तरतः। अयं होतुर्धि-

ष्णियोऽरत्निपरिमितः समचतुरश्रो भवति । परस्परमष्टादशाङ्गुलः संचरोऽवशिष्यते होतुर्धिष्णियस्य दक्षिणतः प्रशास्तुः, तद्दक्षिणतो ब्रह्मसदनम् । होतुर्धिष्णियस्योत्तरतो ब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानां धिष्णिया होतृधिष्णियवत्कार्याः । षष्ठशङ्कोः पूर्ववत्सदो विमायास्मादेव शङ्कोरुत्तरत एकादशप्रक्रमे सप्तदशप्रक्रमे च शङ्कू । एषाऽऽग्नीध्रमण्डपस्य पश्चिममर्यादा । अष्टमशङ्कोर्दक्षिणतो द्वादशप्रक्रमे शङ्कुः । एष मार्जालीयस्य मध्यशङ्कुः । एवमुत्तरतः । एष आग्नीध्रीयस्य मध्यमशङ्कुः । नवमशङ्कोर्दक्षिणतः सार्धप्रक्रमचतुष्टये शङ्कुः । एवमुत्तरतः । इयं हविर्धानस्य पश्चिममर्यादा । दशमशङ्कोरुत्तरतः पूर्ववदाग्नीध्रमण्डपः । त्रयोदशशङ्कोरुत्तरतश्च चतुर्दशप्रक्रमे शङ्कुः । अयमुत्करः । ततः षट्त्रिंशिकायाः पाशयोर्विपर्यासं कुर्यात् । चतुर्दशशङ्कोर्दक्षिणत उत्तरतश्च पूर्ववद्धविर्धानम् । विंशतिशङ्कोरुत्तरतः सार्धपञ्चदशप्रक्रमे शङ्कुः । एष शामित्रः पूर्वप्रान्तशङ्कोर्दक्षिणतो द्वादशप्रक्रमे शङ्कुः । एवमुत्तरतः । इमौ महावेद्या अंसौ । इयं महावेद्याः प्राङ्मर्यादा । अस्मादेव शङ्कोरुत्तरतस्त्रयोदशप्रक्रमे शङ्कुः । एषा चात्वालदक्षिणमर्यादा । दक्षिण( तो ) हविर्धानस्य पश्चात्सार्धप्रक्रमद्वयं त्यक्त्वा पार्श्वयोरपि पादन्यूनप्रक्रमद्वयं त्यक्त्वाऽरत्निमात्रं समचतुरश्रं कुर्यात् । इदमुपरवाणां स्थानम् । एवं विमाय महावेदिं सदो हविर्धानमाग्नीध्रमण्डपं धिष्णियं चात्वालं च रज्ज्वा परिवेष्टयेत् । परिवेष्टितेषु तेषु संभूय प्रमाणम् । महावेदिः षट्त्रिंशत्प्रक्रमायामा पश्चात्त्रिंशत्प्रक्रमविस्तारा पुरस्ताच्चतुर्विंशतिप्रक्रमविस्तारा विषमदीर्घचतुरश्रा भवति । सदश्चाष्टादशप्रक्रमोदगायतं नवप्रक्रमविस्तारं भवति हविर्धानं तु नवारत्निविस्तारं नवायामं भवति । आग्नीध्रमण्डपं तु षट्प्रक्रमायामं षट्प्रक्रमविस्तारमर्धमन्तर्धिष्णियाश्चतुर्विंशत्यङ्गुलसमचतुरश्राः । चात्वालः शम्यामात्रः । औदुम्बरीस्थानं तु सदोमध्ये पृष्ट्याया दक्षिणतः प्रक्रमे । यूपस्थानं तु महावेद्याः पूर्वे वेद्यर्धं बहिर्वेदि, पूर्वप्रान्तशङ्कुरर्धमन्तर्वेद्यर्धं बहिर्वेदि । प्राग्वंशस्य पश्चात्पत्नीशाला यथासंभवविस्तारायामा ।

अथाऽग्निविमानम् । पूर्वोक्तपुरुषचतुर्थं सार्धतिलोनैकादशाङ्गुलात्मकं प्रक्रमं कृत्वा तेनाऽग्निं विमिमीयात् । तद्यथा---पूर्वनिहितद्वाविंशतिशङ्कुषु षोडशशङ्क्वोः पुरतः, एकादशशङ्कून्निहन्यात् । तत्र क्रमः—षोडशद्व्यग्नि(?) (३) भू (१) चन्द्र (१) शशि (१) चन्द्रे (१) क (१) भूमिषु (१) । चन्द्रे (१) क (१) शशि (१) चन्द्रेषु (१) हन्याच्छंकरशङ्कुकान् । एवं निहत्य पञ्चविंशतिप्रक्रमात्मिकामेकां रज्जुमुभयतःपाशां कृत्वा तस्यां द्वादशप्रक्रममितायां कर्षणार्थं चिह्नं कुर्यात् । अस्यां द्वादशिका तिर्यग्रज्जुस्त्रयोदशिकाक्ष्णया रज्जुः । अस्याः पञ्चविंशतिकेति संज्ञा ।

विमानकालेऽभिमतशङ्कुषु पञ्चविंशतिकापाशयोर्मध्य एवैषा यथा भवेत्तथा कृत्वा विमिमीयात् । षोडशशङ्कुमारभ्य प्रथमादिव्यवहारः ।

अथ विमानम् । षोडशशङ्कौ पञ्चिकाया एकं पाशं प्रतिमुच्यान्यं यत्र समो भवति तत्र प्रतिमुच्यैतयोरेव शङ्क्वोः पञ्चविंशतिकापाशौ प्रतिमुच्य द्वादशिकां तिर्यक्कृत्वा दाक्षिणतो लक्षणेनायाम्य चतुर्षु प्रक्रमेषु शङ्कुः । एवमुत्तरतः । इदं पुच्छाग्रम् । एवमग्रेऽपि विमाने क्रमो ज्ञेयः । द्वितीयशङ्कोर्दक्षिणतः प्रक्रमे शङ्कुरेवमुत्तरतः । एष प्रथमः पुच्छाप्ययश्चतुर्थशङ्कोर्दक्षिणतः प्रक्रमत्रये शङ्कुत्रये । एवमुत्तरतः । एषोऽपरः पुच्छाप्ययः । एवं चाग्रेऽष्टप्रक्रमविस्तारो मध्ये द्विप्रक्रमविस्तारो मूले षट्प्रक्रमाविस्तारः पञ्चप्रक्रमायामः पुच्छो भवति । अस्मादेव शङ्कोर्दक्षिणतः पञ्चविंशतितिलसहितद्व्यङ्गुलाधिकसप्तप्रक्रमे शङ्कुः । एष पक्षायामः । अस्माच्छङ्कोर्दक्षिणत एकप्रक्रमे शङ्कुः । इदं पक्षाग्रम् । एवमुत्तरतः शङ्कुत्रयम् । एवं पञ्चमादित्रिभ्यः शङ्कुभ्यो दक्षिणत उत्तरतश्च शङ्कुत्रयम्[1] । एवं कृते सार्धपुरुषोदगायामः पुरुषविस्तार आत्मा चतुर्दशतिलाधिकैकोनाशीत्यङ्गुलोदगायामौ पुरुषमात्रविस्तारौ पक्षौ । पुरुषमात्रप्रागायामे प्रक्रमविस्तारे पक्षाग्रे च भवन्ति । ततो दशमशङ्कोर्दक्षिणतः प्रक्रमे शङ्कुः । एवमुत्तरतः । एवमेकादशशङ्कोर्दक्षिणत उत्तरतश्च प्रक्रमे शङ्कू । इदं शिरःस्थानम् । एवं कृते शिरसि प्रक्रमात्मकानि चत्वारि चतुरश्राणि भवन्ति । तत्राग्रिमचतुरश्रद्वये दक्षचतुरश्र ईशानकोणमारभ्य निर्ऋतिकोणपर्यन्तं रेखामालिख्याक्ष्णया भागद्वयं कृत्वाऽऽग्नेयभागं त्यजेत् । उत्तरचतुरश्र आग्नेयकोणमारभ्य वायव्यकोणपर्यन्तं लेखामालिख्येशानभागं त्यजेत् । पक्षाग्रयोरपि चत्वारि चत्वारि प्रक्रमात्मकचतुरश्राणि कृत्वा दक्षिण(दक्ष)पक्षचतुरश्रेषु शिरोग्रदक्षचतुरश्रवदाग्नेयभागत्यागः । उत्तरपक्षाग्रचतुरश्रेषु शिरोग्रस्थोत्तरचतुरश्रवदीशानभागत्यागः ।

अथ पक्षसंनमनम् । अत्राष्टमप्रक्रमपरिमितामेकां रज्जुमुभयतःपाशां कृत्वा तस्यां कर्षणार्थं मध्ये चिह्नं कृत्वा दक्षपक्षायामपश्चिमप्रान्तशङ्क्वोः पाशौ प्रतिमुच्य लक्षणेन पूर्वतः कर्षयेत् । चिह्नं यत्र पतति तत्र शङ्कुं निहन्यात् । एवं दक्षपक्षायामपूर्वप्रान्तशङ्क्वोः पाशौ प्रतिमुच्य पूर्ववदाकृष्य चिह्नं यत्र पतति तत्र शङ्कुं निहन्यात् । एवं कृते पक्षपूर्वोन्नतः पश्चिमनिम्नो भवति । एवमुत्तरपक्षस्यापि विमानम् । ततः सर्वतः स्पन्द्यया वेष्टयेत् ॥

प्रयोगचान्द्रिकावृत्तेः(त्तिः)सत्यापाढमुनेर्वचः ।
कल्पसूत्रस्येह कृतः सूत्रार्थन्यायनिर्णयः ॥
शेखरे चन्द्रचूडस्य तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्त्यैर्यद्यत्ततः कृतम् ॥

**इति सत्याषाढचयनसूत्रोपोद्घातः**

[1] अनन्तरमष्टमशङ्कोः पाशौ विपर्यस्य दक्षिणत उत्तरतश्च शङ्कुत्रयम्

ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रम्

## महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम्



अथैकादशप्रश्नप्रारम्भः ।

तत्र प्रथमः पटलः ।

यदर्पितं कर्म फलाय कल्पते यदर्पितं बन्धविमुक्तयेऽपि च ।
सच्चित्सुखानन्तमनन्तमीश्वरं नमामि विष्णुं दुरितेभदारणम् ॥ १ ॥
वेदत्रयात्मन्न[न]लत्रयात्मन्नीशत्रयात्मन्प्रकृतेर्गुणात्मन् ।
जन्तोरवस्थात्रितयानुबिम्बी(म्बि)बिम्बत्रयात्मन्नव मामनर्थात् ॥ २ ॥
विनेययुक्ताखिलसिद्धवर्यलसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥ ३ ॥
गुरुं गणपतिं नौमि जन्मज्ञानप्रदौ तथा ।
सह गौर्या महेशानं नौमि विष्णुं च पद्मया ॥ ४ ॥
ज्योतिष्टोमयाजमानं दशमप्रश्न ईरितम् ।
एकादशद्वादशयोर्वक्ष्यन्ते (ते) चयनक्रतुम् (तुः) ॥ ५ ॥

ननु वैखानसाद्या आचार्याः सप्त संस्थाः सोमस्योपदिशन्ति—' अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्थाः ' ( वै० श्रौ० १-१ ) इति । तासु चोत्तराः षडप्याद्यस्याग्निष्टोमस्य गुणविकारास्तत्केन विशेषेणात्यग्निष्टोमवाजपेययोरनुपादानमिति चेन्न—प्रकृतिभूतानामेव ज्योतिष्टोमसंस्थानामत्रानुक्रमणस्याभिप्रेतत्वात् । न तु सोमसंस्थामात्रस्याग्निष्टोमगुणविकारमात्रस्य वा । तत्र न तावदत्यग्निष्टोमः कस्यचित्क्रतोः प्रकृतिः । वाजपेयस्तु न प्रकृतिः । नापि ज्योतिष्टोमः, सर्वसप्तदशत्वाद्वाजपेयस्य । अतो युक्तमेवानयोरनुपादानम् । तस्मादेवं सिद्धं पञ्चशाखोऽग्निष्टोमो ज्योतिष्टोम एव सर्वसोमानां प्रकृतिरिति । तथा सर्वक्रतूनां प्रकृतिरग्निष्टोम इत्येतदभिप्रायं द्रष्टव्यम् । न च—' अग्निं व्याख्यास्यामः । स उत्तरक्रत्वर्थः ' इति वक्ष्यमाणसूत्रादुत्तरक्रत्वर्थत्वस्याग्निविषये विधानेनार्थादग्निष्टोम उत्तरवेदिसिद्धेः, आपस्तम्बेन भगवता परिभाषासूत्रे—' अग्निष्टोम उत्तरवेदिः ' ' उत्तरेषु क्रतुष्वग्निः ' ( आप०

पारि० ४ । ७ । ८ ) इति स्पष्टवचनाच्चोक्थ्यादीनामग्निष्टोमविकारत्वादुक्थ्यादिष्वप्यग्निचित्या निषेधोऽस्त्विति वाच्यम् । गुणविकृतेन रूपेण तेषामनग्निष्टोमत्वादुत्तरक्रतुत्वाच्च । न च—' अग्निष्टोम उत्तरवेदिः ' इत्यापस्तम्बसूत्रमपि पञ्चशाख(खा)प्रकृत्यभिप्रायम्— ' उत्तरेषु क्रतुषु ' इति तु तद्विकाराभिप्रायमिति वाच्यम् । अन्यत्र साद्यस्क्रेभ्यो वाजपेयात्षोडशिनः, ( आप० पारि० ४ । ८ ) इति षोडशिपर्युदासानुपपत्तेः । न च षोडशिविकाराद्वाजपेयादिति वाजपेयविशेषणतया षोडशी योज्यः इति वाच्यम् । व्यभिचाराभावेन विशेषणवैयर्थ्यात् । संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेः । न ह्यषोडशिविकारोऽपि वाजपेयोऽस्ति येन तद्व्यवच्छेदाद्विशेषणमर्थवद्भवेत् । किमिदानीमुक्थ्यादिषु लभ्यत एवोत्तरवेदिः । मैवम् । सर्वास्वेव विकृतिषु लभ्यते विकल्पेन । अपचितिकामोऽपचितिभ्यामुभयसामानौ भवतः पक्षिभ्यां साग्निचित्याभ्याम्, ( स० श्रौ० १७ । ११ ) इत्यत्र नियमदर्शनात् । ' अनग्निकान्वा यज्ञक्रतूनाहरेत् ' इति बौधायनोक्तेश्च । तस्मात्सिद्धमुक्थ्यादिष्वपि भवत्येव पक्षेऽग्निचित्येति । अथेदानीमुत्तरेषु क्रतुष्वाकाङ्क्षितमग्निचयनकर्म वक्तुं शिष्यावधानाय प्रतिजानीते—

अग्निं व्याख्यास्यामः ॥ १ ॥

अग्निरग्निशब्दो यागनामप्रतीयेत(तये) । अग्निस्तोत्रमग्नेः शस्त्रमिति स्तोत्रशस्त्रयुक्ततया निर्देशरूपलिङ्गदर्शनात् स्तोत्रशस्त्रयोः क्रत्वेकसम्बन्धत्वादिति स्तोत्रशस्त्रवाक्येऽनुपपत्तिबलाल्लक्षणयाऽग्निशब्दस्य तद्युक्तक्रतुपरत्वमात्रेण विद्वद्वाक्ये यागनामत्वमग्निशब्दस्य, तं व्याख्यास्यामो व्यक्तं वक्ष्याम इत्यर्थः ॥

ननु—' य एवं विद्वानग्निं चिनुते ' इति श्रुतं तथेमान्यपि वचनानि—अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन इत्यादि । तत्र संदेहः, किमयमग्निं चिनुत इति यागविधिरुताग्निसंस्कारमात्रं स्वतन्त्रं विधीयते, किंवा ज्योतिष्टोमादिषु गुणो विधीयत इति । तदर्थं च किमग्निशब्दो यागनामधेयमुत द्रव्यवचन इति । तत्रांश्वदाभ्यवत्प्रकरणे पुनः संकीर्तनाभावान्न क्रतुसंयोगस्तदभावे च संस्कारमात्रं स्वतन्त्रमनर्थकम् , ' अतोऽग्निं कुर्यात् ' इति यागविधिः । चिनोतिश्चेष्टकाभिरग्निं चिनुते, इति वाक्यप्राप्तानुवादो निर्वपतिवत् । कथं पुनरसति यजिश्रवणे यागविधानम् । उच्यते— अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारिते—' अथातोऽग्निमग्निष्टोमेनानुयजन्ति ' इति यदग्निं यजति तदा(द)ग्निष्टोमेनेति संस्थाविधिपरे वाक्ये यजतिनाऽनुवादादुत्पत्तौ यागवचनोऽग्निशब्द इति गम्यते । यद्यपि नायं संस्थाविधिः किंत्वग्निष्टोमसंस्थेन यागेनाग्निमनुयजन्तीति तथाऽप्यग्नेर्यागत्वम् । न ह्यन्यथाभूतमन्यैरनुष्ठातुं शक्यते । यथा देवदत्तमनुगच्छति

यज्ञदत्त इत्युक्ते देवदत्तोऽपि गच्छतीति प्रतीयते, अन्यथाऽनुगमानुपपत्तेरेवमनुयजनवशादेवाग्नेर्यागत्वसिद्धिः । तस्माद्यागविधानं स्यादिति प्राप्तेऽभिधीयते—

‘ अग्नेश्चयनसंस्कारमात्रमत्र विधीयते ।
तस्याथातोऽग्निमित्यादिवाक्यैः स्यात्क्रतुसंगतिः ॥
वह्नौ रूढोऽग्निशब्दोऽयं न हि यागस्य वाचकः ’ ।

नह्यग्निशब्दोऽत्यन्तरूढत्वाद्वाक्यभेदतत्प्रख्यतद्व्यपदेशविधुरत्वाच्च यागनामत्वं प्रतिपद्यते । तेन ज्वलनस्ये(स्यै)वाऽयं चयनसंस्कारो विधीयते । तस्य च संस्कारस्य क्रतुसंबन्धपराण्यथातोऽग्निमग्निष्टोमेनानुयजन्ति, इत्यादीनि । अत्राग्निशब्दः प्रकरणाच्चयनसंस्कृतेऽग्नौ वर्तते । अनुशब्दश्चयनापेक्षया पश्चाद्भावमग्निष्टोमादि नामाऽऽह । तेन चयनसंस्कृतेऽग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः । न त्वत्राप्यग्निशब्दो यजिसमानाधिकरणो येन नाम स्यात् । न चावश्यं तुल्यरूपाणामेव पौर्वापर्यम् । ‘ पाकमनुभुङ्क्ते ’ इत्यादिषु विजातीयानामपि दर्शनात् । तस्मादपि ज्योतिष्टोमादिषु गुणविधिः ॥ १ ॥

**स उत्तरक्रत्वर्थः । अन्यत्र साद्यस्क्रेभ्यो**
**वाजपेयात्षोडशिनः सारस्वताच्च सत्रा-**
**त् । अग्निशिनस्तोमो यथोपदिष्टं वा । रात्रि-**
**सत्रेषु समहाव्रतेष्वश्रवणार्था पुनश्चितिः ॥ २ ॥**

स चाग्निः षोडशिनि तद्विकारे च वाजपेयेऽसंकीर्तनान्न भवति । साद्यस्क्रेषु सद्यः परिसमाप्तेरसंभवाच्चयनाभावः । सारस्वते सत्रेऽनवस्थानान्नाग्निश्चीयते । अत एतेभ्योऽन्यत्रोत्तरेषु क्रतुष्वग्निः । उत्तरेषु क्रतुष्वग्निविधानात्तत्र प्रकरणाम्नातोत्तरवेदि, तत्राऽऽहवनीयात्प्रणीयते । उत्तरेषु क्रतुष्वग्निष्टोमोत्तरकालकार्येषु साद्यस्क्रादिभ्योऽन्यत्राग्निष्टुज्ज्योतिष्टुदादिविकृतिष्वनारभ्याधीतोऽग्निश्चीयते । चिताविहवनीयप्रणयनम् । तेषूत्तरवेदिरपि लभ्यते—‘ साग्निचित्यो भवति पक्षिभ्यां साग्निचित्याभ्याम् ’ इति क्वचिन्नियमविधानादन्यत्रानियम इति केचिदाहुः । ‘ उत्तरवेद्यां ह्यग्निश्चीयते ’ इत्यनारभ्याधीतोऽग्निरुत्तरवेदिद्वारेण प्रकृतिं गच्छति । यथा स्रुवद्वारेण खदिरः । तत्राग्निचयनेन प्रकृताववरुद्धायां बह्वृचवचनात्—‘अग्निर्वै देवानां होता तस्यैष स्वो लोको य उत्तरनाभिः ’ इति प्रणेयोऽग्निरुत्तरनाभौ प्रतिष्ठाप्यः । एवमुत्तरवेद्यन्तः प्रत्यायनमग्निचयनं विकृत्यर्थं भविष्यति साप्तदश्यवत् । तदाहाऽऽपस्तम्बः—अग्निष्टोम उत्तरवेदिः । उत्तरेषु क्रतुष्वग्निः, (आप० परि० ४-८) इति । तत्रैवाग्निष्टोमसंस्थे ज्योतिष्टोमे वचनाद्वग्निचयनं भविष्यति । ‘ अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं

द्विरात्रेण तं त्रिरात्रेण ' इति । अतः प्रकृतावेवाग्निचयनोत्तरवेद्योर्विकल्पितयोः प्रकृतितिवद्विकृतिष्वपि विकल्पः । अत एव सर्वत्र विकृतिषु विकल्पप्रसक्तौ—'साग्निचित्यो भवति । पक्षिभ्यां साग्निचित्याभ्याम् ' इति नियमविधिरुपपद्यते, व्रीहिमयपशुपुरोडाशवत् । द्विरात्रादिष्वग्निचयनविधानमौपदेशिकत्वेन गुणकामादिसिद्ध्यर्थमिति ।

नन्वग्निरनारभ्यवादविहितः स वाक्येन प्रकृतौ विकृतिषु च कासुचिद्विनियुज्यते—'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं त्रिरात्रेण ' इत्येवमा द्वादशरात्रादनुक्रान्तः सोऽयमग्निर्यासु विकृतिषु वाक्येन नोपदिष्टो यथा षोडशिषु वाजपेये न तत्र किं चोदकप्राप्त्या कर्तव्यो नेति संशयः । तथाऽतिग्राह्या नाम ग्रहाः प्रकृतौ श्रुताः, विकृतिष्वपि कासुचिदुपदिष्टाः—'उक्थ्ये गृह्णीयात्पृष्ठे गृह्णीयात् विश्वजिति प्रगृ-(ग्र)हीतव्याः ' इति । तेऽपि विकृत्यन्तरेषु ग्राह्या नेति संशयः ।

तत्र—'चोदकेनाग्न्यतिग्राह्यं विकृतौ न प्रदिश्यते ।

कासुचिच्छ्रवणं तस्य तथाहि स्यादनर्थकम् ॥
तस्मात्तदर्थवत्त्वाय प्रदेशो नेति कल्प्यते ।
तेन यत्रोपदेशोऽस्य तत्रैवान्यत्र न क्रिया' ॥

उच्यते—'अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा ।

चोदकार्थस्य कृत्स्नत्वात्कासुचिच्छ्रवणं पुनः ॥
सामान्यविध्यासिद्ध्यर्थं नातिदेशं निवारयेत् ।
चेत्सामान्यविधौ कोऽर्थोगुणकामप्रवर्तनम् ' ॥

यासु विकृतिषु विधीयते तासु प्रकृतौ च समानं विधानं भवति । विकृत्यन्तरेषु तु चोदकतः प्राप्तिरिति न प्रकृतितुल्यं विधानं, समानविधानत्वे च प्रयोजनमग्न्याश्रितानां गुणकामानाम्—'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादीनां तास्वपि विकृतिषु प्रवृत्तिः । गुणकामा हि प्रकृतमग्निमाश्रयन्ति प्रकृतश्चाग्निः प्रकृतिविकृतिसाधारणभूत इति तथाभूतस्याऽऽश्रयत्वाद्विकृतिष्वपि गुणकामप्रवृत्तिः । यासु विधिर्नास्ति तासु तु न गुणकामाः प्रवर्तन्ते 'निवृत्तिर्वा कर्मभेदात् ' इति न्यायात् । तदेवं गुणकामप्रवृत्त्यर्थं विकृतिषु कासुचिच्छ्रवणमिति न तद्बलेनातिदेशाभावः शक्यते कल्पयितुम् । तस्मादस्त्यतिदेशः ।

अत्र केचिदाहुः—अनारभ्याधीतोऽग्निः प्राकरणिकोत्तरवेदिविरोधात्प्रकृतौ न लभ्यते निवेशम् । अप्राकृतश्च न विकृतिष्वतिदिश्यते तेनोपदेशेनैवास्य विकृतिषु प्राप्तिरित्यनुपदेशतः षोडशिवाजपेययोर्नाग्निश्चेतव्य इति । तदयुक्तम् । अग्निष्टोमवाक्येन प्रकृतावपि विधानात् । न तु विकृत्यग्निष्टोमाभिप्रायं तद्भविष्यति प्रकृतौ प्राकरणिकोत्तरवे-

द्विविरोधात् । न हि प्रकरणेन वाक्यसंकोचो युक्तः । किंच प्रकृतेरेवाग्निष्टोमत्वमन्यापेक्षं विकृतीनां त्वतिदेशापेक्षमिति प्रकृतिरेवानेनाभिधीयते । न चात्र साप्तदश्यन्यायः, साप्तदश्यस्य हि सामिधेनीमात्रसंबन्धो वाक्येनावगम्यते क्रतुसंबन्धः कल्पयितव्यः । पाञ्चदश्यस्य तु प्रकरणेन संबन्धः क्लृप्त इति युक्तं बलाबलम् । अग्निष्टोमशब्दस्तु क्रतुमेवाभिधत्त इति तत्संबन्धो वाक्यकृत इति न प्रकरणेन बाधमर्हति । तस्मादस्ति प्रकृतावग्निरिति विकृतिष्वप्यतिदिश्यते । तत्र साद्यस्क्रेषु सारस्वतेषु च सत्रेष्वशक्यत्वात्काममग्निर्न चीयतां षोडशिवाजपेययोस्तु चेतव्यः ॥ २ ॥

अपि वा धार्यमाणेऽग्नौ प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्यन्तर्वेदिमभिमृशेत् । तिस्रो वा स्वयमातृण्णा उपधाय तासामुपधानकल्पः स्वयमातृण्णा साम पुरीषं विश्वज्योतिः । एवं विहिता द्वितीया पुरीषा तृतीया ॥ ३ ॥

अपि वा तिस्रश्च स्वयमातृण्णाः सर्वाश्च विश्वज्योतिषस्तासामुपधानकल्पः स्वयमातृण्णा साम पुरीषं विश्वज्योतिरेवं विहिता द्वितीया तृतीयस्यां तु विश्वज्योतिः प्रथमा । अथ पुरीषम् । अथ स्वयमातृण्णाम् । अथ साम ॥ ४ ॥

शर्कराख्यानां क्षुद्रपाषाणानां मध्ये पुरुषप्रयत्नमन्तरेण या स्वत एव च्छिद्रयुक्ता सेयं शर्करा स्वयमातृण्णा, तामत्रोपदध्यात् । विश्वशब्दोपेतैश्च मन्त्रै ( तै० सं० ४ ४ । ६ ) रुपधेया विश्वज्योतिषः । ताश्च तिस्रः प्रथममध्यमोत्तमचितिषूपदध्यात् । शेषं स्पष्टम् ॥ ३ ॥ ४ ॥

तं चेष्यमाणोऽमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे वा पुण्ये नक्षत्र ऋत्विजो वृत्वा ॥ ५ ॥

अग्न्याधारत्वादिष्टकास्थण्डिलमुच्यते तत्संयोगात्क्रतुरप्यग्निरुच्यते । अग्निं चेष्यमाणः ( आप० श्रौ० १६–१–१ ) इत्यापस्तम्बोक्तेः । तं चेष्यमाणः स्थण्डिलरूपाग्निगुणकेन क्रतुना यक्ष्यमाणो भवति । तस्याग्नेः सोमाङ्गत्वात्सोमाङ्गैरिह व्यतिषङ्गः । तस्याग्नेरनारभ्याधीतत्वात्स च सोमाङ्गेन पृथक्फलकः । उत्तरवेदिकार्ये तस्यैष स्वर्लोको यदुत्तरवेदिर्नाभिः, इति प्रणयने प्रकृतौ श्रूयते । साग्निचित्ये तु क्रतौ स्वयमातृण्णाया-मासादनम् । तस्माद्विकृत्यर्थमकाम्यत्वात् । यदि काम्यः स्याद्गोदोहनादिवत्प्रकृतौ

निविशेत । तेनाऽग्निगुणकेन क्रतुना यक्ष्यमाणः । अमावास्यायां पौर्णमास्यामेकाष्टकायां वोखासंभरणं करोतीत्यापस्तम्बः । एकाष्टका व्याख्याता सूत्रकारेण--या माघ्याः पौर्णमास्या इति । अषाढा व्यालिखितेष्टका मध्य उपधीयते तामधिकृत्यैके शाखिनो धर्मान्पठन्ति । तदा तूखा तूष्णीं, ये तूखालिङ्गमन्त्राः 'दधतूखे' ( इत्येवमादयस्तेषां निवृत्तिः । यथा व्रीहिलिङ्गस्य मन्त्रस्य यवेषु । अत्र संभारानाह बौधायनः— 'उखाः संभरिष्यन्नुपकल्पयतेऽश्वं च गर्दभं च तयोरेव रशने मौञ्ज्यौ वा कुशमय्यौ वाऽभ्रिं च ब्राह्मणसंपन्नां मृदं च भावितां करणीयां वल्मीकवपां कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भꣳ हिरण्यमर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि वैश्यꣳ सदृशꣳ सूनामधिकरणीमुखाकृतं कुशलमिति । अ(आ)मावास्येन वा हविषेष्ट्वा नक्षत्रे वाऽग्रेण शालाꣳ शम्यान्यासे गर्तं खनयीत । तद्भावितां मृदमवलेपयति । समां बिलेन करोति । तदुपसादयति कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भꣳ हिरण्यमिति, ( बौ० श्रौ० १०–१ ] इति ।

तत्र कर्म--ज्योतिषा त्रिकद्रुकेणाग्निष्टोमेन साग्निचित्ते(त्ये)न सहस्रदक्षिणेन यक्ष्ये, स्वर्गं लोकमवाप्नवानीत्युक्त्वा विद्युदसि सोमप्रवाकवरणादि करोति । ततो देवयजनयाच्ञ्चा(च्ञा)न्ते देवतोपस्थानान्ते वा ये प्रधानस्य कर्तारस्त एवाङ्गानां स एव देश इति न्यायात् । पूर्वमृत्विग्वरणादि देवयजनयाच्ञ्चा(च्ञा)क्रियते 'सहाङ्गं प्रधानम्' ( आप० परि० २–३९ ) इति सूत्रान्तरवचनाच्च ॥ ५ ॥

बृहस्पतिपुरोहिता देवानां देवाः प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रयास्त्रिꣳशा अनु व आरभ इदꣳ शकेयं यदिदं करोमि स्वाहेत्याहुतिं जुहोति ॥ ६ ॥

अग्नीन्विहृत्योखासंभरणार्थम् । अत्र बौधायनोऽप्याह—'परिस्तृणन्ति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्च' ( बौ० श्रौ० १०–१ ) इति । जुहोतिचोदनात्स्वाहाकारप्रदानम् । साधननियममपि--'आहवनीय आहुतयो जुह्वा हूयन्ते' इति पारिभाषके द्रष्टव्यम् । देवा देवता ॥ ६ ॥

जुहूꣳ स्रुवं च संमृज्य चतुर्गृहीतमाज्यमष्टगृहीतं वा गृहीत्वा युञ्जानः प्रथमं मन इति यजुरष्टमाभिर्ऋग्भिरन्तर्वेद्यूर्ध्वस्तिष्ठन्सावित्राण्येकामाहुतिं जुहोति ॥ ७ ॥

जुहूस्रुवयोस्तूष्णीं संमार्गः । दर्शपूर्णमासवत्समन्त्रक इति भाष्यकृत् । अत्राप्य-ष्टगृहीतेन होमः शाखन्तरीयः । चतुर्गृहीतहोमस्त्वस्मच्छाखोक्तः, 'चतुर्गृहीनेन जुहोति' ( तै० सं० ५-१-१ ) इति विधिदर्शनात् । 'युञ्जानः प्रथमं मनः, इत्यारभ्य-इमं नो देव सवितर्यज्ञम् ' ( तै० सं० ४-१-१ ) इति यजुरष्टमाभिर्यजुरष्टमं यासां ताभिर्यजुरष्टमाभिर्ऋग्भिरेकामाहुतिमन्तर्वेदि गार्हपत्याहवनीययोर्मध्ये स्थितो जुहोति । सविता देवता ॥ ७ ॥

अत्रेदं चिन्तनीयम्—किमेकैकं मन्त्रमुच्चार्य जुहुयात् , आहोस्वित्सर्वाणि( न् ) वाक्यान्यु (मन्त्रानु) च्चार्येति । तत्र हेयोपादेयावुभौ पक्षौ क्रमेण दर्शयति—

**यं कामयेत पापीयान्त्स्यादित्येकैकं तस्य जुहुयात् । यं काम-येत वसीयान्त्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयात् ॥ ८ ॥**

पापीयानातशियेन पापो दरिद्र इत्यर्थः । वसीयान्वसुमत्तरः ॥ ८ ॥

अत्रेदमपरं चिन्तनीयम् । किमृग्रूपान्षणमन्त्रानुच्चार्य—इमं नो देव सवितरिति यजुः सप्तमं कृत्वा पश्चात् देव सवितरित्यृचामन्तिमां कुर्यात् । किंवैतामृचं सप्तमीं कृत्वा तद्यजुरन्तिमं कुर्यादिति । तत्र हेयोपादेयपक्षौ क्रमेण दर्शयति—

**यदि कामयेत च्छन्दाꣳसि यज्ञयशसेनार्पयेयमित्यृचमन्ति-मां कुर्यात् । यदि कामयेत यजमानं यज्ञयशसेनार्पयेय-मिति यजुरन्तिमं कुर्यात् ॥ ९ ॥**

यज्ञयशसं यज्ञफलमर्पयेयं संयोजयेयम् । छन्दोबद्धाया ऋचस्त्वन्तिमत्वे यज्ञफलं छन्दःसु गच्छेत् । यजुषस्तु च्छन्दोरहितत्वेन यज्ञफलं छन्दोगामि न भवति, किंतु यजमानगाम्येव भवति । तस्माद्यजुरेवान्तिमं कुर्यादित्यर्थः । एषोऽध्वर्युकाम इति भाष्यकृत् । यजुरष्टमाविधेः प्रशंसेति न्यायः ॥ ९ ॥

**ऋचा स्तोमꣳ समर्धयेति चतुर्गृहीतेनोत्तराम् ॥ १० ॥**

आहुतिं जुहोतीत्यनुवर्तते । अग्निर्देवता ॥ १० ॥

**देवस्य त्वेति चतुर्भिरभ्रिमादत्ते ॥ (ख० १) ॥ खादिरीं वैणवीं वा कल्माषीꣳसुषिरामसुषिरां वोभयतःक्ष्णू तामन्यतरतःक्ष्णू तां वा पालाशी-मौदुम्बरीमर्कमयीꣳ शमीमयीं वा । यो वा कश्चन वृक्षः फलग्राहिस्तस्य मुष्टिमात्रीं प्रादेशमात्री-**

**प्ररत्निमात्रीं बाहुमात्रीं व्याममात्रीमपरिमितां वा ॥ ११ ॥**

देवस्य त्वेत्यारभ्य—आनुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वदित्येवमन्तैश्चतुर्भिर्मन्त्रैरभ्रिं (खनित्रं) काष्ठकुद्दालं गृह्णाति खादिरीं वैणवीं वा। कल्माषी कृष्णबिन्दुलाञ्छिता। सुषिरा अन्तश्छिद्रा, असुषिरा घना, क्ष्णु तेजन इत्यस्माद्धातोरुत्पन्नः क्ष्णुशब्दस्तीक्ष्णत्वमाचष्टे। उभयोरग्रमूलयोस्तीक्ष्णाऽभ्रिरुभयतःक्ष्णुस्तादृशी कार्या। अथवा पालाशी पर्णमयी, औ(उ)दुम्बरो जन्तुफलः, अर्कः प्रसिद्धः, शमी घण्टा। एतेषामभावे यो वा यः कश्चन यज्ञियवृक्षः फलग्रहिस्तस्याभ्रिः कार्येत्यर्थः। भाष्यकारस्तु—फलानि बहूनि गृह्णातीति फलग्रहिः। वनस्पतीनां मध्ये यः फलग्रहिरस्ति एषां फलग्रहीणामपि मध्ये स वेणुरातिशयेन फलग्रहिः। व्रीह्याद्यप्रवृद्धेणूनां समाप्तिसंवत्सरे गोधूमसदृशैर्बहुभिर्बीजैरुपेतत्वात्। तस्मादियमभ्रिर्वैणवी कार्येति। चतुर्भिररत्निभिस्तुल्यो व्यामः। एतावती कार्या। नियतपरिमाणराहितत्वमपरिमितत्वं विधत्ते—अपरिमिता भवति ( तै० सं० ५। १। १ ) इति ॥

ननु—ये तु संख्यायुक्ता मन्त्राः 'चतुर्भिरभ्रिमादत्ते' ( तै० सं० ५। १। १ ) इत्येवमादयस्तेषामपि पूर्ववद्विकल्पः। संख्यावशात्तु समुच्चयः। चतुःसंख्या हि कर्माङ्गभूता नासति समुच्चये संपद्यते। तत्र पूर्वप्रयुक्तानां मन्त्राणां संस्कारद्वारेण कारणत्वं चरमस्य तु साक्षादिति संख्यावचनसामर्थ्याद्ध्यवसीयते। तस्मात्समुच्चयः ॥ ११ ॥

**इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादाय प्रतूर्तं वाजिन्नाद्रवेत्यश्वमभिदधाति ॥ १२ ॥**

अश्वोऽभिधीयते बद्ध्वा धार्यते यया रशनया सेयमश्वाभिधानी ॥ १२ ॥

**तूष्णीं गर्दभस्याऽऽदाय युञ्जाथाꣳ रासभं युवमिति गर्दभम् ॥ ॥ १३ ॥**

भरन्तमस्मयुमित्यन्तः। मन्त्रमन्तरेणैव गर्दभस्य रशनामादाय युञ्जाथामिति मन्त्रेण गर्दभमभिदध्यात्। अत्र निकृष्टकार्ये स्थापितस्तस्माल्लोकेऽपि गर्दभोऽश्वान्निकृष्टतरः। रजकादय एव हि तमाद्रियन्ते न तु राजामात्यादयः ॥ १३ ॥

**योगे योगे तव स्तरमिति तिसृभिरश्वप्रथमाः प्राञ्चो गच्छन्ति यत्र मृदं खनिष्यन्तो भवन्ति ॥ १४ ॥**

अच्छेहीत्यन्तः। गच्छन्तीति बहुवचननिर्देशादध्वर्युब्रह्मयजमानाः। अश्वप्रथमाः, यत्र यस्मिन्देशे दृढा मृत्तत्र गच्छन्त्यश्वः प्रथमस्ततो गर्दभस्तत इतरे। तत्राश्वस्य गर्द-

भात्पुरतो गमनं विशदयत्यापस्तम्बः—'यदि कामयेत पापवस्यसः स्यादिति गर्दभप्रथमा गच्छेयुः' ( आप० श्रौ० १६–१–१२ ) इति । गर्दभोऽश्वात्पापीयानिति प्रसिद्धम् । अत उभयोः समानं गमनं मा भूदित्यश्वं पुरतो नयेयुः । तथाऽश्वं पूर्वं नयन्ति, इति हि ब्राह्मणम् ॥ १४ ॥

**अग्निं पुरीष्यमङ्गिरस्वदच्छेहीति येन द्वेष्येण संगच्छेत तमभिमन्त्रयेतापश्यन्निर्दिशति ॥ १५ ॥**

मृत्खनं प्रति गच्छत्सु मार्गमध्ये यदि केनापि द्वेष्येण संगच्छेत तदानीमिमं मन्त्रं पठेत् । यदि द्वेष्यं न पश्यति तदाऽपि तं मनसा निर्दिश्य पठेत् ॥ १५ ॥

**अग्निं पुरीष्यमङ्गिरस्वदच्छेम इति वा ॥ १६ ॥**

वाशब्दः शाखान्तरमतप्रदर्शनार्थः ॥ १६ ॥

**सूर्यस्योदयनं प्रति वल्मीकवपामुपतिष्ठतेऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति ॥ १७ ॥**

वल्मीकस्य योऽवयव उन्नतत्वेनाभिवृद्धः सेयं वपा, तथाविधासु वपासु मध्ये या वपा सूर्योदयस्याभिमुखा तस्या अग्रं किंचिदुद्धृत्य तां वपामनेन मन्त्रेणोपतिष्ठते ॥१७॥

**अत्रैके समामनन्ति–(*अग्निं पुरीष्यमङ्गिरस्वद्भरामः ) ॥ १८ ॥**

यद्वद्गमनकाले तद्वदागमनकालेऽपि । तत्र भरिष्याम इति पाठः । अत्र तु भराम इति विशेषः । यद्यप्यागमनस्य नायं कालः, तथाऽपि प्रसङ्गाद्बुद्धिस्थमन्त्रोऽयमाम्नातस्तं चोपरिष्टादुत्कर्षेत् । अमुं विधिमेके शाखिनः पठन्ति ॥ १८ ॥

**अन्वग्निरुषसामग्रमख्यदिति वल्मीकवपायाः प्रक्रामति ॥ १९ ॥**

वल्मीकवपायाः समीपं गच्छति ॥ १९ ॥

**आगत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमिति द्वाभ्यां मृत्खनमश्वमाक्रमयति ॥ २० ॥**

मृत्खनं दक्षिणपूर्वेण पादेनाऽऽक्रमयन्ति ॥ २० ॥

**द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठं संमार्ष्टि ॥ २१ ॥**

---

( इमं धनुश्चिह्नान्तर्गतपाठं केचिन्न पठन्ति । )

---

१ क. °च्छेरस्तदा° । २ क. °स्योदेतोस्तामुद्धत्योप° । ३ ख. °म इति ।

सर्वतः स्पृशति ॥ २१ ॥

अभितिष्ठ पृतन्यतोऽधरे सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठापः क्षेत्राणि संजयन्निति यं द्वेष्टि तमधस्पदमश्वस्य मनसा ध्यायति ॥ २२ ॥

यं देवदत्तमिति द्वेष्टि तमधस्पदमश्वस्य ध्यायति मनसा ॥ २२ ॥

उत्क्रामोदक्रमीदिति द्वाभ्यां मृत्खनादश्वमुत्क्रमयन्ति ॥ २३ ॥

मृद्यस्मिन्प्रदेशे खन्यते स प्रदेशो मृत्खनः । तस्मादश्वमुदङ्मुखत्वेन निर्गमयेत् ॥ २३ ॥

अपो देवीरुपसृजेत्यश्वस्य पदेऽप उपसृजाति ॥ २४ ॥

अश्वस्य दक्षिणपाद उदकं क्षिपति । सुपिप्पला इति मन्त्रान्तः ॥ २४ ॥

तस्मिन्हिरण्यं निधाय जिघर्म्यग्निमा त्वा जिघर्मीति मनस्वतीभ्यामेकामाहुतिं[1] जुहोति ॥ २५ ॥

जुहोतिचोदनात्स्वाहाकारपाठः । अग्निर्देवता । भूमौ हिरण्यं निधाय तस्मिञ्जुहुयात् । चतुर्गृहीतेनाऽऽज्येनेति वैखानसः । सकृद्गृहीतेनेत्यपरे ॥ २५ ॥

अपादाय हिरण्यं परिव्राजपतिरिति तिसृभिरभ्र्या मृत्खनं परिलिखति ( बाह्यां वर्षीयसीम् ) ॥ २६ ॥

शुचिरिति मन्त्रान्तः । हिरण्यमपादाय स्वीकृत्य परिवाजपतिरिति प्रतिमन्त्रं परिलेखनम् । 'गायत्रिया परिलिखति । त्रिष्टुभा परिलिखति । अनुष्टुभा परिलिखति' ( तै० सं० ५–१–३ ) इति वचनात् । बाह्यां बाह्यां महतीम् । पदस्य गायत्र्या परिलेखनमनुष्टुप्त्रिष्टुब्भ्यां बहिर्बहिः ॥ २६ ॥

देवस्य त्वेति द्वाभ्यां खनति ॥ २७ ॥

पुरीष्यमङ्गिरस्वत्खनामीत्यन्तः । ततः खननं द्वाभ्यामेकं कर्म द्विमन्त्रकम् ॥ २७ ॥

अपां पृष्ठमसीति पुष्करपर्णमाहरति । एतयैव विवेष्टयति । उपरिष्टात्कृष्णाजिनमुत्तरेण मृत्खनꣳ शर्म च स्थो वर्म च स्थ इति ॥ (ख० २) ॥ द्वाभ्यां

[1] °मेकाहुतिं ।

**प्राचीनग्रीवमुत्तरलोम ऽऽस्तृणात्युत्तरं पुष्करपर्ण-मधस्ताद्दण्डमुत्तानम् ॥ २८ ॥**

अग्रामुपरिवर्तमानत्वस्य विद्यमानस्यैवार्थग्याभिधायित्वादनुरूपेणैव मन्त्रेणैतत्पुष्करपर्णमाहरति । वेष्टनमेतयैव पुनर्वेष्टयति । शर्म च स्थ इति द्वाभ्यां मृत्खनदेशस्योत्तरेण कृष्णाजिनं पुष्करपर्णं च स्तृणाति यथा भवत्युपरिष्टात्कृष्णाजिनस्य पुष्करपर्णमुत्तानं तथेत्यर्थः ॥ २८ ॥

**पुरीष्योऽसि विश्वभरा इति मृदमभिमृश्य ॥२९॥**

मृत्खनस्याभिमन्त्रणम ॥ २९ ॥

**कृष्णाजिने पुष्करपर्णे च संभरति त्वामग्ने पुष्करादधीति तिसृभिर्गायत्रीभिर्ब्राह्मणस्य । उत्तराभिस्त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्य ॥३०॥**

यद्यप्यत्र—त्वामग्न इत्यादिकास्तिस्र एव गायत्र्यः समाम्नातास्तथाऽपि चतसृभिर्वा, इत्यापस्तम्बादिकल्पेषु विकल्पेनोक्ताः । चतुष्ट्वपक्षे ' पुरीष्योऽसि विश्वभरा इत्यनेन पूर्वोक्तेन मन्त्रेण सह संख्या पूरणीया ।

केचित्तु—त्वामग्ने पुष्करादधीति कृष्णाजिने पुष्करपर्णे च क्षिपति । चतसृभिस्तिसृभिर्वा गायत्रीभिर्ब्राह्मणस्य संभरति । यदा तिसृभिस्तदा ' त्वामग्ने पुष्करादधीत्यारम्य तिसृभिः । यदा चतसृभिस्तदा पुरीष्योऽसीत्यारभ्य चतसृभिः । अथर्वा त्वा प्रथमो निरमन्थदग्ने, इत्याहुः ! य एवैनमन्वपश्यत्तेनैवैनꣳ संभरति ( तै० सं० ५ । १ । ४ ) इति लिङ्गात् । तयैव चाभिमन्त्र्य तयैव च संभरणम् । चतसृभिरुपदेशः । तृतीयां तमु त्वा पाथ्य इति द्विरावर्तयति । तथा सप्तमी । त्रिष्टुब्भिः ' सीद होतः ' इत्येताभिश्चतसृभिश्चतुर्थी जनिष्वा हि जेन्य इति देवमनुष्यानेवास्मै सन्नान्प्रजनयति, इति लिङ्गात् । त्रिष्टुप्चतुर्थी तयैव च मृदोऽभिमर्शनम् । जगतीभिर्वैश्यस्य—जनस्य गोपा इति तिसृभिः । असावि सोम इति चतुर्थी ॥ ३० ॥

अथ काम्यं समुच्चयं विधत्ते—

**यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य संभरेत् । गायत्रीभिश्च त्रिष्टुग्भिश्च ॥ ३१ ॥**

वसीयान्धनवान्भवेदिति । उभयीभिर्गायत्रीभिस्त्रिष्टुग्भिश्च तस्य संभरणम् । तत्र गायत्रीभिस्तेजःप्राप्तिस्त्रिष्टुग्भिरिन्द्रियप्राप्तिः ॥ ३१ ॥

**जनिष्वा हि जेन्य इति संभृतामभिमन्त्रयते ॥ ३२ ॥**

संभृताया मृदोऽभिमर्शनं मृत्खनमन्यया मृदा पूर्यते यथा न लक्ष्यते तन्नावट इति ॥ ३२ ॥

**सं ते वायुर्मातरिश्वा दधात्विति मृत्खनेऽप उपसृजति ॥ ३३ ॥**

मृत्खनप्रदेशेऽपोऽवनयेत् । तुभ्यमिति मन्त्रान्तः ॥ ३३ ॥

**संलोभ्य मृत्खनᳪ समुद्गृह्य कृष्णाजिनस्यान्तान्सुजातो ज्योतिषा सहेति मौञ्जेनार्कमयेण वा त्रिवृता दाम्नोपनह्यति ॥ ३४ ॥**

संलोभनं विमोहनम् । कृष्णाजिनस्यान्तान्समुद्यम्य सर्वानुद्यम्य सुजात इति ‘ क्षौमेण मौञ्जेनार्कमयेण वा ’ ( आप०श्रौ० १६ । १ । २ । २९ ) इत्यापस्तम्बः । क्षौमेणाहतवाससा दाम्ना मौञ्जेन मुञ्जकृतेन, अर्कमयेण देवरूपिकाकृतेन दाम्ना बध्नाति ॥३४॥

**उदु तिष्ठ स्वध्वरेति द्वाभ्यामुत्तिष्ठति ॥ ३५ ॥**

विह्वयामह इत्यन्तः । सवितृलिङ्गकाभ्यामेताभ्यामृग्भ्यां बद्धमग्निं गृहीत्वोत्तिष्ठेत् । द्वितीयमन्त्रे—‘ देवो न सविता ’ इत्युक्तत्वादेते सावित्र्यौ एताभ्यामुत्तिष्ठति । तथा चाऽऽहाऽऽपस्तम्बः—सावित्रीभ्यामुत्तिष्ठति, इति ॥ ३५ ॥

**सजातो गर्भो असि रोदस्योरिति हरति ॥ ३६ ॥**

कनिक्रदद्वा इत्यन्तः । गर्दभसमीपं हरति ॥ ३६ ॥

**स्थिरो भव वीड्वङ्ग इति गर्दभस्य पृष्ठ आसादयति ॥ ३७ ॥**

पुरीषवाहनः, इत्यन्तः । गर्दभस्य पृष्ठे स्थापयति मृदम् ॥ ३७ ॥

**शिवो भव प्रजाभ्य इत्यासन्नमभिमन्त्रयते ॥ ३८ ॥**

वनस्पतीनित्यन्तः । स्थापितमभिमन्त्रयते ॥ ३८ ॥

**प्रैतु वाजी कनिक्रददिति तिसृभिरत्वरमाणा अश्वप्रथमाः प्रत्यायन्ति ॥ ३९ ॥**

सत्यमित्यन्तः। अत्वरमाणाँ यथा भवन्ति तथाऽश्वप्रथमा यजमानगृहं प्रत्यागच्छन्ति। न तु गर्दभप्रथमाः ॥ ३९ ॥

**अग्निं पुरीष्यमङ्गिरस्वद्भराम इति येन द्वेष्येण संगच्छेत तमभिमन्त्रयेतापश्यन्निर्दिशति ॥ ४० ॥**

व्याख्यातम् । यजमानशत्रुश्चाऽस्य संगमो भवति तमभिमन्त्रयते तेन मन्त्रेण । यदा न संगमस्तदा मन्त्रमुक्त्वा द्वितीयया निर्देशो देवदत्तमिति ॥ ४० ॥

उत्तरेण विहारं परिश्रित ओषधयः प्रतिगृह्णीताग्निमेत-
मिति द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषूपावहरति ॥ ४१ ॥

सधस्थमाऽसददित्यन्तः । विहारस्योत्तरतोऽदूरे परिश्रिते वेष्टिते कटैरन्यैर्वा प्रदेशे । ओषधीषु व्रीहियवादिषु ग्राम्यारण्यासु पुष्पाणि यासु विद्यन्ते फलानि च तासूपावहरति स्थापयति । द्वाभ्यामुपावहरति, ओषधयः प्रतिगृह्णीताग्निमेतम् , ( तै० सं०५–१–५ ) इति । एवमन्तो विहारः पश्चाल्लौकिकः संपद्यते प्रयोजनाभावाद्विहारस्येति न्यायः ॥ ४१ ॥

वि पाजसेति विस्रꣳसयति ॥ ४२ ॥

प्रणीताविस्यन्तः । प्रतिमुञ्चति दाम्ना बद्धम् ॥ ४२ ॥

आपो हि ष्ठा मयो भुव इति तिसृभिरप उपसृजति ॥ ४३ ॥

च न इत्यन्तः । ' तिसृभिरुपसृजति ' ( तै० सं० ५–१–६ ) इत्यत्र ब्राह्मणम् ॥ ४३ ॥

मित्रः सꣳसृज्य पृथिवीमिति द्वाभ्यां सꣳसर्जनीयैः सꣳसृजति ॥ (ख० ३) ॥ अर्मकपालैर्वेण्वङ्गारैर्व्रीहितुषैः पलाशकषायैश्च शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिर्यच्चान्यदृढार्थमुपार्थं मन्यते ॥ ४४ ॥

छन्दसाऽङ्गिरस्वदित्यन्तः । संसृजति मृदम् । द्वाभ्यां संसृजति संसर्जनीयैः संभारैर्दृढीकरणैः संसृजति, अर्मो ग्रामाभावस्थानम् । तत्र यानि कपालानि तानि शुचिभूतैः पिष्टैः संसृजति वेण्वङ्गारैश्चूर्णीकृतैर्व्रीहीणां च तुषैः पलाशकषायेण चूर्णेन शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिश्च संसृजति मृदम् । यच्चान्यद्द्रव्यमुपगतं मृदमुपार्थं यद्दृढार्थं यत्समर्थं तदर्थमुपगतं भवति । यज्ञियस्य यच्चान्यत्किंचिच्चूर्णादिकैः सर्वैः संसृज्य मृदमिति । अत्र दार्ढ्यहेतुभिः कपालादिभिः संसर्गम्—' अर्मकपालैः सꣳसृजति, शर्कराभिः सꣳसृजति, अजलोमैः सꣳसृजति, कृष्णाजिनस्य लोमभिः सꣳसृजति ' ( तै० सं० ५–१–६ ) इति ब्राह्मणव्याख्यातत्वाच्च ॥ ४४ ॥

मखस्य शिरोऽसीति पिण्डं करोति ॥ ४५ ॥

गतार्थः ॥ ४५ ॥

यज्ञस्य पदे स्थ इति कृष्णाजिनं पुष्करपर्णे चाभिमन्त्रयते ॥ ४६॥

अभिमृशति मृदिवाङ्गुष्ठाभ्यां निगृह्णातीत्यापस्तम्बः ॥ ४६ ॥

रुद्राः संभृत्य पृथिवीमिति च॰सृभिः पिण्डान्प्रयच्छति ॥ ४७ ॥

गर्भे आ इत्यन्तः। कर्त्रे प्रयच्छति (आप० श्रौ० १६–२४) इत्यापस्तम्बः ॥४७

वसवस्त्वा कृण्वन्त्विति चतुर्भिश्छन्दोभि-
र्महिष्युखां करोति बहुभार्यस्य ॥ ४८ ॥

यजमानायेत्यन्तः । महिष्यै प्रयच्छति यजमानो बहुभार्यः ॥ ४८ ॥

अध्वर्युरेकभार्यस्य ॥ ४९ ॥

अध्वर्युरे(र्येव ए)कभार्यः प्रयच्छति यजमानः ॥ ४९ ॥

एतैरेव यजुर्भिर्यजमानः क्रियमाणामभिमन्त्रयते ॥ ५० ॥

वसवस्त्वेत्यादिभिर्यजुर्भिर्यजमानोऽनुमन्त्रयते ॥ ५० ॥

त्र्युद्धिं पञ्चोद्धिं वा करोति ॥ ५१ ॥

उद्धिरूर्ध्वमवस्थितोऽवयवविशेषः । यथा भाण्डस्योपर्यन्यद्भाण्डं तस्याप्युपरि पुनरप्यन्यद्भाण्डमिति कक्ष्यात्रयं तथेयमेकैवोखा कक्ष्यात्रययुक्ता वा कार्या । एवं पञ्चोद्धिं करोतीत्यर्थः ॥ ५१ ॥

प्रादेशमात्रीमूर्ध्वप्रमाणेनारत्निमात्रीं तिर्यक्प्र-
माणेन व्यायाममात्रीं[१] समन्तपरिमाणेनापरिमि-
तां वा कुर्वं[१]श्चतस्रोऽश्रीः प्रतिदिशमुन्नयति ॥ ५२ ॥

प्रादेशप्रमाणा भवत्यूर्ध्वप्रमाणेनारत्निमात्री तिर्यक्प्रमाणेन व्यायाममात्री समन्ततः चतुररत्निर्व्यायामः । अपरिमिता व्यायामात्पञ्चप्रादेशाभ्यन्तरिषुमात्री वा । यथाऽऽहाऽऽपस्तम्बः–'पञ्चप्रादेशामिषुमात्रीं वा यदि पञ्च पशवो भवन्तीति वाजसनेयकम्' (१६–२–८) इति । पञ्चपशुषु वाजसनेयिमतादितरेऽपि विधयो लभ्यन्ते । पञ्चपशुष्वपि शाखान्तरस्थां कुर्वन्नुखां चतस्रोऽस्या अश्रीः करोति मृदा । न त्रिकोणाम् ॥ ५२ ॥

---

१ क. तिसृभिः ।

**परिमण्डलां वा करोति ॥ ५३ ॥**

परिमण्डला वृत्ता। यदा वृत्ता तदा गार्हपत्यपरिमाणा। बाहुभ्यां यजमानो गृह्यते ॥ ५३ ॥

अधिकारिविशेषेणाश्रिषु संख्याविशेषं विधत्ते—

**नवाश्रिमभिचरतः कुर्यात् ॥ ५४ ॥**

तथा च ब्राह्मणम्—'नवाश्रिमभिचरतः कुर्यात्' (तै० सं० ५।१।६) इति ॥ ५४ ॥

**अदित्यै रास्नाऽसीति मध्यदेश उपबिलं वा रास्नां करोति ॥ ५५ ॥**

रशनासदृशी भाण्डस्य गलगता रेखा रास्ना ॥ ५५ ॥

**अश्रीणां रास्नायाश्च संधौ द्वौ चतुरः षडष्टौ वा स्तनान्करोति ॥ ५६ ॥**

अश्रीणां रास्नायाश्च संधौ मेलने द्वौ यदा तदा प्राच्यामेव। यदा चतुरस्तदा प्रतिदिशमेकैकम्। यदा षट्तदा द्वयोर्द्वौ द्वौ। यदाऽष्टौ तदा चतसृष्वपि द्वौ द्वौ। चतुरस्रा (श्रां) परिमण्डलां वा करोति सस्तनाम्। तदेतत्सर्वं ब्राह्मणेन समाम्नातम्—'द्विस्तनां करोति, चतुस्तनां करोति, अष्टास्तनां करोति' (तै० सं ५।१।६) इति ॥ ५६ ॥

**अदितिस्ते बिलं गृह्णात्विति बिलं करोति ॥ ५७ ॥**

बिलमन्तश्छिद्रम् ॥ ५७ ॥

**कृत्वाय सा महीमुखामित्युत्तरतः सिकतासु प्रतिष्ठापयति ॥ ५८ ॥**

निदधाति। यत्र कृता तस्माद्देशादुत्तरतो वालुकासु प्रतिष्ठापयति ॥ ५८ ॥

**तस्या एव मृदोऽषाढामिष्टकां त्र्यालिखितां तूष्णीं चतुरश्रां करोति ॥ ५९ ॥**

यः करोत्युखां स एव करोत्यषाढाम्। उखामृत्तिकायाः चतुरश्रां चतुरश्रेऽग्नौ न श्येनादिषु तेषु यथा लक्षणं मध्य इष्टकानां तथा लक्षणं करोति, त्र्यालिखिता तु नित्या ॥ ५९ ॥

**गार्हपत्येऽश्वशकृत्युपसमाधाय वसवस्त्वा धूपयन्त्विति सप्तभिश्छन्दोभिरुखामश्वशकैर्धूपयति ॥(ख०४)॥ ६० ॥**

१ क. अत्रापि। २ ग. ब्राह्मणे समा°। ३ ख. चतुरस्त्रां।

अश्वस्य शकोऽश्वशकृत् । सप्तभिर्मन्त्रैरश्वशकृतोखां धूपयति वसवस्त्वेति, धूपनकर्म बहुमन्त्रम् । तथाऽन्यानि यानि बहुवाक्यानि ( बहुमन्त्राणि ) ह्युच्यन्ते अत्र वाऽऽरोहाश्वशकृद्गार्हपत्यादपनीयाग्निधूपनम् । ' गार्हपत्याद्धूपनपचने भवतः ' इ न्यायः, तस्य ( स्मिन् ) च त्यागः, अविधानादपि त्यागः ॥ ६० ॥

**अदितिस्त्वा देवीरित्यग्रेण गार्हपत्यमवटं खात्वा लोहितपचनैः संभारैरवस्तीर्य देवानां त्वां पत्नीरिति तस्मिन्नुखामवदधाति ॥ ६० ॥**

पुरस्ताद्गार्हपत्यस्यावटं लोहिता यैर्भवत्युखा पक्वा ते लोहितपचनीया गोशकृदिष्टु पत्रादयस्तैरास्तीर्य भूमिम् । देवानां त्वेति तस्मिन्नवट उखां क्षिपति ॥ ६१ ॥

**तूष्णीमषाढामन्ववधाय लोहितपचनीयैः संभारैः प्रच्छाद्य धिषणास्त्वा देवीरिति षड्भिर्गार्हपत्यात्पचति ॥ ६२ ॥**

तूष्णीमिति वचनादषाढां वाग्यतः स्थापयित्वा यदा त्वषाढा मन्त्रैस्तदा तूखा तूष्णीम् । सर्वं च धूपनादिसंस्कारं तूष्णीमिति भाष्यकृत् । अवधानस्य तूष्णीमिति वचनादविहितसंस्कारो न क्रियत इति न्यायः । तूष्णीमेवावधानमषाढाया उखालिङ्गत्वान्मन्त्राणां [तैर्न] प्रच्छादनं, लोहितपचनीयैः, इति पुनरभिधानं मन्त्रश्च लुप्यते । अत्र षड्भिः पचति ( तै० सं० ९ । १ । ७ ) इति दर्शनाद्गार्हपत्यादग्निमुखायां क्षिपति ॥ ६२ ॥

**मित्रस्य चर्षणीधृत इति पच्यमानां मैत्रियोपचरति ॥ ६३ ॥**

पच्यमानामुखां मैत्र्यर्चा प्रज्वलनादिभिरुपचरतीत्यर्थः ॥ ६३ ॥

**देवस्त्वा सवितोद्वपत्विति पक्वामुद्वपति ॥ ६४ ॥**

पक्वामुखाम् । शक्त्या, इत्यन्तः ॥ ६४ ॥

**अपद्यमाना पृथिव्याशा दिश आ पृणेत्युत्तरतः सिकतासु प्रतिष्ठापयति ॥ ६५ ॥**

ध्रुवा त्वमित्यन्तः । भस्मन उत्तरतो देशाद्वालुकासु प्रतिष्ठापयति ॥ ६५ ॥

**मित्रैतामुखां परिददाम्यभित्या एषा मा भेदीति मित्राय परिदाय वसवस्त्वा छृन्दन्त्विति चतुर्भिश्छन्दोभिरुखामजाक्षीरेणाऽऽच्छृणत्ति ॥ ६६ ॥**

---

१ दर्शनादर्थाद्गा । २ ख अजक्षी° ।

पुनः परिदानं रक्षार्थम् । मित्रस्योखायाः । अत्र वाग्यतेनाषाढोद्वास्यते । तूष्णीमषाढामुद्वास्य (आप० श्रौ० १६ । २ । २३) इत्यापस्तम्बसूत्रात् । वसवस्त्वेति च र्भिर्मन्त्रैरजक्षीरेण सेचनमुष्णतापनयनार्थम् । अनेन दृढा च भवत्युखा जक्षीरेण सिक्ता । लोकेऽजक्षीरस्य सर्वव्याधिपरिहारहेतुत्वाद्वेदेऽपि—'आग्नेयी वा एषा । यदजा' इत्युक्तत्वात्परमत्वम् । सेचनसाधनं विधत्ते—अजक्षीरेणाऽऽच्छृणत्ति परमं वा ( तै० सं० ५ । १ । ७ ) इति ॥ ६६ ॥

सप्तैकविꣳशतिं चतुर्विꣳशतिं वा माषानादाय पुरुषशिरोऽच्छैति राजन्यस्य वैश्यस्य वेषुहतस्याशनिहतस्य वा । पुꣳसो माषानुपन्युप्य ॥ ६७ ॥

सप्तैकविंशतिं वा गृहीत्वा माषान्पुरुषशिरोभिमुखो गच्छति क्षत्रियस्य वा वैश्यस्य वा । इषुणा यो विद्धो म्रियते विद्युता वा हतः । अथ वा—एकविंशतिसंख्याकानि माषबीजानि स्वीकृत्य तैर्युक्तः पुरुषशीर्षं प्राप्तुं गच्छेत् । तथा च ब्राह्मणेनोक्तम्—'एकविꣳशत्या माषैः पुरुषशीर्षमच्छैति ( तै० सं० ५ । १ । ८ ) इति । माषानुपन्युप्यास्य शिरसि मेध्यं कृत्वा हरति ( तै० सं० ५ । १ । ८ ) इति लिङ्गात् ॥ ६७ ॥

अयं योऽसि यस्य त इदꣳ शिर इति पुरुषशिरः प्रच्छिद्यैतेन त्वमत्र शीर्षण्वानेधीति सप्तधा वितृण्णां वल्मीकवपां शिरसः स्थाने प्रतिनिदधाति ॥ ६८ ॥

अयं योऽसीति च्छेदनं पुरुषशिरसः । एतेन त्वमत्र शीर्षण्वानेधीति सप्तच्छिद्रां । वल्मीकवपां शिरःस्थाने निदधाति ॥ ६८ ॥

योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः । यमं गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः । येनाऽऽपो नद्यो धन्वानि येन द्यौः पृथिवी दृढा । हिरण्यकक्ष्यान्सुधुराह्निरण्याक्षानयः शफान् । अश्वाननश्यतो दानं यमो राजाऽभितिष्ठतीति तिसृभिर्यमगाथाभिः परिगायति ॥ ६९ ॥

यमो गीयते यास्वृक्षु ता यमगाथाः । योऽस्य कौष्ठ्येत्याद्या आरण्यककाण्डे पितृमेधप्रपाठके समाम्नाताः । अत्रापेक्षितानां यमगाथानां संख्यां विधत्ते—तिसृभिः परिगायति ( तै० सं० ५ । १ । ८ ) इति । शिरः प्रदक्षिणं कुर्वन् । यमगाथाभिः परिगायति वदतीत्यर्थः ॥ ६९ ॥

आहरञ्ज्ञातीत्येके ॥ ७० ॥

यमगाथां जपति वा प्रस्थितः । यस्तु ब्राह्मणो याजनाध्यापनप्रतिग्रहान् परित्यज्य गानेनैव जीविकां संपादयति तादृशाय ब्राह्मणाय शास्त्रीयं देयं किमपि न दद्यात् । हि यस्माद्गाथा गानविद्यैव तद्द्रव्यममेध्यं कृत्वा वृङ्क्ते देवपितृकार्येभ्यो वर्जयति तस्मात्तादृशाय न देयम् । अत्र प्रसङ्गात्पुरुषार्थे कश्चिन्निषेधं दर्शयति—'तस्माद्गायते न देयं गाथा हि तद्वृङ्क्ते ( तै० सं० ९ । १ । ८ ) इति ॥ ७० ॥

इदमस्माकं भुजे भोगाय भूयादिति पुरुषशिर आदत्ते ॥ ७१ ॥

आदानं पुरुषशिरसः ॥ ७१ ॥

उदेह्यग्ने अधि मातुः पृथिव्या इत्याहरति ॥ ७२ ॥

पुरुषशिर इत्यनुवर्तते ॥ ७२ ॥

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्र यो दधत् । परि वाजपतिः कविरित्येषा । परि प्रागाद्देवो अग्नी रक्षोहामीव चातनः । सेधन्विश्वा अपद्विषो दहन्रक्षांसि विश्वहेति तिसृभिः पर्यग्नि करोति । मृदा प्रलिप्य निदधाति ॥ (ख०५) ॥ ७३ ॥

इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने प्रथमः पटलः ॥ १ ॥

आहृतं शिरो लौकिकेनाग्निना परि त्रिविष्ट्यध्वरमिति तिसृभिः पर्यग्निकरणं सकृत् । त्रिरिति भाष्यकृत् । गार्हपत्याग्निना वेति । लौकिकेनोपायेन यथा क्रिमयो न जायन्ते तथा शिरः कृष्णमृदा प्रलिप्य स्थापयेत् । न च शवस्पर्शदोषः, प्रत्यक्षविधानात् केचित्तु सचैलं स्नानं कुर्वन्तीति ॥ ७३ ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्ने प्रथमः पटलः ॥ १ ॥

अथैकादशप्रश्ने द्वितीयः पटलः ।

अग्निभ्यः कामाय पशूनालभते । अश्वमृषभं वृष्णिबस्तं प्राजापत्यमजं तूपरं मुष्करा भवन्ति ॥ १ ॥

काम्यन्त इति कामाः पुत्रपश्वादयः, तद्धेतवोऽग्नयः । अग्नयः कामा वा एक

इति वचनेन [कामो] गुणः । तानमावास्यायां पौर्णमास्यां वा पर्वसंनिधौ देवनक्षत्रे वाऽऽलभेत । अश्वादिपञ्चपशुशीर्षाण्युपदधाति (तै० सं० २९ । २ । ९) इत्यादि ब्राह्मणे विहितम् । तत्रै वाग्निप्रकरणेऽपि–प्रजापतिरग्निमसृजत (तै० सं० ५ । ५ । १०) इति पञ्चपशुशीर्षोपधानं द्रष्टव्यम् । मुष्करा अण्डसहिताः पशवः । प्राजापत्यं च तूपरं शृङ्गरहितं पूर्वमुपाकरोति । तेभ्यः पश्चादश्वर्षभवृष्णिवस्तानग्निभ्यः कामायोपाकरोति । वाजसनेयिनां तु पुरुष एव पशुभिर्विकल्पेन यदा तदा छिद्येत पुरुषशिरः । अत्र पश्वर्थवेदिकरणं तु चतुरथाक्षा पञ्चोपरा(?) रज्जुः, तस्यास्तृतीयेन भागेन वेदिमानं विद्यते । एकादशिनीविकारत्वात् । केचित्तु सौमिकीमेव कुर्वन्ति । एकादशिनीप्रसङ्गे नोपयुक्तेति पृथक्सोमप्रयोगान्निरूढसामान्यान्निरूढविकारमपि । एकादशिनीधर्माश्च वैशेषिकाः संभवन्ति । अग्नीषोमीयः पशुर्मूलप्रकृतिर्दर्शश्च ।

अत्र पशुकर्म—पशुना यक्ष्य इत्युक्त्वा षड्ढोता । केचित्तु न कुर्वन्ति षड्ढोतारम्, अङ्गभूतत्वादिति । तैर्यक्ष्यमाणो न भवति । सोमेन यक्ष्यमाण इति तेषु विद्युदपि न कर्तव्यः । यक्ष्यमाणो वेद्मेति सोऽप्युक्तः । यद्यपि तैर्यक्ष्यमाणो न भवति । निरूढप्रकृतित्वात्तु षड्ढोता क्रियते विद्युच्च । उदवमानीयादिष्विह न क्रियते । सोमार्थमपामुपस्पर्शनं कृतं सोमे न तावत्क्रियते । तदेव प्रसङ्गेनार्थं साधयति । परित्यज्याग्निमन्यं प्रणीय पश्विष्टिर्व्रतोपायनं शाखाहरणं यूपाहुत्यादि एकादशिनीवत् । यूपानां छेदनं पञ्चानाम् । वेदं कृत्वा वेद्युत्तरवेदी, अग्निप्रणयनादि पशुवत् । प्रजापतये त्वा जुष्टमुपाकरोमि, इत्युपाकरणं प्राजापत्यस्य । अग्निभ्यः कामाय त्वा जुष्टमुपाकरोमीतीतरेषाम्–अश्वस्य बलीवर्दस्य वृष्णेः, मेषस्य वस्तस्येति । तथा नियोजनम्–प्रजापतये त्वा जुष्टं नियुनज्मि । अग्निभ्यः कामाय त्वा जुष्टं नियुनज्मि, इति । तथा प्रोक्षणादीनि॥ १॥

तत्रैतासां सामिधेनीनां प्राकृतीभिः सामिधेनीभिः समुच्चयमभ्युपेत्य संख्याविशिष्टा सामिधेनीर्विधत्ते—

**एकविꣳशतिं चतुर्विꣳशतिं वा सामिधेनीः पराचीरन्वाहैकादश प्राकृतीरनूच्य समास्त्वाऽग्न ऋतवो वर्धयन्त्विति दशाऽऽग्निकीरन्वाहोपेमसृक्षि वाजयुर्वचस्यां च नो दधीत नाद्यो गिरो मे । अपांनपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि । अपांनपादाह्यस्थादुपस्थं जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन्निति तिस्रोऽप्सुमतीर्यदि चतुर्विꣳशतिर्भवन्ति ॥ २ ॥ अमुत्र भूयादध**

यद्यमस्येत्यामयाविनः कुर्यात् ॥ ३ ॥ बृहस्पते सवितर्बोधयैनमित्यनामयाविनः ॥ ४ ॥ राये अग्ने महे त्वा दानाय समिधीमहि । ईडिष्वा हि मही(हे)वृषन्द्यावा होत्राय पृथिवीम् । उद्वयं तमसस्परीति ज्योतिष्मत्या परिदधाति ॥ ५ ॥

एकविंशतिं चतुर्विंशतिं वा सामिधेनीः पराचीरितिवचनात्प्रथमोत्तमयोः प्र वो वाजा ( तै० ब्रा० ३-५-२ ) इत्येकादशोक्त्वा, आजुहोतेत्येकादशिनीतरेषां गोत्राणां, त्वं वरुण इति वसिष्ठराजन्यानामेकादशिनी । समास्त्वाऽग्ने ( तै० सं० ४ १--७ ) इत्यष्टावुक्त्वा ' बृहस्पते सवितर्बोधयैनमित्यनामयाविनो नवमी । अमुत्र भूयादित्यामयाविनो नवमी (वा) । राये अग्न इति विंशी, उद्वयं तमसस्परीत्येकविंशी परिधानीया । यदा चतुर्विंशतिस्तदैकादश प्राकृतीरुक्त्वाऽऽग्निकीश्च नव पूर्ववदुक्त्वा—'उपेमसृक्षि' इति तिस्रोऽप्सुमतीरुक्त्वा—उद्वयं तमसस्परीति ज्योतिष्मती परिधानीया । यत्तु—भाष्यकारेणोक्तम्—एकादश प्राकृतीः समास्त्वाऽग्न इति दशाऽऽग्निकीः । चतुर्विंशतिपक्षे तु तत्र शाखान्तरोक्ता उपेमसृक्षि वाजयुरित्याद्यास्तिस्रो धाय्याः प्रक्षिप्य चतुर्विंशतिसंख्या पूरणीया, इति । पराचीरनावृताः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

हिरण्यगर्भः समवर्तताग्र इति स्रुच्यमाघारयति ॥ ६ ॥

आघारस्य प्रत्याम्नायो हिरण्यगर्भ इति ॥ ६ ॥

ऊर्ध्वा अस्य समिधो भवन्तीति प्रयाजानामाप्रियो भवन्ति ॥ ७ ॥

यद्यप्येकादशैव प्रयाजास्तथाऽपि द्वितीयतृतीययोर्मन्त्रयोः पुरुषभेदेन व्यवस्थितत्वान्मन्त्राणां द्वादशसंख्या न विरुध्यते । सा च व्यवस्था सूत्रकारेण दर्शिता—' नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानां तनूनपादितरेषां गोत्राणाम् ' इति ॥ ७ ॥

आग्नेयीस्त्रिष्टुभ आग्नेयानां याज्यानुवाक्या भवन्ति ॥ ८ ॥

आग्नेयीस्त्रिष्टुभः संभरणे सीद होतरिति तिस्रो भुवो यज्ञस्येति च तिस्रो याज्ञसेन्याश्चित्याः ॥ ८ ॥

यः प्राणत इति प्राजापत्यस्य ॥ ९ ॥

यः पशुः प्राजापत्यस्तस्यैते याज्यानुवाक्ये इत्यर्थः । तत्र वपायां द्वे ऋचौ पुरोडाशे द्वे ऋचौ हविषि द्वे ऋचाविति षडृचो याज्यानुवाक्याः प्रजापतये छागस्य वपाया इति । अग्निभ्यः कामायाश्वस्यर्षभस्य वृष्णेर्वस्तस्य च वपानां मेदसामिति तैत्ति० ।

जातवेदश्च(श्चे)न्द्र वपाभिर्गच्छ देवानिति होमः । उक्ता ऊहा एकवचनान्ता अपि बहूनामग्नीनां साधयन्ति निगमाः । आग्नेयीस्त्रिष्टुभ इति वचनात् ॥ ९ ॥

**वैश्वानरः प्राजापत्यो वा द्वादशकपालः पशुपुरोडाशो भवति ॥ १० ॥ सिद्धꣳ संतिष्ठते ॥११॥**

यत्प्रजापत्यं वायोश्छिद्यते । यद्वायव्यः पशुर्भवति तेन वायोर्न प्रच्यवते । यत्प्राजापत्यः पुरोडाशस्तेन प्रजापतेर्न प्रच्यवते । यस्तु द्वादशकपालः पुरोडाशः क्रियते, तेन शाखान्तरविहिता देवता वैश्वानरस्तस्या अपि न च्यवते वैश्वानरो विकल्पेन लक्ष्यते ॥ १० ॥ ११ ॥

**अपि वाऽऽग्नेयान्पर्यग्निकृतानुत्सृज्य तेषाꣳ शिराꣳसि प्रच्छिद्य मृदा प्रलिप्य निदधाति ॥ १२ ॥**

अपि वेति शाखान्तरपक्षप्रदर्शनार्थम् । अत्रेदं चिन्तनीयम्—किमाग्नेयाः पशव एव नाऽऽलभ्याः, किंवा तान्पशूनुपाकृत्य पर्यग्निकरणादूर्ध्वमुत्सृजेत्, आहोस्वित्समाप्तिपर्यन्तमनुतिष्ठेदिति । नाऽऽद्यः—पशुप्राप्त्यभावप्रसङ्गात् । न द्वितीयः, मध्ये परित्यागेन यज्ञभ्रंशप्रसङ्गात् । न तृतीयः—अत्रैवाश्ववृष्णिबस्ताशिरसां गतसारत्वेन भविष्यन्त्यां चित्यामनुपधेयत्वप्रसङ्गात् । एतद्दोषत्रयपरिहारायेत्थं कर्तव्यम्—आलम्भेनोत्सर्गेण च प्रथमतृतीयदोषौ न भविष्यतः । प्राजापत्येन तूपरेण समापनाद्यज्ञभ्रंशरूपो मध्यमदोषोऽपि न भविष्यति । अपि वा मरणोत्तरकालं संज्ञप्तानां संज्ञप्तहोमं हुत्वा शिरांसि छित्त्वा मृदा प्रलिप्य स्थापयति ॥ १२ ॥

**अपः कबन्धान्यभ्यवहराति ॥ १३ ॥**

उदकेषु कबन्धान्निक्षिपति ॥ १३ ॥

**प्राजापत्येन सꣳस्थापयति ॥ १४ ॥**

प्राजापत्येन संस्थाप्य तस्या एव च निगमाः, नाग्नीनाम् ॥ १४ ॥

**अपि वैतेषाꣳ सर्वेषाꣳ स्थाने वायवे नियुत्वते श्वेतमजं तूपरमालभेत ॥ १५ ॥**

नियुत्संज्ञका अश्वविशेषा यस्य वायोः सन्ति सोऽयं नियुत्वान् । तस्मै श्वेतं छागं तूपरं शृङ्गरहितमालभेत । अपि वा पञ्चपशूनां स्थाने वायुर्नियुत्वान् ॥ १५ ॥

**तस्य प्राजापत्येन कल्पो व्याख्यातः ॥ १६ ॥**

तस्य निरूढपशुबन्धवद्विधिः, विद्युद्वृष्टिवर्जं समानविधानात्पञ्चपशुभिः । आप्रिय आघारश्च पञ्चपशुवत् ॥ १६ ॥

**वायुमती श्वेतवती वपाया याज्यानुवाक्ये भवतः ॥ १७ ॥**

इदं याजुषं हौत्रम् । पीवोऽन्ना॰ रयि वृध इत्यृचौ वायुमत्यौ श्वेतवत्यौ च, ते वायवे समनस इति वायुशब्दसद्भावाच्छ्वेतः सिषक्तीति श्वेतशब्दसद्भावाच्च । वायुर्नियुत्वान्ययोर्देवता ते वायुमती नियुत्वती दैवतस्य याज्यानुवाक्ये भवत इत्यर्थः ॥१७॥

**वायुमती नियुत्वती पशोर्दैवतस्य वैश्वानरः प्राजापत्यो वा द्वादशकपालः पुरोडाशो भवति ॥१८॥**
**सिद्ध॰ संतिष्ठते ॥ १९ ॥**

गतार्थः । अत्र, वायव्यः कार्यः ३ प्राजापत्याः ३ ( तै० सं० ९ । ९ । १ ) इति विचारितं ब्राह्मणे । वायव्यः कर्तव्यः पशुः प्राजापत्यः पुरोडाश इति वैखानसः । यस्तु प्राजापत्यो द्वादशकपालः पुरोडाशः क्रियते तेन शाखान्तरविहिता देवता । वैश्वानरस्त्वाग्निगुणकेनाभिहितम्(तः) । तस्याग्नये वैश्वानराय द्वादशकपालं पशुपुरोडाशं निर्वपति ( आप० श्रौ० १६ । २ । १२ ) । इति अन्यदेवता अपि पशुपुरोडाशदेवताः पशुदेवतां वर्धयन्ति । तस्मादवीवृधन्त पुरोडाशेनेत्यस्या निवृत्तिः । यथा त्वस्माकं पाठः—अवीवृधन्त ग्रहैरिति । तेन ज्ञायते ग्रहास्त[एव] देवता अतो ग्रहदेवता अभिवर्धयन्ति पशुदेवताः । अत एव पठितम्— 'इतरथा तु अवीवृधन्त ग्रहैः पुरोडाशैः' इत्येवमवक्ष्यच्छ्रुतिः । यः कश्चानाग्नावाग्निगुणके क्रतौ पशुरालभ्यते । अग्नीषोमीयसवनीयानूबन्ध्यासु वैश्वानर एवास्य द्वादशकपालः पुरोडाशः क्रियते । अग्निर्दे(गुणकदे)वता वैश्वानर इहापि । भाष्यकारस्तु—वचनादेवाग्निर्वैश्वानरोऽन्यत्र वैश्वानर एवेति व्याचष्टे । सिद्धं कृत्स्नं संतिष्ठते समाप्यते ॥ १८ ॥ १९ ॥

**मृदा प्रलिप्य वायव्यस्य शिरो निदधाति ॥ (ख०६) ॥ २० ॥**

**इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने द्वितीयः पटलः ॥ २ ॥**

तस्य शिरश्छित्त्वाऽभिमर्शने कृते मृदा च प्रलिप्य वाव्ययशिरः स्थाप्यते, तेनेष्ट्वा वायव्येन पशुना, पञ्च पशुभिर्वा, समानविधानत्वात् । संवत्सरं माँसपरिवर्जनं स्त्रियाः परिगमनवर्जमुपरिशयनवर्जनं च । यदाऽप्यर्वाक्संवत्सरादिज्या तदाऽपि संवत्सरं वायव्यव्रतानि बाध्यन्त इति भाष्यकृत् । साग्निकधर्मव्रतैश्च सर्वेषां समुच्चय[1]

1 ग. °मुच्छ्य ।

इति न्यायः । अथ वा मांसाशनमुपरिशय्यां च कुर्यात् । स्त्रियं तु नोपगच्छेत् । एवं संवत्सरमिति वाजसनेयकम् । इति वायव्यपशुः ॥ ६ ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकाया-
मेकादशप्रश्ने द्वितीयः पटलः ।

अथैकादशप्रश्ने तृतीयः पटलः ।

**यत्प्राग्दीक्षणीयायास्तत्कृत्वा द्विहविषं त्रिहविषं वा दीक्षणीयामिष्टिं निर्वपति । आग्नावैष्णवमेकादशकपालमाग्नावैष्णवं वा घृते चरुमादित्यं च घृते चरुं वैश्वानरं द्वादशकपालं पुरस्तात्तृतीयमसंवत्सरभृतः ॥ १ ॥ दीक्षाहुतिकाल आकूत्यै प्रयुजेऽग्नये स्वाहेति पश्चाऽऽध्वरिकीर्हुत्वाऽऽकूतिमाग्निमिति षडाग्निकीर्जुहोति । विश्वेदेवस्य नेतुरिति सप्तमीम् ॥ २ ॥**

यत्पूर्वं दीक्षणीयायाः कर्म तत्कृत्वा द्रव्यनिर्देशः संभारयजूंषि अग्निपरित्यागः सोमपरिवे(पे)षणं सप्तहोता परित्यज्याग्निं क्रत्वर्थमग्निं प्रणीय त्रिहविष्क आग्नावैष्णव आदित्यस्तृतीयो वैश्वानर इति । असंवत्सरभृतो यजमानस्याऽऽग्नावैष्णवादपि पुरस्ताद्वैश्वानरः । आदित्यस्य पुरस्तादिति भाष्यकारोक्तिस्तस्याऽऽनन्तर्यात् । अग्निस्तु वैश्वानरगुणकः, वाक्यशेषान्मन्त्रलिङ्गाच्च । आग्नावैष्णवं घृते चरुमिति घृतमग्नेः—‘ घृतमस्य योनिर्घृते श्रितः ’ इत्यादिमन्त्रवर्णात् । तण्डुलास्तु विष्णोः प्रियाः । ‘ येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय’ इति श्रुतेः । तस्मादुभयप्रियत्वाद्घृतयुक्तश्चरुः कार्यः । अदितिर्देवता यस्य चरोः सोऽयमादित्यः । आग्नावैष्णवं हविः प्रथमं कृत्वा द्वितीयहविष्ट्वेनायमादित्यश्चरुः कार्यः । उख्यस्याग्नेः संवत्सरधारणं ब्राह्मणे विदधाति—यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते ( तै० सं० ५-५-१ ) इति । तेन च धारणेन विनाऽग्निचयनं परिपक्वगर्भपातेन समानम् । अतो यजमानो म्रियेत । तस्मात्संवत्सरं धारयितुमशक्तः पुमान्संवत्सरात्प्रागेव तिस्रः षड्वा दश वा रात्रीर्दीक्षाश्चिकीर्षुर्वैश्वानरं द्वादशकपालं निर्वपेत्, तस्य च वैश्वानरस्याग्नेः संवत्सररूपत्वात् । यथा लोके संवत्सरेण पूर्णो गर्भः काले सुखेन जायत एवमप्यनयेष्ट्या संवत्सरं प्राप्य काले प्राप्ते चितवान्भवति । ततो न म्रियते । विहितानां हविषां त्रित्वं प्रशंसति—‘ त्रीण्येतानि हवींषि भवन्ति ’ ( तै० सं० ५-५- ३ ) इति । अत्र याजुषहौत्रसत्त्वे याजुषोक्तरीत्या सप्तदश

साभिधेन्यः । अग्निरग्रे प्रथमो देवतानाम्, अग्निश्च विष्णो तम उत्तमं मह इत्यग्नाविष्ण्वोर्याज्यानुवाक्ये । अदितिर्न उरुष्यतु महीमू षु मातरम्, इत्यदितेः । वैश्वानरो न ऊत्या पृष्टो दिवि, इति वैश्वानरस्य । त्रिहविरपि दीक्षणीया आज्येडान्ता । त्रिधाकरणमादित्यवैश्वानरयोरिति न्यायः । भाष्यकारस्तु—आज्येडान्ते ब्रह्मभागं प्राश्योपस्थानं कृत्वा ब्रह्मा निष्क्रामति, इति व्याचष्टे । प्राग्वंशकरणं वपनं चोत्तरेण बहिरित्येवमादि प्राग्दीक्षाहुतिभ्यः । आहवनीयमुपोपविशति, इत्येवमन्तं कृत्वा दीक्षाहुतयः । वैकल्पिका विधयः सर्वे लभ्यन्त इहापि । अध्वरो ज्योतिष्टोमः । अध्वरे भवा आध्वरिक्यस्ताः पञ्च—आकूत्यै प्रयुजेऽग्नये स्वाहेति स्रुवेण चतस्रः स्रुचा पञ्चमी । आकूतिमग्निमिति षडाग्निकीर्दीक्षाहुतीर्ध्रुवा अत एव सह पूर्णाहुत्या हुत्वाऽभिघारणम् । भाष्ये तु मन्त्रेणाऽऽप्यायनमिति । विश्वेदेवस्य नेतुरिति सप्तमी पूर्णाहुतिः । सप्तमीतिवचनाद्यजमानोऽनुमन्त्रयते वातं प्राणमिति

ननु—अग्नौ प्रकृतितो दीक्षाहुतयः षट्प्राप्तास्तासां च षण्मन्त्राः प्रकृतित एव प्राप्ताः—आकूत्यै प्रयुजेऽग्नये स्वाहा ( तै० सं० ( १–२–२ ) इत्यादयः । अग्नावपरे षण्मन्त्राः—'आकूतिमग्निं प्रयुज९ स्वाहा ' इत्यादयः । ते च दीक्षार्थतया विनियुक्ताः । षड्भिर्दीक्षयति ( तै० सं० ५–३–९ ) इति । दीक्षाहुतीनां चाभ्यासः श्रूयते—' द्वादश जुहोति ' इति । तत्र संशयः—किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते समुच्चीयन्ते वेति ।

तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च ।
वैकृताः प्राकृतान्मन्त्रान्बाधेरन्नेककार्यतः ॥

यद्यपि ' द्वादश जुहोति ' इति वचनाद्धोमानामभ्यासस्तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकेन प्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते ब्रूमः—

न प्रत्यक्षेण वाक्येन होमार्थे वैकृताः श्रुताः ।
दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥
सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते ।
वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥

' षड्भिर्दीक्षयति ' इति दीक्षार्थता श्रुता । सा च स्वाहाकारालिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते । सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे प्राकृतबाधे वा प्रमाणमस्ति तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥ १ ॥ २ ॥

यस्मा इन्मुष्टिकरणात्तत्कृत्वा शणकुलायेन मुञ्ज-
कुलायेन वोखामुपस्तीर्य मा सु भित्था मा
सु रिष इति द्वाभ्यामाहवनीयाङ्गारेषूखां प्रवृ-
णक्ति ॥ ३ ॥

मुष्टेः क्रिया मुष्टिकरणं पूर्वं च—मुष्टी कृत्वा ( स० सू० १ । २ । ६ ) इति मुष्टिकरणं तत्कृत्वा यत्राध्वर्युरौद्ग्रहणानि जुहोति इत्येवमादि संभारयजूंषि चैनमध्वर्यु-र्वाचयति ( स० श्रौ० ७ । १ । ३ ) इत्यन्तम् । शणः पक्षिविशेषः, तस्य कुलायो नीडमित्यर्थः । मुञ्जाः शरखण्डास्तैः प्रच्छाद्याभ्यन्तरमुखायां मा सु भित्था मा सु रिष इति द्वाभ्यामाहवनीयेऽधिश्रयत्युखां बाह्याम् । अग्निनेति मन्त्रान्तः ॥ ३ ॥

मित्रैतामुखां तपेत्यङ्गारैः परितपति ॥ ४ ॥

सर्वत इन्धनं प्रदक्षिणमङ्गारैः ॥ ४ ॥

द्रवन्न इति तस्यां क्रमुकमुल्लिखितं घृतेनाङ्क्त्वाऽवदधाति ॥ ५ ॥

तस्यामुखायां क्रमुकमल्पं काष्ठशकलम् । उल्लिखितं क्रमुकं घृतेन सेचयित्वा क्षिपति । चूर्णरूपं क्रमुकमुखायां क्षिपतीति वैखानसेनोक्तम् ॥ ५ ॥

मुञ्जाश्च ॥ ६ ॥

मुञ्जैः सहावधातीत्यर्थः ॥ ६ ॥

यस्तु गतश्रीः सन्पुनर्भूतिं कामयेत तस्य मथिताग्निमपोह्य पूर्ववत्प्रवृञ्जनमपि विधत्ते—

यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य
स्यान्मथित्वा गतश्रियोऽवदध्यात् ॥ ७ ॥

आहवनीये प्रतप्तायामुखायां योऽग्निः संभवेत्स एव तस्य भूतिकामस्य गतश्रियः कार्यो नतु मथितः । एष संभवत्येष वै स्वयंभूर्नाम भवत्येव ( तै० सं० ५ । १ । ९ ) इति । अत उखायामेष संभवति तस्मान्मथनापेक्षामन्तरेण स्वयमेवोत्पन्नत्वादेष स्वयंभू-रित्युच्यते । एवं सति यजमानो भवत्येव भूतिं प्राप्नोत्येव ॥ ७ ॥

यजमानद्वेषिणोऽध्वर्योः प्रकारान्तरं विधत्ते —

यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यत-
स्तस्याऽऽहृत्यावदध्यात् ॥ ८ ॥

यमुद्दिश्य शत्रुमस्मै जनयेयमिति कामयेताध्वर्युस्तस्यान्यतो गृहान्तरादिप्रदेशादग्निमानीयोखायां प्रक्षिपेत् । तथा सति विलम्बमन्तरेणैव भ्रातृव्यं जनयति ॥ ८ ॥

अथ कामनाविशेषेणान्यमग्निं विधत्ते —

अम्बरीषादन्नकामस्य ॥ ९ ॥

घृतादिना शाकादिभर्जनार्थं यल्लौकिकं लोहादिपात्रं तदम्बरीषं तस्मिन्प्रतप्ते घृतप्रक्षेपेण प्रौढा ज्वालोत्पद्यते । ततोऽग्निमाहृत्योखायामवदध्यात् । लोके हि तस्मिन्नम्बरीषे शाकादिकमन्नं धार्यते । अतः काम्यमानेनान्नेनैतस्याग्नेः समानयोनित्वाद्यजमानोऽन्नं प्राप्नोत्येव ॥ ९ ॥

प्रदाव्यादाहरेद्यं कामयेत शूरो मे राष्ट्र आजायेतेति ॥ १० ॥

प्रदाव्यो वनदाहः । तस्मादाहरेदित्यर्थः । मम राष्ट्रे शूरो धनंजयसदृशः, आजायेतेति तस्य प्रदाव्यादाहरणमुक्तमस्य । अन्नकाम इति भाष्यकृत् ॥ १० ॥

वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ॥ ११ ॥

तस्याऽऽहृत्यावदध्यादित्यनुवर्तते । वृक्षाग्राज्ज्वलत आहृत्योख्यं ब्रह्मवर्चसकामस्य यजमानस्य ॥ ११ ॥

भर्जनादन्नकामस्य ॥ १२ ॥

अत्रापि तस्याऽऽहृत्यावदध्यादित्यनुवर्तते । भर्जनं कम्बुः स यत्र त्यक्तवाऽर्थाद्धाना भर्ज्यन्ते तत आहृत्यावदध्यादित्यर्थः ॥ १२ ॥

काम्यमग्निं कुर्वाणो नाऽऽहवनीयेऽनुप्रहृञ्ज्यात् ॥ १३ ॥

नाऽऽहवनीये संसृजेत् काम्यमग्निं कुर्वन्यजमानोऽपि ॥ १३ ॥

जात उख्येऽनुगमयत्याहवनीयम् ॥ १४ ॥

आहवनीये संसृजनस्य उख्याग्नौ जात उख्येऽनुगमयत्याहवनीयम् । १४ ॥

परस्या अधि संवत इत्यौदुम्बरीꣳ समिधमादधाति । परस्याः परावत इति वैकङ्कतीम् । ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् ॥ १५ ॥ शमीमयीं पूर्वामेके समामनन्ति । वैकङ्कतीमुत्तराम् ॥ १६ ॥

समिद्द्वये क्षिप्यते ॥ १५ ॥ १६ ॥

सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जात-
मुख्यमुपतिष्ठते ॥ १७ ॥

आसद इत्यन्तः । अत्र तिसृभिरन्त उपस्थानं बलवतो जातस्य ॥ १७ ॥

यदग्ने यानि कानि चेति पञ्चभिरपरशुवृक्णमौदु-
म्बरमिध्ममभ्यादधाति ॥ १८ ॥

दधाम्यास्य इत्यन्तः । अपरशुवृक्णं परशुच्छेदरहितं काष्ठं यदग्ने इत्यादिमन्त्रैः समिधमादध्यात् । अथवा—पञ्चभिरन्ते सकृदेवौदुम्बरमपरशुवृक्णं वास्यादिभिरच्छिन्नं हस्तेनैव भग्नमुख्य इध्मं क्षिपति । १८ ॥

तैल्वकमभिचरतः कुर्याद्वाहुकं वेतरेषां सर्वास्तेना
भवन्ति ( इति ) ॥ १९ ॥

तैल्वकं तिल्वकस्येध्मम् । बहुगाल्वं तिल्वक इति केचित् ॥ १९ ॥

दंष्ट्राभ्यां मलिम्लूनित्याश्वत्थीं समिधमादधाति ।
ये जनेषु मलिम्लव इति वैकङ्कतीम् ॥ यो अस्म-
भ्यमरातीयादिति शमीमयीम् । ता आदधद्यं द्वेष्टि
तस्य वधं मनसा ध्यायति । २० ॥ २१ ॥

सर्वत्र समिधमादधातीत्यन्वयः । ताः समिध आधानकाले यं यजमानमुद्दिश्य द्वेषं करोति तस्य वधमध्वर्युर्मनसा ध्यायतीत्यर्थः ॥ २० ॥ २१ ॥

संशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे
औदुम्बर्यौ समिधावादधाति ॥ २२ ॥

अहमित्यन्तः । औदुम्बर्यौ द्वे समिधौ तूष्णीमादध्यादिति शेषः ॥ २२ ॥

अथ यजमानं वाचयति ॥ (ख० ७) ॥ २३ ॥

उत्तमे राक्षोघ्नसूक्तस्यान्तिमे ऋचौ 'संशितं मे' इति यजमानं वाचयेत् ॥२३॥

ब्रह्म क्षत्रꣳसयुजा नह्यथ ते ब्रह्मा ह क्षत्रं जिन्वति
क्षत्रियस्य क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत्स-
मीची कृण्वतो वीर्याणीति जपति ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳस्वे योनौ भरि-
ष्यत्युखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजा-

**पतिर्विश्वकर्मा युनक्त्विवति मौञ्जे शिक्ये षडुद्यामे द्वादशोद्यामे वोखामवदधाति ॥ २५ ॥**

मौञ्जे शिक्ये मुञ्जकृते षडुद्यामः शिक्यपादः, ते यस्य षट् द्वादश वा तत्रोखां निदधाति । न यथा दह्यते शिक्यं तथोपायं कुर्यात् ॥ २५ ॥

**अग्ने युक्ष्वा हि ये तवेति वैताभ्यामेकविंशतिनिर्बाधो रुक्मः सूत्रोतस्तमन्तर्वेद्यासीनो दृशानो रुक्म इति बहिष्टनिर्बाधं यजमानो विपर्यस्य प्रतिमुञ्चतेऽधस्तान्निर्बाधꣳ सादयति ॥ २६ ॥**

सुवर्णफलके निम्नोन्नतभावमापद्य स्पर्शकारिणं पुरुषं निःशेषेण बाधन्त इति निर्बाधाः स्फोटकसदृशा अवयवविशेषाः । ते चैकविंशतिसंख्याका यस्मिन्रुक्मे सोऽयमेकविंशतिनिर्बाधः । तादृशं रुक्मं कुर्यात् । सूत्र उतः सूत्रोतः सूत्रे लाञ्छितः । दृशानो रुक्म इत्यनेन मन्त्रेणोपरिष्टाद्यजमानोऽन्तःस्फोटकं लङ्घयित्वा रुक्मं पश्चाद्बहिः स्फोटकान्कुरुते ॥ २६ ॥

**नक्तोषासेति कृष्णाजिनं प्रतिमुञ्चते ॥ २७ ॥**

नक्तोषासेति कृष्णाजिनमुपरि करोति बाह्वोः ॥ २७ ॥

**विश्वा रूपाणीति शिक्यपाशान् ॥ २८ ॥**

प्रतिमुञ्चन इत्यनुवर्तते । शिक्यस्य यः पाशस्तं ग्रीवायां प्रतिमुञ्चते ॥ २८ ॥

**अपि वा शिक्यं प्रतिमुच्य कृष्णाजिनं प्रतिमुञ्चते ॥ २९ ॥**

अपि वा यथासमाम्नायपाठेन पठितस्तथेत्यर्थः ॥ २९ ॥

**सुपर्णोऽसि गरुत्मानित्युख्यमवेक्षते ॥ ३० ॥**

अचलितस्यैवावेक्षणमुख्यस्य ॥ ३० ॥

**सुपर्णोऽसि गरुत्मान्दिवं गच्छेत्युद्यच्छते ॥ ३१ ॥**

स्पष्टोऽर्थः ॥ ३१ ॥

**ऊर्ध्वं नाभेर्धारयमाणो विष्णोः क्रमोऽसीति चतुरो विष्णुक्रमान् (प्राचः) क्रामति ॥ ३२ ॥**

नाभेरुपरि धारयमाण उख्यं, विष्णोः क्रमोऽसीति चतुरो विष्णुक्रमान्प्राचीं दिशं क्रामति प्राङ्मुखश्च । यं द्विष्म इत्येवमन्ता विष्णुक्रममन्त्राः ॥ ३२ ॥

**अक्रन्ददग्निरित्युख्यमभिमन्त्रयते ॥ ३३ ॥**

अक्रन्ददित्येतयर्चा तमग्निमभिमन्त्रयते ॥ ३३ ॥

**अग्नेऽभ्यावर्तिन्निति चतसृभिः प्रदक्षिणमावर्तते ॥ ३४ ॥**

विश्वतस्परीत्यन्तः । चतसृभिः प्रदक्षिणमावर्तते सहाऽग्निनेति शेषः । आवृत्तौ प्राद-क्षिण्यं विधत्ते—' दक्षिणा पर्यावर्तते ' ( तै० सं० ५ । २ । १ ) इति । दक्षिणा प्रादक्षिण्येन, दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यम् । पुरुषस्य दक्षि-णभागे सामर्थ्यातिशयसद्भावात्तदेवानुसृत्याऽऽवृत्तिः कृता भवति ॥ ३४ ॥

**आ त्वाऽहार्षमित्याहृत्योपतिष्ठते यं कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्विशस्त्वा सर्वा वाञ्छ-न्त्विति ॥ ३५ ॥**

अस्य मन्त्रस्य प्रथमपादे वह्नेराहरणं प्रसिद्धमेव प्रतीयत इति दर्शयति—आ त्वाऽहार्षमित्याहाऽऽह्येवꣳ हरति ( तै० सं० ५ । २ । १ ) इति । द्वितीयपादेऽन्व-यव्यतिरेकाभ्यां प्रतिष्ठा सिध्यतीत्याह—' ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै ' ( तै० सं० ५ । २ । १ ) इति । तृतीयपादे प्रजासमृद्धिं चतुर्थपादे राज्यस्थैर्यं च क्रमेण दर्शयति—' विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्धयत्यस्मिन्राष्ट्रमधि श्रयेत्याह राष्ट्रमेवास्मिन्ध्रुवमकः ' ( तै० सं० ५ । २ । १ ) इति । विशा प्रजया । एनं यजमानम् । अस्मिन्यजमाने । अकः करोति । चतुर्थपादपाठकाले यजमानविषयं काम्यं मनसा ध्यानं विधत्ते—'यं कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवति ' ( तै० सं० ५ । २ । १ ) इति । यं यजमानमुद्दिश्य राज्यमस्त्विति काम-येताध्वर्युस्तं चतुर्थपादोच्चारणकाले ध्यायेत् ।

केचित्तु व्याचक्षते—तूष्णीमाहृत्याऽऽसन्दीसमीपम्, आ त्वाऽहार्षमित्युपतिष्ठते । अग्ने बृहन्नुषसामूर्ध्वो अस्थादिति च । भाष्ये तु व्याचष्टे—आहरणार्थः पूर्व आ त्वाऽ-हार्षमिति । द्वितीयेनाग्नेरुपस्थानम् । तूष्णीमाहृत्य द्वाभ्यामुपस्थानमित्येवं वैखा-नससूत्रनिबन्धनात् । यं कामयेत राष्ट्राधिपतिः स्यादिति तस्य ध्यानम् । इदꣳ राष्ट्र-मधिश्रय देवदत्त, इति ॥ ३५ ॥

**उदुत्तममिति शिक्यपाशमुन्मुञ्चते ॥ ३६ ॥**

शिक्यपाशमवनयति ग्रीवायाः ॥ ३६ ॥

**अग्ने बृहन्नुषसामूर्ध्वो अस्थादित्युन्मुच्योपतिष्ठते ॥ ३७ ॥**

गतार्थः ॥ ३७ ॥

१ ख. 'पाशान्मु' ।

**औदुम्बर्यासन्द्यरत्निमात्रशीर्ष्ण्याऽनूच्या प्रादेशमात्रपादा मौञ्जविवाना फलकास्तीर्णा वा मृदा प्रदिग्धा सीद त्वं मातुरस्या उपस्थ इति तस्यां चतसृभिरुख्यं सादयति ॥ ३८ ॥**

औदुम्बर्या आसन्द्याः प्रकृतत्वात्सैव तस्यामिति परामृश्यते । बृहदित्यन्तः । सीद त्वं मातुरित्यादिभिश्चतसृभिरौदुम्बर्यामुख्याग्निं स्थापयेत् । अथ वा–उदुम्बरेण कृता औदुम्बरी । आसीदत्यस्यामित्यासन्दी । अरत्निमात्रशीर्षण्याऽनूच्या यस्याः पादाः प्रादेशमात्राश्च । यस्या मौञ्जैः शुल्बैर्विवानं कृतम् । फलकैरास्तीर्णा वा । न मुञ्जविवाना, मृदा च प्रलिप्ता, उभयं यथा न दह्यते तथेत्यर्थः । सीद त्वं मातुरस्या उपस्थ इति चतसृभिस्तस्यां सादयत्युख्यम् ॥ ३८ ॥

**शर्करायां वा ॥ ३९ ॥**

तिसृभिः सादयति (आप० श्रौ० १६ । ४ । १७) इत्यापस्तम्बः । शर्करायां वा सादयति ॥ ३९ ॥

**हंसवत्योपतिष्ठत इत्येके समामनन्ति ॥ (ख० ८) ॥ ४० ॥**

**इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने तृतीयः पटलः ।**

अत्रैके शाखिनः हंसः शुचिषत्, इति हंसवत्योपस्थानमामनन्ति ॥ ४० ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्ने तृतीयः पटलः ॥ ३ ॥

अथैकादशप्रश्ने चतुर्थः पटलः

**मुष्टिकरणप्रभृतीनि कर्माणि प्रतिपद्यते ॥ १ ॥**

मुष्टिकरणप्रभृति सौमिकानि कर्माणि कर्तुं प्रतिपद्यते । प्रथमस्य दीक्षादिवसस्य कर्मानुपूर्व्यम् । संभारयजुषां वाचनं कृत्वा शणकुलायेन मुञ्जकुलायेन वोखां प्रच्छाद्यान्यमग्निं करोति (स० श्रौ० ११।३।३) ॥ १ ॥

**येन देवा ज्योतिषोर्ध्वा उदायन्निति प्रादेशमात्रैः काष्ठैरुख्यमुपसमिन्धे ॥ २ ॥**

येन देवा इति प्रादेशमात्रैः काष्ठैरुख्येन्धनं, यजमानेनैव प्रकृतत्वात् । अध्वर्युरिति भाष्यकृत्[1] ॥ २ ॥

१ अध्वर्युणैवेति वपुस्तकान्तरे पाठान्तरम् ।

सदा ज्वलति ॥ ३ ॥

सदा नित्यो ज्वलति ( १६ । ३ । १९ ) इत्यापस्तम्बोक्तेः । व्रतकाल एव ज्वलति
। श्रौ० ३१ । १० ) इति वैखानसः ॥ ३ ॥

अन्नपतेऽन्नस्य नो देहीति व्रतयिष्यन्नौदुम्ब-
रीꣳ समिधं व्रते समज्योख्येऽभ्यादधाति ॥ ४ ॥

यदा व्रतं ग्रहीष्यंस्तदौदुम्बरीं समिधं व्रतार्थे क्षीरद्रव्ये समज्याङ्क्त्वा समिधं प्रक्षि-
ते यजमानः । व्रत इति सप्तमीनिर्देशान्मध्यंदिने मध्यरात्रे वा गृहीतो व्रते यजमानेन ।
पुपद इत्यन्तः ॥ ४ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां गायत्रेण च्छन्दसा रात्रिमिष्टकामुपदधे
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति सायमुख्यमुप-
तिष्ठते ॥ ५ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बा-
हुभ्यां पूष्णो हस्ताभ्यां गायत्रेण च्छन्दसाऽहरिष्ट-
कामुपदधे तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति प्रातः ॥ ६ ॥

उख्यमुपतिष्ठत इत्यर्थः ॥ ५ ॥ ६ ॥

श्वोभूते दिवस्परि प्रथमं जज्ञे अग्निरित्येकादशभि-
र्वात्सप्रेणोपतिष्ठते ॥ ७ ॥

द्वितीयेऽहनि ' वात्सप्रेणोपतिष्ठते ' ( तै० सं० ५-२-१ ) इति । वत्सप्रीनाम-
महर्षिणाऽधीतं दिवस्परीत्यादिकं सूक्तं वात्सप्रं, तेनाग्निमुपतिष्ठेत ॥ ७ ॥

एवꣳ सदाऽऽक्रयणात् ॥ ८ ॥

एवमुक्तप्रकारेण यावत्क्रय इति ॥ ८ ॥

पूर्वेद्युर्विष्णुक्रमान्क्रामति । उत्तरेद्युरुपतिष्ठते वात्सप्रेणेति ॥ ९ ॥

पूर्वेद्युः पूर्वस्मिन्नहनि विष्णुक्रमान्क्रामति । उत्तरेद्युरुपतिष्ठते वात्सप्रेणेति । विष्णु-
। वात्सप्रं च प्रथमेऽहनीति प्राप्त उच्यते—पूर्वेद्युः प्रक्रामति उत्तरेद्युरुपति-
( तै० सं० ५-२-३ ) इति । केचित्तु—प्रथमेऽहन्युभयं कुर्वन्ति विष्णुक्रमा-
त्सप्रं चेति । द्वितीयादिष्वहःसु द्वितीयं विष्णुक्रमांस्तृतीयं वात्सप्रमिति कुर्वन्ति
ासं ' सदा यावत्क्रयः ' इति । यदहस्तु सोमक्रयस्तदहरुभयं क्रियते विष्णुक्रमाः
। पश्चाद्वात्सप्रमिति ॥ ९ ॥

---

१ घ. व्रतेऽपीति पाठः ।

यदहरग्निं चेष्यमाणः स्यात्तदहरुभयꣳ समस्येत् ।
प्रचक्रामेदुपतिष्ठेत ॥ १० ॥

यस्मिन्नहनि चेष्यमाणः स्यात्तस्मिन्दिने विष्णुक्रम उपस्थानं तयोः समस्येत् ॥ १० ॥

यद्युख्ये ध्रियमाणेऽयं देवः प्रजा अभिमन्येत
भिषङ्नो अग्न आवह। स्वꣳ रूपं कृष्णवर्त्मनो
असि होता न ईड्यः । त्वं नो अग्ने भिषग्भव
देवेषु हव्यवाहनः । देवेभ्यो हव्यवाडसि ।
भिषजस्त्वा हवामहे भिषजः समिधीमहि ।
भिषग्देवेषु नो भवेत्येताभिस्तिसृभिस्तिस्रः
समिध आदध्यात् ॥ ११ ॥

यद्युख्ये ध्रियमाणे उखास्थ आहवनीये । अयं देव ( इति ) अग्निरुद्रः प्रजा अभिमन्येत हिंस्यादुपसर्गेणाऽऽग्नेयीभिर्भिषग्वतीभिस्तिसृभिः ( आप० श्रौ० १६-४-२८ ) इति तिस्रः समिधः प्रतिमन्त्रमादध्यात् ॥ ११ ॥

यद्युख्ये ध्रियमाणे कामयेत वर्षेदिति सूर्यो अपो
विगाहते रश्मिभिर्भ्राजसा तमः । बोधा स्तोत्रे
वयो वृधः ॥ परि यो रश्मिना दिवोन्तान्ममे
पृथिव्याः । उभे आपप्र रोदसी महित्वा ॥ बहि-
ष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्त्रः ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो
अप्स्वन्तरित्येताभिस्तिसृभिस्तिस्रः समिध आद-
ध्यात् ॥ १२ ॥

यद्युख्ये ध्रियमाणे धार्यमाणे किंचिद्यजमानस्य नश्येत् । यदि कामयेत वर्ष्यः पर्जन्यः, इति । याः सौर्यः सूर्यदेवत्याः । रश्मिशब्दो यासु विद्यते ता रश्मिवत्यः । ताभिः प्रतिमन्त्रं तिस्रः समिध आदध्यात् ॥ १२ ॥

यद्युख्ये ध्रियमाणे कामयेत न वर्षेदित्युदुश्रमस्य
केतवो वि रश्मयो जनाꣳ अनु । भ्राजन्तो
अग्नयो यथा ॥ तरणिर्विश्वदर्शत इत्येषा ॥ दिवो
रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः ।
नूनं जनाः सूर्येण प्रसूता आयन्नर्थानि कृण्वन्नपा-
ꣳसीत्येताभिस्तिसृभिस्तिस्रः समिध आदध्यात् ॥ १३ ॥

१ ग. °न्न्याग्निं । २ क. °त व व° ।

यदि कामयेत न वर्षेत्पर्जन्य इति । अतिवृष्ट्या । याः सूर्यदेवत्याः सौर्यः । भ्राजः शब्दो यासु विद्यते ता भ्राजस्वत्य स्ताभिस्तिसृभिस्तिस्रः समिधः प्रतिमन्त्रमादध्यात् । 'अदृश्रमस्य केतवः' इति च ॥ १३ ॥

यद्युख्ये भ्रियमाणे किंचिन्नश्येदग्नेऽभ्यावर्तिन्निति चतसृभिरुपतिष्ठते । विन्दत्येवैतदिति विज्ञायते ॥ (ख० ९) १४ ॥

इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

यद्युख्ये भ्रियमाणे धार्यमाणे किंचिद्यजमानस्य नश्येत् । अग्नेऽभ्यावर्तिन्निति चतसृभिरुपतिष्ठते यजमान उख्यम् । लभते तन्नष्टमिति श्रुतेः । हिरण्यनाशेऽप्येतदेव । उख्ये भ्रियमाण इति कालविधानात् ॥ १४ ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकाया-
मेकादशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

अथैकादशप्रश्ने पञ्चमः पटलः ।

उदु त्वा विश्वेदेवा इत्युख्यमुद्यच्छते ॥ १ ॥

यस्मिन्नहनि दीक्षासु वर्तमानासु प्रयायाद्देवयजनसमीपम् । तत्र स्पष्टमेवोक्तमापस्तम्बेन—यदहः प्रयायात् ( आप० श्रौ० १६ । ४ । ३५ ) इति । इह गृहे दीक्षा नित्या सूत्रान्तरे प्रयाणविधानान्मन्त्रलिङ्गाच्च । उख्यमुद्यच्छति उद्गृह्णाति ॥ १ ॥

सीद त्वं मातुरस्या उपस्थ इति चतसृभिर्द्वीषे शकट आसादयति ॥ २ ॥

शकटे प्रउग उख्यमासादयति ( १६ । ४ । ३६ ) इत्यापस्तम्बः । द्वे ईषे यस्य तदिदं द्वीषं तस्मिन्द्वीषे शकटे । न रथेन प्रयाति, रथस्य प्रत्याम्नायः शकटम् । प्रउगं मुखं तस्मिन्नुख्यः साद्यते, तिसृभिर्वा साद्यते । ह[1]स्मवत्योपस्थानम् । इहापि प्रयाणं याजमानम् ॥ २ ॥

तूष्णीमितरावग्नी आसाद्य प्रेदग्ने ज्योतिष्मानिति प्रयाति ॥ ३ ॥

समोप्याग्नी पात्रयोर्गार्हपत्यदक्षिणाग्नी पश्चाद्गृहीत्वा सादयति शकटे सभ्यावसथ्ययोः पृथगरण्योरग्नी समारोप्य रथेन प्रयाति इति प्रकृतावग्निहोत्रदर्श-

---

१ ख. न लभ्यते।

पूर्णमासयोरेव सभ्यावसथ्यौ, नान्यत्रेति भाष्यकृत् । तूष्णीमितराविति द्वयोरेवाग्न्योः समारोपणविधानात् । भद्रादभिश्रेय इत्यस्य प्रेदग्ने ज्योतिष्मान्याहीति प्रत्याम्नायः ॥ ३ ॥

अक्रन्ददग्निरित्यक्षशब्दमभिमन्त्रयते ॥ ४ ॥

यदि शब्दो जायतेऽक्षस्य ततोऽनुमन्त्रणम् । नद्युत्तारः प्रकृतिवत् ॥ ४ ॥

अध्यवसायौदुम्बरीꣳ समिधं घृतानुषिक्तामतिथिवत्यौख्येऽभ्यादधाति समिधाऽग्निं दुवस्यतेति गायत्र्या ब्राह्मणस्य । प्र प्रायमग्निरिति त्रिष्टुभा राजन्यस्य । जगत्या वैश्यस्य ॥ ५ ॥

प्रयाणमन्त्रस्तु याजमानोऽपि । अग्निमधिकृत्य यजमानो ब्रूते—प्रेदग्ने ज्योतिष्मान्याहीति लिङ्गात् । तथा च प्रकृतावपि—'बृहस्पतिः पुर एता ते अस्तु' ( तै० सं० १ । २ । ४ ) इति लिङ्गात् । प्राप्य देवयजनमेदमगन्म, इत्याग्निभिः सह प्रविशति देवयजनम् । अत्रापि गार्हपत्यदक्षिणाग्न्योः स्वस्वायतने निधाय गार्हपत्यमग्र उख्यं प्रतिष्ठाप्य न वेष्टयत्यात्मानम् । यद्वा—पश्चात् समिधाऽग्निं दुवस्यत इत्यवसिते प्रयाणे समाप्त इत्यर्थः । मूलादारभ्याप्रात्तिसक्ताऽनुषिक्ता तामादधाति यजमान एव प्रयाणव्रतनेन्धनघृतानुषिक्ताधानानामेककर्तृकत्वात् । एवं त्रिष्टुभा क्षत्रियस्य घृतानुषिक्ताधानं प्र प्रायमग्निरिति । जगत्या वैश्यस्येति जनस्य गोपा इति ॥ ५ ॥

इन्धने व्रतनेऽध्यवसाने च सर्वासु संनिपातितासु घृतानुषिक्तां प्रथमामादधाति ॥ ६ ॥

यदा त्विन्धनस्य—येन देवा ज्योतिषोर्ध्वा उदायन्निति क्षेपणानि काष्ठानि भवन्त्युख्ये । मध्यंदिनव्रतकालप्राप्तं चेद्देवयजनमिति वैखानसः । यदा त्रयाणामेषां संनिपातस्तदा घृतानुषिक्तां पूर्वामादधाति यजमानस्तत इन्धनं व्रतनमध्यवसानमिति । कालस्यानपायात् ॥ ६ ॥

यद्युख्यां भस्माभिसꣳसीदेदुख्यमादायोदकान्तं गत्वेमꣳ सुयोनिꣳ सुव्रतꣳ हिरण्मयꣳ सहस्रभृष्टिं महिषावरोह । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमाविशस्व । इमꣳ स्तनं मधुमन्तं धयापां ( प्रप्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमाविशस्व ) इति द्वाभ्यामुख्यमुपावहरति ॥ ७ ॥

यद्युखायां भस्माभिनिर्षीदेदित्येवमाद्यध्वर्युव्यतिरिक्तः, यदि भस्म भवति, उखामुख्य-मादाय सह शिक्येनोदकसमीपं गत्वा—'इमꣳ सुयोनिं' इति द्वाभ्यामग्निमुद्धृत्योखाया अपनीय शिक्यादुखाम् ॥ ७ ॥

आपो देवीः प्रतिगृभ्णीत भस्मैतदिति तिसृभि-रप्सु भस्म प्रवेशयति ॥ ८ ॥

अप्सु क्षिपति । अपामसीत्यन्तः ॥ ८ ॥

भस्मनः प्रत्यादाय प्रसद्य भस्मना योनिमिति द्वाभ्यामुखायां प्रत्यवदधाति ॥ ९ ॥

उखायां भस्मन एकदेशमादाय पीडयित्वा द्वाभ्यामृग्भ्यामुखायामग्निं भस्म च प्रत्यवदधाति ॥ ९ ॥

पुनरूर्जा सह रय्येति द्वाभ्यां प्रत्येति ॥ १० ॥

विश्वतस्परीत्यन्तः । देवयजनं प्रति निवर्तते ॥ १० ॥

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतामित्यु-पसमिन्धे ॥ ११ ॥

अध्वर्युरिति वैखानसः । पुनरुख्यमुपसमिन्ध इत्यापस्तम्बबोधायनौ ॥ ११ ॥

बोधा स बोधीति ॥ ( ख० १० ) ॥ बोधवतीभ्यामुप-तिष्ठते ॥ १२ ॥

बोधेति मन्त्रेण स बोधीति मन्त्रेण चैतमग्निं बोधयत्येव । आहवनीस्य दक्षिणभागो यजमानस्योपस्थानदेशः । अतोऽत्रापि दक्षिणदेश एव स्थित्वोपतिष्ठते ॥ १२ ॥

नित्यमप्सु भस्मप्रवेशनं कृत्वा दीक्षितस्य कृतास्विष्ट-कासु अकृतास्विष्टकानाँ सꣳसर्गार्थं भवति ॥ १३ ॥

अधिके भस्मनि जाते अप्सु भस्मप्रवेशनं विधाय कृतास्विष्टकासु नित्यं भवति भस्मप्रवेशनमित्यर्थः । अकृतासु या इष्टकार्था मृत्तया सह संसर्गार्थं भवतीत्यर्थः ॥ १३ ॥

पुरीषे पशुकामः कुर्वीत ॥ १४ ॥

पुरीषे तु मृत्तिकायां पशुकामस्य भस्मप्रवेशनं नाप्सु । सूत्रकारो भाष्यकाराश्चात्र कुर्वन्ति पुरीषमेवेति । न तु सत्याषाढमतिः । तूष्णीकं समृन्मयं चेति काम्ययोरप्यनूहः पशुकामस्यापि ॥ १४ ॥

---

१ गृहीत ।

अप्सु यायावरः प्रवपेत् । १५ ॥

यायावरः प्रयाणशीलः । यायावरोऽप्स्वेव प्रक्षिपेद्भस्मातिरिक्तम् ॥ १५ ॥

तिस्रो रात्रीर्दीक्षितः स्यात् । षड्रात्रीर्दीक्षितः स्यादिति ब्राह्मणव्याख्याताः काम्या दीक्षाकल्पा-स्तेषां याथाकामी ॥ १६ ॥

मौण्ड्यमौनादिनियमस्वीकाररूपा दीक्षा । चीयमानस्याग्नेः संबन्धिन्या दीक्षया त्रिरात्रषड्रात्रदशरात्रद्वादशरात्रत्रयोदशरात्रपञ्चदशरात्रसप्तदशरात्रचतुर्विंशतिरात्रत्रिंशद्रात्रमासचतुर्मासाष्टमासाद्वादशमासरूपास्त्रयोदश पक्षा विकल्पिताः । ता ब्राह्मणे—अग्नेर्वै दीक्षया ( तै० सं० ५ । ६ । ७ ) इत्यनुवाके काम्या दीक्षाकल्पा यथाकामं ग्राह्याः । अत्र येन देवा इत्युख्यस्योपसमिन्धनान्तं कृत्वाऽथाङ्गुलीं न्यञ्चति स्वाहा यज्ञं मनसेत्येवमादिवाग्विसर्गमुदितेषु नक्षत्रेषु कृत्वा मध्यरात्रे व्रते गृहीते—अन्नपतेऽन्नस्य नो देहीत्यौदुम्बरी समित् । रात्रिमिष्टकामिति द्वितीया समित् । ततो हस्तप्रक्षालनादि नाभ्यभिमर्शनान्तम् । ततः सनीहारप्रस्थापनं जागरणं चैतां रात्रिम् ॥ १ ॥ तत उपोदये वाग्यमनादीनि वाग्विसर्गः, वात्सप्रेणोपस्थानं, मध्यंदिने व्रतं प्रतिगृह्य—अन्नपतेऽन्नस्य नो देहीत्याधायाहरिष्टका द्वितीया । ततो हस्तावनेजनादि नाभिदेशाभिमर्शनान्तम् । ततोऽधिवृक्षसूर्ये वाग्यमनादि रात्रिमिष्टकां द्वितीया समित् । ततोऽग्ने त्वꣳ सुजागृहि, इत्याहवनीयाभिमन्त्रणं स्वप्स्यतः, प्रबुद्धस्य त्वमग्ने व्रतपा असि, विश्वे देवा अभि मामाववृत्रन्, पुनर्मन इति जपे कृते, उपोदये वाग्यमनं, उदिते च विसर्गः, रुक्मप्रमोचनादि विष्णुक्रमान् हंसवत्योपस्थानान्तम् । उख्यस्योपसमिन्धनं, पुनः पुनः प्रज्वलयति प्रादेशमात्रैः काष्ठैः । मध्यंदिने व्रतं कुर्वन्नहरिष्टकां च कृते वात्सप्रेणोपस्थाने, एष विधिर्दीक्षासु । यस्मिन्नहनि सोमक्रयस्तस्मिन्नहनि विष्णुक्रमो वात्सप्रं च ॥ १६ ॥

दीक्षितस्येष्टकाः करोति मासप्रभृतिषु दीक्षाकल्पेषु पुरस्तादद्दीक्षितस्येतरेषूपरिष्टात्प्राजापत्यात्पशोः ॥ १७ ॥

दीक्षितस्य यजमानस्येष्टकाः करोति मासप्रभृतिषु दीक्षाविधानेषु मासादिषु पूर्वस्मिन्भागे दीक्षा । यस्य मासदीक्षा तस्य पूर्वस्मिन्पक्ष इष्टकाः करोति । सर्वांश्चतुरो मासांस्तस्य पूर्वेद्योर्मध्योः । तथा संवत्सरे षण्मासेषु । अदीक्षितस्य तु इष्टकाः करोति त्र्यहादिषु दीक्षाकल्पेषूपरिष्टात्तु प्राजापत्याद्वायव्याद्वा पशोः ॥ १७ ॥

मृन्मयीरिष्टका अविषमाश्चतुरश्रास्तासां तिस्रो

**मण्डलेष्टका ऋजुलेखा दक्षिणावृतः सव्यावृतश्च त्र्यालिखिताः ॥ १८ ॥**

मृन्मयीनामिष्टकानां प्रमाणमत्र नास्ति । विशेषत आपस्तम्बसूत्रे वर्तते पादमात्र्योऽरत्निमात्र्य ऊर्वस्थिमात्र्योऽणूकमात्र्यः ( आप० श्रौ० १६ । ४ । १० ) इति । पादमात्र्योऽरत्निमात्र्य इति । न तु हिरण्येष्टकानामेष विधिः, तासामनियतं परिमाणम् । मृन्मयीनां तु शुल्बेषु व्याख्यातमेतद्ब्राह्मणम्—चतुर्भागीयाणूकमिति । पादमात्र्यः पादप्रमाणाः । चतुर्भागो वा पादः । अथवा पाद एव । अरत्निप्रमाणा अरत्निमात्र्यश्चतुर्विंशत्यङ्गुला वा ऊर्वोरस्थि ऊर्वस्थि । ता अपि चतुर्विंशत्यङ्गुला एव, द्वयोः श्रुत्योरेकार्थत्वात् । अणूकमत्र्योऽणूकप्रमाणाः । चतुर्भागः पुरुषस्य त्रिंशदङ्गुलयो वाऽणूकम् ऋजवो लेखा यासामिष्टकानां ता ऋजुलेखाः । प्रदक्षिणावृत एव लेखा यासां ता दक्षिणा वृतः । सव्यावृतश्च । तथा तिस्रो लेखा यासामूर्ध्वास्तास्त्र्यालिखिताः । लेखानियमो मृन्मयीनामेव ।

**निर्मन्थ्येन लोहिनीः पचन्ति ॥ १९ ॥**

निर्मथितेनाग्निना पच्यते यथालोहिन्यो भवन्ति तथा पाकः क्रियते, इक्षुपत्रशकृदादिभिः ॥ १९ ॥

**न कृष्णां न लक्ष्मणां न भिन्नां चोपदधाति ॥ २० ॥**

खण्डामिति वैखानसापस्तम्बौ । खण्डा, यस्याः किंचिच्छिन्नमेकदेशेऽपि । कृष्णा नीला एकदेशेऽपि कृष्णा अन्यवर्णा वा । न लोहिता सा लक्ष्मणा । ता एता नोपधेयाः श्रुतिप्रतिषिद्धत्वात् । खण्डादयः प्रतिनिधित्वेनापि न क्रियन्ते प्रतिषेधात् । भाष्यकारस्तु—खण्डाः प्रतिनिधित्वेनैव करोति । भुव इति प्रायश्चित्तं दक्षिणाग्नौ हुत्वोपदध्यादिति॥२०॥

**पुष्करपर्णं रुक्मो हिरण्मयः पुरुषः स्रुचौ सप्त स्वयमातृण्णाः शर्करा हिरण्येष्टकाः पञ्च घृतेष्टका दूर्वास्तम्बः कूर्म उलूखलं मुसलं शूर्पमश्मानः पशुशिरांसि सर्पशिरश्चामृन्मयीरिष्टकाः ॥ २१ ॥**

पुष्करपर्णं पद्मपर्णम् । रुक्मो यो यजमानेन विष्णुक्रमकाले धृतः स एव । हिरण्मयश्च पुरुषः सुवर्णकृतः । स्रुचौ कार्ष्मर्यमयी औदुम्बरी च । स्वयं भिन्नाः सप्त शर्कराः । हिरण्येष्टका अपरिमिताः । पञ्च घृतेष्टका घृतपिण्डाः । दूर्वास्तम्बो हरिलिकास्तम्बः ।

१ ग. पुस्तके वृत्तः । २ घ. पुस्तके परिमाणाः । ३ ग. लप्रमाणा वा । ४ ग. कुर्यादिति ।

कूर्मः कच्छपः । उलूखलमूर्ध्वहननं मुसलं मुहुर्मुहुः स्वनति । शूर्पमैषीकं वैणवं वा । अश्मानः पाषाणाः । पशुशिरांसि पुरुषाश्वर्षभवृष्णिबस्तानाम् । मृतस्य सर्पस्य च शिरः, एता अमृन्मयीरिष्टका इष्टकात्वात्सादनं तया देवतया भवत्येव । चतुरश्रा प्रकृतिः पादमात्र्यो भवन्तीत्याम्नानादन्यथाऽपि प्रकृतिरेव तस्याप्यकाम्यत्वात् ॥ २१ ॥

यावदग्निमाना मन्त्रा यथार्थं लोकंपृणा जानुदघ्नँ साहस्रं चिन्वीत प्रथमं चिन्वानः । नाभिदघ्नं द्विषाहस्रं द्वितीयम् । आस्यदघ्नं त्रिषाहस्रं तृतीयम् । उत्तरमुत्तरं ज्यायाꣳसम् ॥ २२ ॥

जानुदघ्नं जानुप्रमाणम् । सहस्रपरिमाणं साहस्रम् । जानुदघ्नं साहस्रं चिन्वीत । द्वितीयं चिन्वानो द्विषाहस्रं नाभिदघ्नम् । आस्यप्रमाणं त्रिषाहस्रं चिन्वीत तृतीयं चिन्वानः । अथ वा सहस्रसंख्याकानामिष्टकानां समूहः साहस्रम् । अथ वा सहस्रसंख्याकाभिरिष्टकाभिर्निष्पाद्योऽग्निः साहस्रः । यः प्राथमिकमग्निं चिन्वीत स तु साहस्रं कुर्यात् । द्वितीयवारं चिन्वानो द्विगुणम् । तृतीयवारं चिन्वानस्त्रिगुणम् । तथा प्रथमद्वितीयतृतीयचितीनामुत्तरोत्तरमौन्नत्यम् ।

उत्तरमुत्तरं ज्यायांसमिति विधावभ्यासेन चतुर्थादिष्वपि संख्या च त्रिषाहस्राधिका व्याख्याता, तत्र न ज्यायाꣳसं चिन्वीत, इति भावः ॥ २२ ॥

महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति वाजसनेयकम् ॥ २३ ॥

बृहन्तं विधियुक्ताभिस्त्रिषाहस्राधिकाभिः । अपरिमितमसंख्यातम् । त्रिभ्यः साहस्रेभ्यः स्वर्गकामस्य । वाजसनेयकमिति वाजसनेयिनां श्रुतिरेषा । नायं विधिर्नित्यः काम्यत्वात् । पश्चात्तु न्यूनो न लभ्यते । न ज्यायाꣳसं चित्वा कनीयाꣳसं चिन्वीतेति ब्राह्मणाच्च ॥ २३ ॥

अपवृत्ते दीक्षापरिमाणेऽपेत वीतेति देवयजनमध्यवस्यति ॥ २४ ॥ उद्धत्य चितेरायतनं व्यायाममात्रम् ॥ (ख० ११) ॥ चतुरश्रं परिमण्डलं वाऽपेत वीतेति हरिण्या पलाशशाखया सꣳसृज्याङ्गिरवोक्ष्याग्नेर्भस्मासीति सिकता निवपति ॥ २५ ॥

अपवृत्ते परिसमाप्ते दीक्षाणां परिमाणे प्रबुध्य जपे वाग्विसर्गे कृते विष्णुक्रमवात्सप्रसोमान्नदानेषु च कृतेषु । भाष्यकारस्तु—व्रतमपि ददातीति व्याचष्टे । ततः क्रमः

काले व्रतदानमिति[1] । अपेत वीतेति देवयजनमध्यवस्यति । अपेतेत्यध्यवसाययतीत्यस्याः श्रुतेरर्थः । गार्हपत्यमुद्धननेनाध्यवसाययतीति । भरद्वाजस्य तु अयमध्यवसानमन्त्रः, एदमगन्मेत्यस्य प्रत्याम्नाय इति । अपेत वीतेति गार्हपत्यचितेरायतनं शौल्बेन चतुररत्नि मानयित्वा चतुरश्रं परिमण्डलं वाऽपेत वीतेति, उद्धननं तस्य करोति । तूष्णीं शाखया संमार्ग इति वैखानसः । प्राचीमुदीचीं वा दिशं प्रति तस्यास्त्यागः शाखायाः । अवोक्षणमधस्तात्पाणिना शं नो देवीरभिष्टय इति । अग्नेर्भस्मासीति वालुका निवपति ॥ २४ ॥ २५ ॥

संज्ञानमसि कामधरणमित्यूषान् ॥ २६ ॥

निवपतीत्यनुवर्तते । भूयादित्यन्तः । पुष्टिहेतुत्वं प्रजोत्पत्तिहेतुत्वं चोषाणां यज्ञद्वारा (तै० सं० ५ । २ । ३ ) द्रष्टव्यम् ॥ २६ ॥

तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ॥ २७ ॥

निवपने लवणमृत्तिकाया यददश्चन्द्रमसीति कृष्णरूपं ध्यायेत् ॥ २७ ॥

सं या वः प्रियास्तनुव इत्यूषान्सिकताश्च सꣳसृज्यानुव्यूहति ॥ २८ ॥ चितः स्थ परिचित इत्येकविꣳशत्या शर्कराभिर्गार्हपत्यचितेरायतनं परिश्रयाति ॥ २९ ॥

ऊषाणां सिकतानां च संसर्गः क्रियते चितः स्थ परिचित इत्येकविꣳशत्या शर्कराभिर्वेष्टनं गार्हपत्यचितेः ॥ २९ ॥

तिस्रास्तिस्रः सꣳहिताः करोति ॥ ३० ॥

तिस्रस्तिस्र एकीभूताः शर्करास्तासु तासु मन्त्रावृत्तिरिति न्यायात् । सीदतेति तासामभिधानात् । सकृन्मन्त्र इति भाष्यकृत् । अत्र ' व्रजं कृणुध्वम्, इति शर्करा अभिमन्त्र्य' ( आप० श्रौ० १६–१–४ ) इत्यापस्तम्बः ॥ ३० ॥

अयꣳ सो अग्निरिति चतसृभिर्गार्हपत्यचितौ चतस्रः प्राचीरिष्टका उपदधाति ॥ ३१ ॥

अत्र गार्हपत्यचिताविति प्रकृतत्वाच्चतस्रो मध्येऽग्नेरुपदधाति प्रागग्राः ॥ ३१ ॥

इडामग्नेऽयं ते योनिर्ऋत्विय इति द्वे पुरस्तादूर्ध्व-

---

१ ग. व्रतप्रदानमिति ।

**सꣳहिते चिदसि परि चिदसीति द्वे पश्चादूर्ध्व-
सꣳहिते लोकं पृण छिद्रं पृणेत्यवशिष्टं त्रयोदश-
भिर्लोकंपृणाभिः प्रच्छादयति ॥ ३२ ॥**

इडामग्नेऽयं ते योनिरिति पुरस्तादुपदधात्यग्नेः । समीची प्रत्यग्दीर्घे । तिरश्ची द्वितीये प्रस्तारे, उदग्दक्षिणादीर्घे एवं पश्चादुपदधाति । समीची प्रथमे प्रस्तारे तिरश्ची द्वितीये प्रस्तारे ताभिर्वैते दिशो दृꣳहन्, इति लिङ्गात् । प्रथमे प्रस्तारे द्वे पूर्वे दक्षिणे कोणे द्वे उत्तराधरे द्वितीये प्रस्तारे द्वे पूर्वोत्तरकोणे द्वे अपर इति भाष्यकृत् । अवशिष्टमग्निं त्रयोदशभिः प्रच्छादयति[1] ॥ ३२ ॥

**द्वाभ्यां द्वाभ्यां मन्त्राभ्यामेकैकां लोकंपृणामुपदधाति ॥ ३३ ॥**

उदग्वा करोति, द्वाभ्यामृग्भ्यां लोकंपृणामेकैकाम् । संकर्षणकारस्य तु पूर्वयोपधायोत्तरयाऽभिमर्शनम् । अनुष्टुभाऽनुचरति, इति श्रुत्यन्तरं सूत्रकारेणानिबद्धम् ॥ ३३ ॥

**पूर्वयोपधाय सूददोहसाऽभिमृशति ॥ ३४ ॥**

अध्वर्युरिति वैखानसः ॥ ३४ ॥

**सर्वास्विष्टकासु तयादेवतमन्ततो दधाति ॥ ३५ ॥**

सर्वासु याश्चितिप्रकरणे तासु तया देवतयाऽन्ततः । न काठकेष्विति भाष्यकृत् । काठकानां तु परिपाठात्तत्रापि स्यात्तयादेवतम् ॥ ३५ ॥

**कृष्णोऽश्वः श्यावो वोत्तरतस्तिष्ठति ॥ ३६ ॥**

स्थापयेत् ॥ ३६ ॥

**तमालभ्य चात्वालात्पुरीषमाहृत्य पृष्टो दिवी-
त्यनु व्यूहति ॥ ३७ ॥**

तमश्वमालभ्य स्पृष्ट्वा चात्वालस्थानात्पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्यर्चा चितौ स्थापयति म (त)न्त्रेणैव । वैश्वानर्यर्चा पुरीषमुपदधाति, इति वचनात् । केचित्तूष्णीं मृदं न्युप्य पृष्टो दिवीति प्रसारणं कुर्वन्ति । पांसुप्रक्षेपं विधत्ते–'पुरीषेणाभ्यूहति' ( तै० सं० ५–२–३ ) इति । पांसुनाऽभ्यूहत्याच्छादयति ॥ ३७ ॥

**सा चितिर्भवति ॥ ३८ ॥**

सा चितिः पुरीषान्ता ॥ ३८ ॥

---

१ घ. पुस्तकेऽयं पाठो दृश्यते—लोकमिष्टकानाक्रान्तमवशिष्टं देशं पूरयन्तीति लोकंपृणाः । एतन्नामिका इष्टकास्त्रयोदशसंख्याका उपदध्यात् । एवं सति पूर्वोक्ताभिरष्टभिरिष्टकाभिः सहैकविंशतिः संपद्यन्त इति ।

**पञ्चचितीकं चिन्वीत प्रथमं चिन्वानस्त्रिचितीकं द्वितीयमेकचितीकं तृतीयम् ॥ ३९ ॥**

एकां चितिं कृत्वा पुरीषेणाऽऽच्छादयेत् । तस्या उपरि द्वितीयां चितिं कृत्वा तामप्याच्छादयेत् । एवं चितिपञ्चकेन पुरीषपञ्चकेन च दशसंख्यासंपत्तेः प्रशंसति ब्राह्मणे— 'पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश संपद्यन्ते' (तै० सं० ५-२-३) इति । पञ्चचितीकं चिन्वीत गार्हपत्यचितिं, अयऽसो अग्निरित्यारभ्य पुरीषान्ताः पञ्च चितयः । द्वितीयं चिन्वानस्त्रिचितीकम् । एकचितीकं तृतीयं चिन्वान इति ॥ ३९ ॥

**एकचितीको नित्यः कल्पः ॥ (ख० १२) ॥ ४० ॥**

**इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने पञ्चमः पटलः ॥ ५ ॥**

अत ऊर्ध्वमेकचितीको नित्य आपस्तम्बकल्प इत्यर्थः । अत्र गार्हपत्यचितिकर्म । ॥ ४० ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

अथैकादशप्रश्ने षष्ठः पटलः ।

---

**समितामिति चतसृभिर्गार्हपत्यचितावुख्यं निवपति ॥ १ ॥**

भवतमद्य न इत्यन्तः । गार्हपत्यचितावुख्यं निवपति स्थापयति चतसृभिः ॥ १ ॥

**मातेव पुत्रमिति शिक्यादुखां निरूहति ॥ २ ॥**

विमुञ्चत्वित्यन्तः । शिक्यादुखामानीयेति वैखानसः ॥ २ ॥

**अत्रैवैके पूरणमामनन्ति न रिक्तामवेक्षेत ॥ ३ ॥**

रिक्तामुखाम् ॥ ३ ॥

**यदस्य पारे रजस इति वैश्वानर्या शिक्यमादत्ते ॥ ४ ॥**

वैश्वानरशब्दो यस्यामृच्यस्ति सेयं वैश्वानरी । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति स्मृतेर्जाठराग्निरूपस्य वैश्वानरस्य स्वादुत्वकारित्वात्तदीयमन्त्रेणोपात्तं शिक्यं स्वदयत्येवैनत् (तै० सं ५-२-४) इत्यर्थवादं स्वादुकृतं भवतीत्यर्थः । नैर्ऋतीरिष्टकाः पूर्वमादाय यदस्य पारे रजस इति वैश्वानर्यर्चा शिक्यं गृह्णाति । इह तु देवताज्ञानं नियतं कर्माङ्गम् । अन्यत्र च यत्र तु देवतोच्यते छन्दो वाऽऽर्षो वा यत्र तु नोक्तं तत्र तु ज्ञानेऽभ्युदयः । अज्ञानेऽप्यवैगुण्यम् ॥ ४ ॥

**नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्काः शिक्यꣳ रुक्मसूत्रमासन्दीं चाऽऽदाय दक्षिणापरमवान्तरदेशꣳ हृत्वा स्वकृत इरिणे प्रदरे वा नमः सु ते निर्ऋत इति पराचीरसꣳस्पृष्टा उपदधाति ॥ ५ ॥**

निर्ऋतिर्देवता यासामिष्टकानां ता नैर्ऋत्यः । तुषा इति यत्तदेतन्निर्ऋते राक्षसदेवताया भागधेयम् । अत एवैष्टिकप्रकरणे रक्षसां भागोऽसीति तुषोपवापमन्त्र आम्नातः । रूपं च निर्ऋतिदेवतायाः कृष्णम् । अतस्तदानुकूल्यायेष्टयास्तुषपक्काः कृष्णवर्णाश्च कुर्युः ।

अथवा—निर्ऋतिरिति देवता यासां भवति ता नैर्ऋत्यः कृष्णास्तुषैश्च पक्कास्तिस्रस्ता आदाय शिक्यमादत्ते । दक्षिणापरमवान्तरदेशं प्रत्यध्वर्युब्रह्मयजमाना गच्छन्ति । नमः सु ते निर्ऋत इति स्वकृत इरिणे देशे क्षारमृत्तिकादेश इत्यर्थः । प्रदरे वा स्वयमेव दीर्णे देशे । स्पष्टमन्यत् ॥ ५ ॥

**( तस्येष्टकाभिः पाशमभ्युपदधाति ॥६॥ यस्यास्ते अस्याः क्रूर आसञ्जुहोमीत्येताभिस्तिसृभिः पराचीरसꣳस्पृष्टा दक्षिणापवर्गम् ॥ ७ ॥ )**

( दक्षिणे पाशं स्थापयति शिक्यम् । शिक्यपाशस्योपरिष्टादुपदधातीष्टकाः, यस्यास्त इति तिसृभिः पराचीरनिवर्तयन्न संस्पृष्टा दक्षिणापवर्गाः ।

अथवा—विचृत्त इति मन्त्रान्तः । स्वकृत इरिण उपदधाति प्रदरे वा, ( तै० सं० ५–२–४ ) इति ब्राह्मणात् । स्वकृतं स्वयमेव निष्पन्नं न तु देशान्तरादानीय चयनस्थान इव प्रक्षिप्तं, तादृश इरिण ऊषरे वा प्रदरे भूछिद्रे वा कृष्णास्तिस्र इष्टका उपदध्यात् । शिक्योपरि जालमूलभागं परित्यज्य पाशरूपमग्रभागमवलक्ष्यावस्थितो यो देशस्तं देशमिष्टकोपधानस्य । इष्टकानां संख्यां विधत्ते—तिस्र उपदधाति ( तै० सं० ५–२–४ ) इति । ' पराचीरसꣳस्पृष्टा दक्षिणापवर्गम् ' इति दर्शनात् । दक्षिणामुखः पुरुष एकामुपधाय ततो दक्षिणतो द्वितीयां ततोऽपि दक्षिणतस्तृतीयामुपदध्यात् । ॥ ६ ॥ ७ ॥ )

**न तयादेवतं करोति ॥ ८ ॥**

निर्ऋतिमेव यजते ( ५–२–४ ) इत्युक्तत्वान्न तयादेवतं देवलिङ्गकत्वान्मन्त्रे ॥ ८ ॥

**यत्ते देवी निर्ऋतिराबबन्धेति शिक्यमधिन्यस्यति ॥ ९ ॥**

---

१ इदं सूत्रं व्याख्यानं च ग. पुस्तके वर्तते।

शिक्यजालेनैना इष्टकाः प्रच्छादयति ॥ ९ ॥

**अत्राऽऽसन्दीं[१] रुक्मसूत्रं च निदधाति ॥ १० ॥**

अस्मिन्काल आसन्दीं रुक्मस्य चैकविंशतिनिर्बाधस्य यत्सूत्रं च दाक्षिणत इष्टकानां निदधाति शर्करायां वाऽपारमेतु इत्येताभिरनुमन्त्रणमुपहितानामिष्टकानाम् ॥ १० ॥

**यदस्य पारे रजस इति वैश्वानर्या परिषिञ्चति ॥ ११ ॥**

स्वाहेत्यन्तः । तासामेव परिषिञ्चति ॥ ११ ॥

**नमो भूत्या इति प्रदक्षिणमावर्तते ॥ १२ ॥**

प्रदक्षिणं तासामेव ॥ १२ ॥

**शं नो देवीरभिष्टय इति मार्जयन्ते ॥ १३ ॥**

अद्भिरिति शेषः ॥ १३ ॥

**ऊर्जं बिभ्रद्वसुमनाः सुमेधा गृहानैमि मनसा मोदमानः सुवर्चाः । अघोरेण चक्षुषाऽहं शिवेन गृहाणां पश्यन्वय उत्तिराणीत्यप्रतीक्षमायन्ति ॥ १४ ॥**

अप्रेक्षमाणास्ता इष्टका निवर्तन्तेऽध्वर्युब्रह्मयजमानाः ॥ १४ ॥

**निवेशनः संगमनो वसूनामित्याहवनीयमुपतिष्ठन्ते । गार्हपत्यं वा ॥ १५ ॥**

मन्त्रेणोपस्थानमाहवनीयस्य वोपस्थेयं ब्राह्मणे तु 'गार्हपत्यमुपतिष्ठन्ते' ( तै० सं० ५–२–४ ) इति द्रष्टव्यम् ॥ १५ ॥

**प्रायणीयेन प्रचरिते राजानं न्युप्य वेदिं कृत्वा समूलं हरितं दर्भस्तम्बं मध्येऽग्नेर्निखाय जुह्वा पञ्चगृहीतं गृहीत्वा संजूरब्दो यावभिरिति संमुद्गृह्णन्दर्भस्तम्बे पञ्चाऽऽहुतीर्जुहोति ॥ १६ ॥**

अत्र प्रायणीयायास्तन्त्रं प्रक्रमयति ( स० श्रौ० ७–२–५ ) इत्यारभ्य साशय्यन्ता कृत्स्ना वा, इत्यन्तं कृत्वा राज्ञो निवपनादिसौमिकं कर्म प्रतिपद्यते । उत्तरवेदिदेश उपरवाणां वा लोहितमानडुहम् ( स० श्रौ० ७–१–४ ) इत्यादिकर्म कर्तुं प्रतिपद्यते । ततो वेदिं कल्पयित्वा मध्येऽग्नौ मूलेन सह वर्तत इति समूलं हरितं तादृशवर्णं कुशस्तम्बं प्रतिष्ठाप्य तस्मिन्पञ्चाऽऽज्याहुतीर्जुहोति । यथालिङ्गं त्यागः ॥ १६ ॥

---

१ घ. अथ वा–अप्रतीक्षं पृष्ठतो दृष्टिमकृत्वेत्यर्थः ।

अथाग्निचयनभूमेः परिमाणं विभक्ते—

**यावान्पुरुष ऊर्ध्वबाहुस्तावता वेणुनाऽग्निं विमिमीते ॥ १७ ॥**

पुरुषोऽप्यूर्ध्वं प्रसारितस्य बाहोरुपरि स्थितं वस्तु स्प्रष्टुं न शक्नोति । वेणुनाऽग्निविमानं कुर्यात् । अथ वा यावान्यजमान ऊर्ध्वबाहुस्तावत्प्रमाणेन विमितमपि विध्यर्थं विमिमीते ॥ १७ ॥

**त्रीन्प्राचः पुरुषांश्चतुर उदीचस्तिर्यश्चं पुरुषमात्राणि पक्षपुच्छानि भवन्ति ॥ १८ ॥**

त्रीन्प्राचः पुच्छादारभ्य प्रादेशं त्यक्त्वा चतुर उदीचो दक्षिणात्पक्षादारभ्यारत्निं त्यक्त्वोत्तरपक्षे समापयति । पुरुषप्रमाणानि पक्षपुच्छानि ॥ १८ ॥

**आत्मा चतुःपुरुषोऽरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयति ॥ १९ ॥**

चत्वारः पुरुषा आत्मा । अरत्निना चतुर्विंशत्यङ्गुलैर्दक्षिणतः पक्षं प्रवर्धयति दक्षिणे ॥ १९ ॥

**प्रादेशेन वितस्त्या वा पश्चात्पुच्छमरत्निनोत्तरत उत्तरं पक्षम् ॥ २० ॥**

एवमुत्तरे, उत्तरं पक्षं प्रवर्धयति । द्वादशाङ्गुलेन पश्चात्पुच्छस्य वर्धनमग्रं ( ग्रे ) वितस्त्या वा । वितस्तिर्मध्याङ्गुलिरङ्गुष्ठश्च प्रसारिते तदाऽपि न कारणान्तरम् । पुरीषेणैव संपूरणम्, एकविधादयो विकारा एव श्रूयन्ते सूत्रान्तरे—'तदु ह वै सप्तविधमेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निस्तत ऊर्ध्वमेकोत्तरानिति वाजसनेयकम् ' ( आप० श्रौ० १६–९–३१ ) इति सप्तविधो वाव प्राकृतोऽग्निरिति वषडस्तु तुभ्यमिति तेष्वपि एकविधपरिमाणं यस्य स एकविधः । विध इति पुरुषाख्यः । पुरुषप्रमाणः पञ्चारत्निः प्रथमाहारेऽग्निः । द्विपुरुषो द्वितीयः, एवमेव वर्धयत्येकैकस्य वृद्ध्या यावदेकशतविधाविति । सप्तविध इत्यारभ्य पक्षपुच्छानि, इति चान्तः । अरत्निः प्रादेशश्च यथाश्रुति संख्या, इष्टकानामूर्ध्वप्रमाणं च । अग्नीनामेकविधादीनां निन्दां विधाय श्रुत्यन्तरेण सप्तविध एव प्रथमश्चेतव्य इति विधीयते । सप्तविधश्च प्राकृतः प्रकृतिरित्यर्थः । तमधिकृत्य समाम्नानात् । सप्तविधादारभ्यैकोत्तरशतं यावदेकशतविध इति । केचित्तु—प्रकृतौ भवः प्राकृत इति वर्णयन्ति । वाजसनेयिनामेषा श्रुतिरधिकविधेरनित्यत्वात् । अनित्यो विधावभ्यासः । वाजसनेयिनां मतमिति भाष्यकारः ॥ २० ॥

स्याना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः । बडित्था पर्वतानामिति द्वाभ्यां विमितमग्निमाक्रमन्ते ॥ ( खं० १३ ) ॥ २१ ॥

द्वाभ्यामृग्भ्यामध्वर्युब्रह्मयजमाना आक्रमन्ते । विमितवचनाद्यावान्विमितस्तावन्तं सर्वमाक्रमन्त इति भाष्यकृत् ॥ २१ ॥

सं वरत्रा दधातनेति संप्रेष्यति ॥ २२ ॥

संप्रेष्यत्यध्वर्युः । अक्षितमित्यन्तः । कर्षकान्प्रति संप्रैष इति भाष्यकृत् ॥ २२ ॥

निष्कृताहावमवटमित्यवटमाहावाश्श्च खनाति ॥ २३ ॥

काष्ठपाषाणनिर्मितानां द्रोणीनामन्त(न्तः)स्थितावकाशरूपो योऽयमवटस्तमवटमाहावं द्रोण्यवा(वान्द्रोणीर्वा) खनति कर्षकः ॥ २३ ॥

उद्रिणꣳ सिञ्चे अक्षितमित्यवटादाहावेषूदकमुत्सिञ्चति ॥ २४ ॥ तेषु बलीवर्दान्पाययन्ति ॥ २५ ॥

प्रत्याहावं मन्त्रावृत्तिः, द्रव्यपृथक्त्वात् । तेष्वाहावेषु बलीवर्दान्पाययत्यध्वर्युः । भाष्यकारस्तु–कीनाशा इत्यनुषजति कीनाशा बलीवर्दाः (शाः कर्षकाः) ॥ २४ ॥ २५ ॥

उद्योजनमन्तर्याममीषां खगल्यँ शफम् । अष्ट्रां तालं प्रतीनाहमुभे मण्डूक्यौ युजाविति युगलाङ्गलꣳ संप्रसारयति ॥ २६ ॥

तेषामेव वरत्राणां संधानं तेषामुद्योजनं जवनं, अन्तर्याममन्तराखण्डकूटमीषा लाङ्गलदण्डः, खगल्यं चुबुकः शफं वलयम्, अष्ट्रां तालं तुण्डकां, प्रतीनाहं प्रतिसीरं रज्जुसमुदायं वरत्राणां चोभे मण्डूक्यौ वागुरिके, युजौ बलीवर्दौ प्रसारयति कर्षणार्थे द्वौ द्वौ । युगं लाङ्गलं च युगलाङ्गलं, ततः प्रसारयति योजनार्थमित्यर्थः ॥ २६ ॥

* ( सीरा युञ्जन्तीति द्वाभ्यां सीरं युनक्ति । षड्गवं द्वादशगवं चतुर्विंशतिगवं वा ॥ ) सीरा युञ्जन्तीति द्वे पूषा युनक्तु सविता युनक्तु बृहस्पतिर्वो युनक्त्वग्नेस्तेजसा सूर्यस्य वर्चसेति तिसृभिर्युनक्ति षड्गवं[1] द्वादशगवं वेत्येकेषाम् ॥ २७ ॥

सीरा युञ्जन्तीति द्वाभ्यामृग्भ्यां तिसृभिर्वा युनक्ति सीरम् । सकृन्मन्त्रः । सीरस्य योजनार्थत्वात् । यदा षड्गवं तदा त्रीणि युगानि । एवमुत्तरत्रापि । नत्वेकस्मिन्युगे

* धनुश्चिह्नान्तर्गतपाठो ग० पुस्तके नास्ति ।

[1] ख. °वं वा सरिम् ॥

बहून्युजः संप्रसारयन्तीति । केचित्तु युजाविति वचनाद्द्वावपि लभ्येते कर्षणार्थमित्याहुः । बलीवर्दसंख्यां विधत्ते–'षड्गवेन कृषति' (५–२–५) इति । कक्ष्यात्रयरूपेणावस्थितेषु त्रिषु युगेषु बध्यमानाः षट्संख्याका गावो बलीवर्दा यस्य लाङ्गलस्य तत्षड्गवम् । पक्षान्तरं विधत्ते–'यद्द्वादशगवेन' (तै० सं० ५–२ ५) इत्यादि । कक्ष्याषट्कगतेषु बध्यमाना द्वादशसंख्याका गावो यस्य लाङ्गलस्य तद्द्वादशगवं, तेन कृषतीत्यर्थः । एवं चतुर्विंश[त्य]न्तो विकल्पो ज्ञेयः ॥ २७ ॥

उष्टारयोर्बिल्वयोरथो आबन्धनीययोः । सर्वेषां विद्म वो नाम वाहाः कीलालपेशस इति युक्ताननुमन्त्रयते ॥ २८ ॥

युक्तानामनुमन्त्रणम्–उष्टारयोरिति कीलालपेशस इत्यन्तः ॥ २८ ॥

ब्रह्मजज्ञानमित्येषा। अनाप्ता या वः प्रथमा यस्यां कर्माणि कृण्वते । वीराङ्नो अत्र मा दभन्स्तद्व एतंत्पुरो दधे ॥ पर्यूषु प्र धन्व वाजसातये परिवृत्राणि सक्षणिः । द्विषस्तरध्यै ऋणया न ईयसे ॥ सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः । अस्य स्पशो न निमिषन्ति भूर्णयः पदे पदे पाशिनः सन्ति सेतव इति ब्रह्मवर्माणि जुहोति ॥ २९ ॥

ब्रह्म जज्ञानमित्येका । पुरो दधे, इत्येवमन्ता द्वितीया । ऋणया न ईयस इत्येवमन्ता तृतीया । सेतव इत्येवमन्ता चतुर्थी । ब्रह्मवर्माणीति होमनाम । एतैर्मन्त्रैर्यथा वर्म रक्षति तथा रक्षा क्रियत इति ब्रह्मवर्माणीत्युच्यन्ते ॥ २९ ॥

उदस्थाद्गोजिद्धनजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः। एकचक्रेण सविता रथेनोर्जं भागं पृथिवीमेत्वा पृणन्निति लाङ्गलमुच्छ्रयति ॥ ३० ॥

लाङ्गलं योजनार्थमुत्क्षिपति ॥ ३०

मलिम्लुचो नामासि त्रयोदशो मास इन्द्रस्य वर्मासीन्द्रस्य शर्मासीन्द्रस्य वरूथमसि तं त्वा प्रपद्ये। स मे शर्म च वर्म च भव । गायत्रीं लोमभिः प्रविशामि । त्रिष्टुभं त्वचा प्रविशामि । जगतीं मांसेन प्रविशामि । अनुष्टुभमस्थ्ना प्रविशामि ।

पङ्क्तिं मज्ज्ञा प्रविशामि । ऐन्द्राग्नं वर्म बहुलं यदुग्रं
विश्वे देवा नातिविध्यन्ति सूराः । तन्नस्त्रायतां
तन्नो विश्वतो महदायुष्मन्तो जरामुपगच्छेम देवा
इति विमितमग्निमाक्रमन्ते ॥ ३१ ॥

मलिम्लुचो नामासीत्याक्रमणमग्नेः—जरामुपगच्छेम देवा इत्येवमन्तेनाध्वर्युबलीवर्दकीनाशानाम् । भाष्यकारस्तु—ब्रह्मयजमानावाक्रमत इति । केचित्तु—पूर्वहोमो ब्रह्माणि, मलिम्लुचो नामासीत्येवमादीनि वर्माणीत्याहुः । जरामुपगच्छेम देवा इत्येवमन्ताः सप्त होममन्त्रा वर्मणाम् । विमितमग्निमाक्रमन्ते तूष्णीम् ॥ ३१ ॥

लाङ्गलं पवीरवमिति द्वाभ्यां कृषति ॥ ३२ ॥

धत्तमित्यन्तः । द्वाभ्यां कृषत्यध्वर्युः ॥ ३२ ॥

कीनाशा बलीवर्दानजन्ति ॥ ३३ ॥

ताडयन्ति कर्षका वैश्या इति वैखानसः ॥ ३३ ॥

पुच्छशिरोऽधि कृषति ॥ ३४ ॥

पुच्छादारभ्य शिरस उपरिष्टात्कृषति । शिर इति पूर्वमग्नेरुपचरति ॥ ३४ ॥

प्रदक्षिणमावर्तयंस्तिस्रास्तिस्रः सीताः संहिताः
कृषन्ति कामं कामदुघे धुक्ष्वेति ॥ ३५ ॥

पक्षयोः पुरतः—' कामं कामदुघे ' इति प्रदक्षिणमावर्तयन्कृषतीति । तिस्रस्तिस्रः सीता लाङ्गलपद्धतिः, ताः कृषन्त्य( न्ति ) संभिन्नाः । प्रजाभ्य इत्यन्तः ॥ ३९ ॥

सीतां प्रत्यवेक्षते ॥ ३६ ॥ घृतेन सीतेति सीता-
न्तरालान्संमृशति ॥ ३७ ॥

संस्पृशति ॥ ३६ ॥ ३७ ॥

कर्षणे प्रकारविशेषमाह—

दक्षिणस्मात्पक्षादुत्तरं पक्षमभिकृषति ॥ ३८ ॥
दक्षिणस्याः श्रोणेरुत्तरमंसमुत्तरस्याः श्रोणेर्दक्षि-
णमंसमितरथा वा द्वादश संपादयति ॥ ३९ ॥

दक्षिणस्मात्पक्षादारभ्य यावदुत्तरतस्तावदेका सीता । पुनरुत्तरस्मात्पक्षादारभ्य निवृत्तिस्तस्याः पूर्वेण द्वितीया । पुनर्दक्षिणस्मादारभ्य यावदुत्तरतः । तस्याः पूर्वं, दक्षिणायै ( णस्याः ) श्रोणेरारभ्य यावदुत्तरोंऽसः, ( रांसम् ) इति तिस्रोऽपि सीता उत्तरायै ( रस्याः ) श्रोणेर्दक्षिणांसं तथैव, विपरीतं वा । उत्तरस्याः श्रोणेः पूर्वम् । पश्चाद्दक्षिणाया उत्तरांसं कर्षति । काममिति मन्त्रस्याऽऽवृत्तिः, द्रव्यपृथक्त्वात् । कामं कामदुघ इति तथा पर्यावर्तते यथा विहाराभिपर्यावर्तनं भवति ।

यद्वा—पुच्छादारभ्य शिरःपर्यन्तं तिस्रः सीताः कृषेत् । तथा दक्षिणात्पक्षादारभ्योत्तरपक्षपर्यन्तं तिस्रः सीताः कृषेत् । तथा दक्षिणस्याः श्रोणेरारभ्योत्तरांसपर्यन्तं तिस्रः सीताः कृषेत् । तथोत्तरस्याः श्रोणेरारभ्य दक्षिणांसपर्यन्तं तिस्रः सीताः कृषेत् । एवं द्वादश सीताः संपद्यन्ते ॥ ३८ ॥ ३९ ॥

**मध्ये संभिन्ना भवति ॥ ४० ॥**

कर्षणकाले मध्येऽन्तराले संभिन्ना भवेद्रेखा ॥ ४०

**विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्मेति दक्षिणेऽꣳसे बलीवर्दान्विमुच्योत्तरे वा प्राच उदीचो वोत्सृजति ॥ ४१ ॥**

विमुच्यध्वमिति बलीवर्दविमोको दक्षिणेंऽसे । उत्तरेंऽसे वेति । यदि विपरीतम् ॥ ४१ ॥

**तानध्वर्यवे ददाति ॥ ४२ ॥**

तान्विमुक्तानुदीचः प्राचो वा नीत्वाऽथ यजमानोऽध्वर्यवे ददाति । स प्रतिगृह्णाति रुद्राय गामित्यनूहेन ॥ ४२ ॥

**पञ्चदशोदचमसान्निनयति ॥ ४३ ॥**

पञ्चदशोदकपात्राणि निनयतीत्यापस्तम्बः ॥ ४३ ॥

**द्वादशानुसीतं त्रीनकृष्टे ॥ ४४ ॥**

उदकपात्राणि कृष्टेषु निनयत्यध्वर्युः, इति वैखानसः । उदकवन्ति पात्राण्युदकपात्राणि तानि द्वादश कृष्टे । एकैकं सर्वासु सीतासु । त्रीण्यकृष्टे प्रदेशे ॥ ४४ ॥

**या जाता ओषधय इति चतुर्दशभिरोषधीर्वपति । सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः ॥ ४५ ॥**

अरिष्टतातय इत्यन्तः । तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः । वेणुश्यामाकनीवारजर्तिला गवीधुका मर्कटका गार्मुताश्चेति सप्ताऽऽरण्या ओषधयः । सर्वत्र या जाता ओषधयः, इति ओषधेरोषधेरेकैको मन्त्रो वपनार्थः । ओषधीर्वपति ( तै० सं०५–२–५ ) इति विधिदर्शनाच्च ॥ ४५ ॥

**कृष्टे ग्राम्या वपत्यनुसीतमकृष्ट आरण्याः ॥ ४६ ॥**

यदुक्तमापस्तम्बेन—' सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्टे ' ( १६–६–१५ ) इति । तत्र ग्राम्याणां देशविशेषं विधत्ते—' कृष्टे वपति ' ( तै० सं० ५–२–५ ) इति । कृष्टे देशे वपति ग्राम्याः । एवमकृष्टे सप्ताऽऽरण्याः । शेषमन्त्रा विकल्पाः ॥४६॥

या ओषधीनां नाधिगच्छेत्तस्याः स्थाने यवान्म-
धुमिश्रान्वपेत् ॥ ४७ ॥

या ओषधीनां न लभ्यते ग्राम्याणामारण्यानां वा तस्याः स्थाने यवान्मधुमिश्रान्वपेत् ॥ ४७ ॥

मनसा ध्यायेदुप्ता मेऽसीति वा ॥ ४८ ॥

उप्ता मेऽसीति व्रीहितिलादिर्या न लभ्यते तस्या नाम मनसा ध्यायेत् ॥ ४८ ॥

अधिगतायां यः प्रथम इध्म आगच्छति
तस्मिन्नुपनह्यति ॥ ४९ ॥

अधिगतायां लब्धायां वपनक्रियायां परिसमाप्तायां यः प्रथम इध्म आगच्छेदौपसदस्तस्मिन्निध्म एतां बध्नाति । क्षिपति चेध्मेन सह ॥ ४९ ॥

( ये[1] वनस्पतीनां फलग्रहयस्तानिध्म उपसंनह्य
प्रोक्षेत् ॥ ५० ॥

ये वनस्पतीनां फलग्रहयः फलान्येषां केवलानि ते वनस्पतयो वटोदुम्बरादयः । तेषामपि ये प्रसूतफला इष्यन्ते तानिध्मे बध्नाति । औपसिक्ते प्रथमे प्रोक्षेदितीध्मसंस्काराणां प्रदर्शनार्थम् । क्षेपश्च सहेध्मेन ) ॥ ५० ॥

यत्प्रागातिथ्यायास्तत्कृत्वा मा नो हिꣳसी
ज्जनितेति चतसृभिर्दिग्भ्यो लोष्टान्समस्यति ॥ ५१ ॥
येऽन्तर्विधाद्बहिर्विधमापन्ना भवन्ति ॥ ५२ ॥

कर्षणे ये लोष्टाः परिमितक्षेत्राद्बहिः पतन्ति तान्पुनरन्तः पातयेदित्यर्थः । सेदिग्निराममीवामित्यन्तः । यद्वा—कर्षणावसरे ये लोष्टा वेणुना विमिताद्ग्निक्षेत्राद्बहिर्दिक्षु पतितास्ताभ्यो दिग्भ्यस्ताँल्लोष्टानानीय क्षेत्रे संयोजयेत् । भाष्ये तु चतसृभिः प्रतिमन्त्रमेकैकस्यां दिशि लोष्टानामाहरणमिति ॥ ५१ ॥ ५२ ॥

चतुर्थमन्त्रे कंचिद्विशेषं विधत्ते—

इषमूर्जमहमित आदद इति यस्यामस्य दिशि द्वेष्यः
स्यात्तस्यै दिशो लोष्टमाहरेत् ॥ ५३ ॥

अयमग्निचितं पुरुषं द्विष्यात्स पुरुषो यस्यां दिश्यवतिष्ठेत तस्यां दिशि लोष्टमिषमूर्जमिति मन्त्रेणाऽऽहरेत् ॥ ५३ ॥

---

१ धनुश्चिह्नान्तर्गतग्रन्थः, घ. पुस्तके वर्तते ।

**तथोपक्रमेत यथा तस्यां दिश्यपवर्गः स्यादुत्तरवेदिमुपवपति । यावानग्निर्व्याघारणान्तं कृत्वा ॥ ५४ ॥**

प्राकृतेन प्रकारेणोत्तरवेदिं कुर्यात् । तस्यामुत्तरवेद्यां पश्चादग्निर्धीयते । स्पष्टमन्यत् ॥ ५४ ॥

**अग्ने तव श्रवो वय इति षड्भिः सिकता निवपति ॥ ५५ ॥**

रयिमित्यन्तः । षड्भिर्वालुका निवपति क्षिपति । एतान्मन्त्रान्विनियुङ्क्ते—'अग्ने तव श्रवो वय इति सिकता निवपति' ( तै० सं० ५–२–६ ) इत्यादि ॥ ५५ ॥

**चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिराहवनीयचितेरायतनं परिश्रयति यथागार्हपत्यचितेः ॥ ५६ ॥**

चितः स्थ परि चित इति अपरिमिताभिरसंख्याभिराहवनीयचितेर्वेष्टनम् । यथैव गार्हपत्यस्य तिस्रस्तिस्रः संहिताः । न तु व्रजमित्यभिमन्त्रणम् । अथ वा सीदतेत्यन्तः । शरैः क्रियन्ते निष्पाद्यन्त इति व्युत्पत्त्या शर्करा इति नाम संपन्नम् ॥ ५६ ॥

शर्करासु काम्यां संख्यामाह—

**त्रिसप्ताभिः पशुकामस्य ॥ ५७ ॥**

परिमिनुयादिति शेषः । त्रीणि सप्तकानि यासां शर्कराणां तास्त्रिसप्ताः । ताभिरेकविंशतिसंख्याकाभिरित्यर्थः । परिमिनुयात्परिमित्य स्थापयेत् ॥ ५७ ॥

अथान्यां काम्यां संख्यामाह—

**त्रिणवाभिर्भ्रातृव्यवतः ॥ ५८ ॥**

परिमिनुयादित्यनुवर्तते । त्रीणि नवकानि यासां तास्त्रिणवाः सप्तविंशतिसंख्याका इत्यर्थः ॥ ५८ ॥

पक्षान्तरमाह—

**अपरिमिताभिः परिमिनुयात् ॥ ५९ ॥**

अपरिमितं यो धनं कामयेत्स सोऽपरिमितकामः । यो वा सर्वान्कामान्प्राप्तुमिच्छति सोऽपरिमितकाम इति केचित् ॥ ५९ ॥

आ प्यायस्व सं त इति सौमीभ्या९ सिकता व्यूहति ॥ ६० ॥

धिष्वेत्यन्तः । सोमो देवता यस्यामृचि प्रतीयते सेयमृक्सौमी । विश्वतः सोमेत्याद्यायामृच्यसौ प्रतीयते । अमृताय सोमेत्युत्तरस्यामृचि प्रतीयते । तया सौम्या पूर्वं न्युप्ताः सिकता विविधं प्रसारयेत् ॥ ६० ॥

अपिवा गायत्रिया ब्राह्मणस्य व्यूहेत्त्रिष्टुभा
राजन्यस्यासावि सोमो अरुषो वृषा हरी राजेव
दस्मो अभि गा अचिक्रदत् । पुनानो वारं पर्ये-
त्यव्ययं श्येनो न योनिं घृतवन्तमासदमिति
जगत्या वैश्यस्य ॥ ६१ ॥

अपिवेति पूर्वोक्तपक्षाद्विकल्पः । आ प्यायस्व समेतु त इति प्रसारयेद्वालुकाः । सं ते पया९्ंसि, इत्युत्तरा त्रिष्टुप्क्षत्रियस्य व्यूहनार्था । असावि सोम इति जगत्या वैश्यस्य व्यूहनम् ॥ ६१ ॥

अथान्वयव्यतिरेकाभ्यां परिश्रयणं दृढी करोति—

यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः
सिकता व्यूहेत् । यं कामयेत पशुमान्त्स्यादिति
परिमित्य तस्य शर्कराः सिकता व्यूहेत् ॥
( ख० १५) ॥ ६२ ॥

इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने षष्ठः पटलः ॥ ६ ॥

पूर्वं न्युप्तायाः सिकताया व्यूहनं विधास्यति । यजमानस्य पशुराहित्यं कामयमानोऽध्वर्युः परितः शर्करास्थापनमकृत्वैव सिकताप्रसारणं कुर्यात् । तथा सति परिश्रयणाभावादपरिगृहीत एव स्थाने यजमानस्य रेतो विविधं यथा गच्छति तथा विनाशयति । ततोऽयमपशुरेव भवति सोऽयं व्यतिरेकः । एतस्माद्विपरीतोऽन्वयः । तस्मात्पशुलाभाय शर्करापरिश्रयणपूर्वकमेव सिकताव्यूहनं कर्तव्यमिति तात्पर्यार्थः ॥ ६२ ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्ने षष्ठः पटलः ॥

---

अथैकादशप्रश्ने सप्तमः पटलः ।

आतिथ्याप्रभृतीनि कर्माणि प्रतिपद्यते ॥ १ ॥

अत्राऽऽतिथ्यायास्तन्त्रं प्रक्रमयति ( स० श्रौ० ७-३-१० ) इत्यारभ्य ध्रुवायाः शेषं करोति, इडान्ताऽऽतिथ्या( ७-३-११ ) इत्यन्तानि सौमिककर्माणि ॥ १ ॥

**प्रथमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्याग्रेण प्राग्वंशं रोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि प्रथमायाश्चितेरिष्टकाः संसादयति ॥२॥**

पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्यान्तामुपसदं कृत्वा, यदि पश्चादुपसत् । अग्रेण प्राग्वंशमदूरेण प्राग्वंशस्य लोहित आनडुहे शकटवाहिनश्चर्मणि, प्राचीना यस्य ग्रीवा तत्प्राचीनग्रीवम् । उत्तराणि लोमानि यस्य तदुत्तरलोम । तस्मिञ्छकटस्योपरि स्थापिते प्रथमायाश्चितेर्यावत्य इष्टकास्ता एकीकृत्य सादयति ॥ २ ॥

**अपिवा तिस्रः स्वयमातृण्णाः सर्वाश्च विश्वज्योतिषः ॥ ३ ॥**

अथवा तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिषः सादयतीत्यर्थः ॥ ३ ॥

**दर्भाग्रमुष्टिनाऽऽज्येनावोक्ष्य ताः समुद्यम्य चित्येभ्यः प्रणीयमानेभ्योऽनुब्रूहीति संप्रेष्यति । प्रणीयमानेभ्योऽनुब्रूहीति वा ॥ ४ ॥**

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे, इति या एतैर्मन्त्रैरुपधीयन्ते ताः । दर्भाग्रमुष्टिर्नाम प्रभूतमुष्टिस्तेन दर्भाग्रमुष्टिना । आज्येन विविधमवोक्ष्य सर्वेषु देशेषु समुद्यम्येति पाक्षिकः । यदा तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिषस्तदा प्रथमचिते रिष्टकानामशक्यमेवोद्यमनम् । चित्यग्नय इष्टकाचित्यर्थास्तेभ्य आनीयमानेभ्योऽनुब्रूहीति प्रैषार्थः । प्रणीयमानेभ्योऽनुब्रूहीति वा विकल्पश्रुतिरुद्गृह्यते ॥ ४ ॥

**त्रिरनूक्तायामश्वप्रथमाः प्राञ्चो गच्छन्ति ॥ ५ ॥**

प्रथमायां त्रिरनूक्तायामश्वं पुरस्कृत्य गच्छन्त्यध्वर्युब्रह्मयजमानाः ॥ ५ ॥

**उत्तरवेदिं प्राप्य प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्नग्निं गृहीत्वा यास्ते अग्ने समिधो यानि धामेति स्वयंचित्याऽभिमृशति ॥ ६ ॥**

अभिमृशत्युत्तरवेदिम् ॥ ६ ॥

**इष्टकाभिरग्निं चिनोत्यध्वर्युर्यजमानो ब्रह्मा वा स्वयमग्निं चिन्वन्नाऽऽत्मन्नग्निं गृह्णीते न स्वयं-चित्याऽभिमृशति ॥ ७ ॥**

इष्टकाभिरग्निं चिनोत्यध्वर्युर्यजमानो वेत्यापस्तम्बः । यान्युखासंभरणवायव्यादीनि चित्यङ्गानि कर्माणि तान्यध्वर्युरेव करोति । अत इष्टकाभिरित्युच्यते । इष्टकाप्रणय-नादिकं कर्म कथं स्यादितिचेत्- स्वयं चिन्वानो यजमानो नाग्निं गृह्णात्यात्मन्नाग्निम् । नाप्यभिमृशति स्वयंचितिम् । नाध्वर्युरात्मनोऽन्तरेतीति । यदध्वर्युरात्मन्नग्निमगृही-त्वाऽग्निं चिनुयात्, इत्यध्वर्युवचनात् ।

ननु—इष्टकाभिः (१४-१-१) अग्निचयनसाधनीभूता इष्टका धातुमय्यो मृन्मय्यो वाऽ-नियमेनोपादेयाः । इष्टकाशब्दस्य घटादिपदवज्जातिवचनत्वे वा वेदिपदवदाकृतिवचनत्वे वोभयत्रापि प्रयोगदर्शनात् । प्रवृत्तिनिमित्तस्य धातुमयीष्वप्यविशिष्टत्वादिति प्राप्ते-यन्मृचाऽऽपश्चाग्नेरना(न्ना)द्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयते (तै० सं० ५-६-४) इति वाक्यशेषान्निर्मन्थ्येनेष्टकाः पचन्ति, इति विहितपाकस्यादृष्टार्थत्वापत्तेश्च मृन्मय्य एव । यत्तु मूल इष्टकाशब्दस्य जातिवचनत्वं निरस्याऽऽकृतिवचनत्वं तदर्थसंशयान्तरं प्रदर्श्य साधितं, तन्नातीवोपयुक्तमयुक्तं चेत्युपेक्षितम् ॥ ७ ॥

**दक्षिणावृतो दक्षिणत उपदधात्युत्तरतः सव्यावृत ऋजुलेखाः पश्चात्पुरस्ताच्च भवन्ति ॥ ८ ॥ त्र्यालि-खिता मध्ये प्राचीरुपदधाति ॥ ९ ॥ प्रतीचीरुप-दधातीति गणेषु रीतिवादः । प्राचीमुपदधाति प्रती-चीमुपदधातीति कर्तुर्मुखवादः पुरस्तादन्याः प्रतीचीरुपदधाति । पश्चादन्याः प्राचीरपवर्गवादा वचनात्पक्षपुच्छेषु श्रोण्योरंसयोरित्युपदधाति ॥ १० ॥**

प्राचीरुपदधाति प्रतीचीरुपदधातीति यत्र गणेषु श्रूयते पुरस्तादन्याः प्रतीचीरुपद-धातीति तत्र रीतिवादः । प्राचीरुपदधाति प्रतीचीरुपदधातीति यत्र श्रूयते तत्र मुखाभा-वादिष्टकोपधानकर्तुर्मुखवादः । ' पश्चात्प्राचीमुत्तमामुपदधातीति पञ्चचोडायाम् ।

ननु—गणेषु (जै० सू० १४-१-१९) प्राचीरुपदधाति प्रतीचीरुपदधाति, इत्यादौ यत्रेष्टकागणानुवादेन प्राङ्मुखत्वादिकं विधीयते तत्र चतुरश्रेष्टकासु मुखाभावात् प्राङ्-मुखकर्त्रुपधेयत्वेनैवेष्टकानां प्राङ्मुखत्वाद्युपचार इति प्राप्ते—एकैकस्या इष्टकाया मुखाद्य-संभवेऽपि बहूनामिष्टकानामुपधाने [illegible]

नियमार्थो विधयः। अत एव प्रतीचोऽनूयाजान्यजति, इत्यस्य वाक्यशेषे प्राञ्चमुत्तमं संस्थापयत्युत्तमेनेत एव नु संभिनत्ति, इत्यत्र प्रत्यगपवर्गत्वे प्राप्ते–प्राक्संस्था आहुतीर्विधाय चरमयेतरयोरनुसंभेदेनैव प्रत्यक्त्वमुपपद्यते।

ननु–पश्चात्प्राचीमुत्तमामुपदधाति तस्मात्पश्चात्प्राची पत्न्यन्वास्ते (१४-१-२०) इत्यत्राप्युक्तन्यायेन रीतिवादे प्राप्ते–गणेषु तथा संभवेऽप्येकस्यां तदयोगाद्वाक्यशेषे कर्तृगतत्वेनैव विवरणाच्च कर्तुरेवायं मुखवादः पुरस्तात्प्रत्यञ्चमिति कर्तुर्मुखवादः। पुरस्तात् प्रत्यञ्चमिति तु कर्ममुखवादः॥

ननु—पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीः, इत्यत्रापि कर्तुर्मुखवादः। पश्चात्प्राचीरिति पदस्य पूर्वाधिकरणे निर्णीतार्थकत्वात्संनिधानाच्चेति प्राप्ते—बहुत्वादिष्टकानामपवर्गनियमार्थावेव विधी। तस्मात्प्राचीनानि प्रतीचीनानि च नक्षत्राण्यावर्तन्त। इति नक्षत्रमण्डलेष्टकाविन्यासस्तुतिदर्शनात्॥ ८॥ ९॥ १०॥

**श्वेतोऽश्वो दक्षिणतस्तिष्ठति॥ ११॥**

दक्षिणतोऽग्नेः॥ ११॥

**तमालभ्येष्टका उपदधाति॥ १२॥**

यत्र श्वेतोऽश्वस्तिष्ठति तमालभ्य स्पृष्ट्वेष्टकामुपदधाति। उत्तरतस्तु कृष्णस्तमालभ्य पुरीषमुपदधाति, इत्येषा श्रुतिर्बद्धा सूत्रकारेण। अश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणतस्तावालभ्येष्टका उपदध्यादित्येतदपि लभ्यते॥ १२॥

**इन्द्रं विश्वा अवीवृधन्नित्यैन्द्रियर्चाऽऽक्रमणं प्रतीष्टकामुपदध्यात्॥१६॥ उत्तरतः पश्चादुपचारो वाऽग्नेः॥१३॥**

इन्द्रं विश्वा अवीवृधन्निति पुच्छसंधेरुत्तरेणाऽऽरोहणं करिष्यामीति तत्रेष्टकामुपदधाति। अन्तार्विधप्रदेशो विधाः पुरुषा अग्नेरभ्यन्तर इत्युक्तं भवति। यत्राऽऽक्रमत्यारोहणे तत्रेष्टकामुपदधाति। उत्तरे वा पक्ष आक्रमणं प्रतीष्टकामुपदध्यादिति। यद्युत्तरत उपचारोऽथवा पश्चात्पुच्छे वाऽऽक्रमणं प्रतीष्टकामुपदधाति। यदि पश्चादुपचारश्चिन्वन्नाधिक्रामति, इति वचनात्। प्रथमायां चित्यामेव। केचित्तु—चितौ चितावाक्रमणं प्रतीष्टकामुपदधाति, इति। तन्न, एवमुपधानं सूत्रेऽपि नास्ति॥ १३॥

**वाङ्म आसन्नसोः प्राण इत्यग्निमधिक्रामन्सर्वेष्वाक्रमणेषु जपति॥ १४॥**

हिंस्मीरित्यन्तः। वाङ्म आसन्निति पञ्चस्वपि चितिष्वारोहणं जपति। प्रत्यवरोहणं चेति पुरीषमुपधाय श्रुत्यन्तरादयं विधिरिति गम्यते। अस्माकं तु सकृदेव 'चिन्व-

न्नाधिक्रामति' इति वचनात् । तत्त्वा यामि इति होमं हुत्वा वाङ्म आसन्निति जपत्यारोहन् । भाष्यकारस्तु–हुत्वाऽऽरोहणं जपति, इति अस्मिन्क्रमे शाखान्तर आम्नातो यः क्रम इति जपति सक्तुष्ठा पञ्चम्याम् । पुरीषमुपधाय प्रत्यवरोहणं जपति, इत्येतदपि श्रुत्यन्तरम् ॥ १४ ॥

तत्त्वा यामि ब्रह्मणा वन्दमान इति वारु-
ण्यर्चा शालामुखीये जुहोति ॥ १५ ॥

प्रमोषीः स्वाहा । वरुणो देवता । शालामुखीये होमः । चयनाङ्ग शालामुखीयग्रहण चित्ये मा भूद्धोम इति ॥ १५ ॥

अभ्यस्थाद्विश्वाः पृतना अरातीरिति प्राञ्चमश्वं
दक्षिणेन पादेन दर्भस्तम्बमाक्रमयति ॥ १६ ॥

इदानीं वाङ्म आसन्निति जपत्यारोहन् सहाश्वेन । प्राञ्चं प्राङ्मुखम् । 'अभ्यस्थाद्विश्वाः' इति दक्षिणेन पादेन दर्भस्तम्बमाक्रमयति ॥ १६ ॥

यदक्रन्दः प्रथमं जायमान इति प्रदक्षिणमश्वं पर्याणयति ॥ १७॥

प्रदक्षिणमश्वं परिवर्तयित्वा यदक्रन्द इति पुनरेवाऽऽक्रमयति दर्भस्तम्बम् ॥ १७ ॥

दक्षिणतो धार्यमाणेऽपां पृष्ठमसीति दर्भस्तम्बे
पुष्करपर्णमधस्ताद्दण्डमुत्तानमुपदधाति ॥ १८ ॥

अपां पृष्ठमसीत्यश्वस्य पदे दर्भस्तम्बे पुष्करपर्णमधस्ताद्दण्डमुपदधात्युत्तानम्॥ १८ ॥

तपो योनिरसि विश्वाभिस्त्वा धीभिरच्छिद्रꣳ
सजातवनस्यायारु(उ)पदधाम्यमृतं योनिर्ब्रह्म
योनिः क्षत्रं योनिः पृथिवी योनिरन्तरिक्षं
द्यौर्योनिर्दिशो योनिरिति वा ॥ १९ ॥

अनेन मन्त्रेण वा भाष्यं पद्मपत्रोपधानम् ॥ १९ ॥

ब्रह्म जज्ञानमिति पुष्करपर्णे रुक्ममधस्तान्निर्बा-
धमुपदधाति ॥ २० ॥

वि व इत्यन्तः । ब्रह्म जज्ञानमिति पुष्करपर्णेऽधःस्फोटकं रुक्ममुपदधाति । यो विष्णुक्रमणकाले धृतः स इति । यथाऽस्य छिद्रमुत्तरतो भवति तथोपदधाति रुक्ममादित्यस्वरूपम् । तमिमं मन्त्रं ब्राह्मणे विनियुङ्क्ते—'ब्रह्म जज्ञानमिति रुक्ममुपदधाति' ( तै० सं० ५-२-७ ) इत्यादि ॥ २० ॥

हिरण्यगर्भः समवर्तताग्र इति हिरण्मयं पुरुषं प्राञ्चमुत्तानं दक्षिणतो रुक्मस्य द्रप्सश्चस्कन्देत्यभिमृश्य पुरुषसाम्नाऽभिगीयते ॥ २१ ॥

हिरण्यगर्भ इति तस्मिन्रुक्मे हिरण्मयं सुवर्णमयं पुरुषं प्राचीनं प्राक्शिरसमुत्तानं दक्षिणतश्छिद्रस्योपदधाति, तद्विमुच्यमाना (?) द्वारं प्राङ्मुखः कर्ता उपदधाति हिरण्मयः पुरुष आदित्यान्तः पुरुषस्य रूपं तमुपदधाति । पुरुषं साम गायेति साम । यदि तन्नेच्छत्युद्गाता पुरुषसामगानं कर्तुम्। अध्वर्युरेव भूर्भुवः सुवरिति साम गायति यजमानोऽपि। चयनं करिष्यन्द्रप्सश्चस्कन्देति पुरुषस्याभिमर्शनं करोति ॥ २१ ॥

नमो अस्तु सर्पेभ्य इति तिसृभिः सर्पनामभिरुपतिष्ठते ॥ २२ ॥

सर्पेभ्यो नम इत्यन्तः । तिसृभिरुपस्थानं पुरुषस्य करोति ॥ २२ ॥

कृणुष्व पाज इति पञ्चभिरक्षणया पुरुषं व्याघारयति यथोत्तरवेदिम् ॥ २३ ॥

शत्रूनित्यन्तः । पुरुषस्य व्याघारणं तदुत्तरवेदिवत् ॥ २३ ॥

घृतस्य दध्नश्च पूर्णे स्रुचावभितः पुरुषमुपदधाति अग्नेस्त्वा तेजसा सादयामीति ॥ २४ ॥
घृतस्य पूर्णां दक्षिणां कार्ष्मर्यमयीमिन्द्रस्य त्वौजसा सादयामीति दध्नः पूर्णामुत्तरामौदुम्बरीं ते उपधाय मूर्धन्वतीभ्यामुपतिष्ठते ॥ २५ ॥

अत्र—' स्रुचावुप दधाति ' ( तै० सं० ५-२-७ ) इति विधिदर्शनात् । तयोः स्रुचोर्विशेषणं दर्शयति—घृतस्य पूर्णां दक्षिणां कार्ष्मर्यमयीं दध्नः पूर्णामुत्तरामौदुम्बरीमिति । श्रीपर्णाख्यो वृक्षविशेषः कार्ष्मर्यस्तेन निर्मिता काचित्स्रुक्कार्ष्मर्यमयी, सा चाऽऽज्येन पूर्णा । उदुम्बरेण निर्मिता काचित्, सा च दध्ना पूर्णा। एतद्गुणविशिष्टयोः स्रुचोरुपधानस्य विधानान्न वाक्यभेदः शङ्कनीयः । इष्टकान्तरोपधानवत्समन्त्रत्वस्य शङ्कां लौकिकवाक्यं वा निवारयितुमाह ब्राह्मणे—' तूष्णीमुपदधाति ' ( तै० सं० ५-२-७ ) इति । यस्मादाम्नातो मन्त्रो नास्ति तस्माद्यजुषा मन्त्रेणैते उपधातुं नार्हति । तयोर्दिग्विशेषं विधत्ते दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तरा ( तै० सं० ५-२-७ ) इति । यस्माद्द्युलोकरूपौदुम्बरी स्रुगुत्तरस्यां दिश्युपहिता तस्माल्लोकेऽप्यसौ द्यौरस्याः पृथिव्या उत्तरोर्ध्वभाविनी । स च दिग्विशेष

आपस्तम्बेन स्पष्टमभिहितः—आज्यस्य पूर्णां कार्ष्मर्यमयीं दक्षिणेन पुरुषं दध्नः पूर्णामौदुम्बरीमुत्तरेण पुरुषम् ( आप० श्रौ० १६–७–९ ) इति । अग्निर्मूर्धेति कार्ष्मर्यमय्या उपस्थानं भुवो यज्ञस्येत्यौदुम्बर्याः ॥ २४ ॥ २५ ॥

**अपि वा तूष्णीमुपधाय मूर्धन्वतीभ्यामुपतिष्ठते । मूर्धन्वतीभ्यामुपधाय यजुर्भ्यामुपतिष्ठत इत्येकेषाम् ॥ २६ ॥**

अथवा तूष्णीं तयोरुपधानम् । मूर्धन्वतीभ्यामुपस्थानमित्येकः पक्षः । अग्निर्मूर्धा, भुवो यज्ञस्येति द्वाभ्यां कार्ष्मर्यमयीमौदुम्बरीं चोपधायाऽग्नेस्त्वा, इन्द्रस्य त्वा, इति यजुर्भ्यामुपस्थानमित्यपरः पक्षः । अथवा तूष्णीमुपधान ऋग्भ्यामुपधाने वा यजुर्भ्यामुपतिष्ठत इत्येके शाखिनः परिपठन्ति ॥ २६ ॥

पाशुकस्योत्तरवेदिवद्रुक्मस्योपरि व्याघारणमाह—

**रुक्मं व्याघारयति । यथापुरुषम् ॥ ( ख० १७ ) ॥ २७ ॥**

पुरुषवद्रुक्मं व्याघारयेत् ॥ २७ ॥

**ध्रुवाऽसि धरुणेति स्वयमातृण्णामभिमृश्याश्वेनावघ्राप्य प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीमिति मध्येऽग्नेरविदुषा ब्राह्मणेन सहोपदधाति । भूरिति चैतया व्याहृत्या ॥ २८ ॥**

ध्रुवाऽसीति स्वयमातृण्णामालभतेऽश्वेनावघ्राप्याऽऽरूढेनाग्निमविद्वानपि मन्त्रानध्याप्य सह तेनोपधानं, प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठ इत्यारभ्य सीदेत्युक्त्वा भूरित्युपधीयते ।

यद्वा स्वयमातृण्णा तु यद्यपि पुरुषैरनिर्मिता तथाऽपि तस्या इष्टकात्वं मुख्यमित्यभिप्रेत्य मुख्यास्विष्टकास्वस्याः प्राथम्यमुच्यते—प्रथमेष्टकोपधीयमाना ( ९–२–८ ) इत्यादि ब्राह्मणे । अत्राविदुषो ब्राह्मणस्य हस्ते मन्त्रसंस्कृतां स्वयमातृण्णां दद्यात् । ततः स ब्राह्मणोऽध्वर्युश्च मिलित्वा तामुपदध्यातामित्यर्थः ॥ २८ ॥

**चितिं जुहोमीति स्वयमातृण्णायां हुत्वाऽनुप्राणिति ॥ २९ ॥**

हविः स्वाहा । विश्वकर्मा देवता । चितिं जुहोमीति हुत्वाऽऽज्यमुपरि तस्याः प्राणनं करोति नासिकावातम् ॥ २९ ॥

**अविद्वान्ब्राह्मणो वरं ददाति । एकं द्वौ त्रीन्वा ॥ ३० ॥**

यः स्वयमविद्वान्सन्निष्टकामुपदधाति स्वयमातृण्णां स एष आर्तिमाप्तुं समर्थो भवति ।

अतस्तत्परिहारायाध्वर्यवे वरदानं कुर्यात् । वरशब्देन श्रेष्ठत्वाद्गौरुच्यते । त्रीन्द्वावेकमिति पक्षा विकल्पिताः ॥ ३० ॥

तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहीति हिरण्येष्टकाम् । पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तार इति मण्डलेष्टकाम् । भूरसि भुवनस्य रेत इष्टकाः स्वर्गो लोको मनसा त्वाऽन्वारोहामि सुवरसि सुवनस्य रेत इष्टकाः स्वर्गो लोको मनसा त्वाऽन्वारोहामीत्यन्वारोहे द्वे उपदधाति ॥ ३१ ॥

तेजोऽसि तेजो मे यच्छेति हिरण्येष्टकामुपदधाति । अनियतदेशाद्द्रव्येष्टकानामप्युपरि मृन्मय्य उपधीयन्ते द्रव्येष्टकाश्चावटे । मृन्मयीनामेव संख्यापूरणं स्यादापस्तम्बे । तदाहैष द्विशतः प्रस्तार इति । यत्प्राचीनमैष्टकाद्यजुः क्रियत इति लिङ्गाच्च । पृथिव्युदपुरमन्नेनेति मण्डलेष्टकाम् । मन्त्रेणैवास्य मण्डलेष्टकात्वम् । बौधायनीयस्य तु मण्डलं मण्डलेष्टकायामालिख्यते । ऋषभमृषभेष्टकायामिषुं विकर्ण्यामिति । आपस्तम्बस्य तु अनिमित्तानीष्टकानामधेयानीति पक्षः । यथाऽऽत्मेष्टकामिति । भूरसीत्यन्वारोहे द्वे आक्रमणं प्रतीष्टकायाः समीप उपधीयेते ॥ ३१ ॥

काण्डात्काण्डात्प्ररोहन्तीति द्वाभ्यां दूर्वास्तम्बꣳ सलोष्टमप्रच्छिन्नाग्रं यथाऽस्य स्वयमातृण्णामग्रं प्राप्नुयात् ॥ ३२ ॥

दूर्वास्तम्बमूलं तत्सह लोष्टेन हरितमप्रच्छिन्नाग्रं—काण्डात्काण्डात्—इति द्वाभ्यामृग्भ्यामुपहितस्य यथा स्वयमातृण्णामग्रं प्राप्नोति तथोपदधाति ॥ ३२ ॥

हिरण्यशकलौ प्रबाहुगिष्टकायामध्यूह्य यास्ते अग्ने सूर्ये रुच इति द्वाभ्यां वामभृतम् ॥ ३३ ॥

प्रबाहुक् समम् । इष्टकायां तुल्यदेशे हिरण्यशकलौ स्थापयित्वा यास्त अग्ने सूर्ये रुच इति द्वाभ्यां वामभृतं स्थापयति ।' ३३ ॥

विराड्ज्योतिरधारयदिति तिस्रो रेतःसिचः ॥ ३४ ॥

रेतःसिचस्तिस्र उपदध्यादिति शेषः । त्रिभिर्मन्त्रैरिति वैखानसः ॥ ३४ ॥

द्वे एके समामनन्ति ॥ ३५ ॥

एके शाखिनः समामनन्ति, आदितो द्वे ॥ ३५ ॥

**ताः प्रथमायां चित्यां यून उपदध्यात् । मध्यमायां विवयसः । प्रथमायामुत्तमायां च स्थविरस्य ॥ ३६ ॥**

तासां तु विधिः—प्रथमायां द्वे चित्यां तरुणस्य तस्य तृतीया नास्ति । मध्यमायां चित्यां मध्यमवयसास्तिस्रोऽपि प्रथमायां चित्यामेकां पञ्चम्यामेका स्वराडिति स्थविरस्य । रेत एवास्य सिक्तमाभ्यामुभयतः परिगृह्णाति, इति द्यावापृथिवीसंस्तवात् । एकतरां त्वापस्तम्बेनोक्ताम्—अन्यतरामुपदध्याद्द्वेष्यस्य । यजुषेमां चामूं चोपदधाति । मनसा मध्यमाम्, ( आप० श्रौ० १६-७-२० ) इति । द्वेष्यस्योपदधातीति प्रतिषेधार्थम् । यजुषा पृथिवीं च द्यां चोपदधाति । उपांशु प्रथमतृतीययोर्विधिः । तयोः पृथिवीद्युलोकसंस्तवात् । मध्यमा द्वितीया, तां मनसोपदधाति—सम्राड्ज्योतिरिति यजुषैव ॥ ३६ ॥

**बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् । अग्नेर्यान्यसि देवानामग्नेर्यान्यसीति द्वे संयान्यौ । मधुश्च माधवश्चेति द्वे ऋतव्ये । समानतया देवते भवतः ॥ ३७ ॥**

विश्वज्योतिः—बृहस्पतिस्त्वा सादयत्विति या प्रणीता । अग्नेर्यान्यसीति संयान्यौ, मधुश्च माधवश्चेति द्वे ऋतव्ये, समानतया देवते ॥ ३७ ॥

**सर्वास्वृतव्यास्ववकामुपदधाति ॥ ३८ ॥**

सर्वासु ऋतव्यासु, उपधाय द्वे पश्चादवकां तयोरुपर्युपदधाति । अवकासु सादयतीत्येके ( आप० श्रौ०–१६–७–२२ ) इत्यापस्तम्बः ॥ ३८ ॥

**घर्मेष्टकामुपदधाति । तस्याः प्रवर्ग्ये मन्त्र आम्नातः ॥ ३९ ॥**

घर्मेष्टका तूपधेयोदस्य शुष्माद्भानुरिति प्रवर्ग्यपरिपठितो मन्त्रः ॥ ३९ ॥

**अषाढाऽसीत्युपरिष्टाल्लक्ष्माणमषाढां द्वेष्यस्याधस्ताल्लक्ष्माणं यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः । ये ते अग्न इन्दवो या उ नाभयः । यास्ते अग्ने तनुव ऊर्जो नाम ताभिस्त्वमुभयीभिः संविदानः । इह प्रजानां तन्वा निषीदेति कुलायिनीम् ॥ ४० ॥**

उखया सह कृतां द्वाभ्यामुपदधात्यषाढाम् । अषाढाऽसीति मध्येऽङ्गुल्यालिखितां मध्य इति । यथा त्र्यालिखितोपरिष्टाद्भवति तथोपदधाति । तथा चोक्तं ब्राह्मणे—यं

कामयेत वसीयान्भवेदिति । उपरिष्टाद्व्यालिखिता यथा भवति तथोपदधाति । यं कामयेत पापीयान्भवेदित्यधस्तात्तस्योपधेयेति व्यालिखिता प्रतिषेधार्थम् । कुलायिनी—यास्ते अग्न आर्द्रा योनयो या इति च प्रवर्ग्यपरिपठितौ मन्त्रौ ॥ ४० ॥

**मधु वाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यनक्ति ॥ ( ख० १८ ) ॥ ४१ ॥**

भवन्तु न इत्यन्तः । तिसृभिरभ्यङ्गो दध्ना मधुमिश्रेण कूर्मस्य ॥ ४१ ॥

**अपां गम्भीरं गच्छ मा त्वा सूर्यः परीताप्सीन्मो अग्निर्वैश्वानरः । अघोरः प्रजा अभि विपश्यानु त्वा दिव्या वृष्टिः सचताम् ॥ सꣳसर्प त्रीन्समुद्रान्त्स्वर्गांल्लोकानपांपतिर्वृषभ इष्टकानाम् । तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानः स्वां योनिं यथायथमित्यभिमन्त्र्य मही द्यौः पृथिवी च नश्चतस्र आशा इति द्वाभ्यां पुरस्तात्प्रत्यञ्चं जीवन्तं प्राङ्मुख उपदधाति ॥ अवकाभिः परीतꣳस्य(रितत्य) जालेनावच्छाद्य शङ्कुभिः परिणिहन्ति ॥ ४२ ॥**

अपां गम्भीरं गच्छेत्युपहितस्याभिमन्त्रणं विधाय मही द्यौश्चतस्र आशा इति द्वाभ्यामृग्भ्यामुपदधाति कूर्मं पुरस्तात्स्वयमातृण्णायाः प्रत्यङ्मुखं जीवन्तं प्राङ्मुखः कर्ता । आपस्तम्बसूत्रे चतस्र आशा इति वेति विकल्पेनोपदधाति, अवकाभिर्वेष्टितं परिगतेन जालेन प्रच्छाद्यते शङ्कुभिश्च निहन्यते यथोपहितो न चलति । उपधेयस्य कूर्मस्य जीवनोपेतत्वगुणं ब्राह्मणे विधत्ते—श्मशानं वा एतत्क्रियते ( तै० सं० ५-२-८ ) इत्यादि मृतानां पशूनामश्ववृषभवृष्णिबस्तानां शिरांस्युपधेयानी युपरिष्टाद्वक्ष्यति । तदेतत्स्थानं श्मशानमेव कृतं भवति । जीवत्कूर्मोपधानेनायं यजमानोऽश्मशानचिद्भवति । किंच यः कूर्मोऽस्ति स एष वास्तव्यो निवासयोग्यः कूर्मपृष्ठे भूमेरवस्थितत्वात् । ततोऽपि कूर्मोपधानमित्यर्थः ॥ ४२ ॥

**यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे । इह द्युमत्तम वद जयतामिव दुन्दुभिरिति दक्षिणस्याꣳ श्रोण्यामुलूखलं मुसलं प्रयुनक्ति ॥ ४३ ॥**

दक्षिणस्यां श्रोण्यामासादयत्युलूखलं मुसलं मन्त्रेण द्रव्यपृथक्त्वादावृत्तिः ॥ ४३ ॥

**औदुम्बरं प्रादेशमात्रं चतुःस्रक्त्युलूखलमपरिमितं मुसलं भवति ॥ ४४ ॥**

उदुम्बरस्यावयव औदुम्बरस्तं प्रादेशमात्रप्रमाणमुलूखलमपरिमितं मुसलं तदौदुम्बरम् । उलूखलस्य प्रकृतिद्रव्यं विधत्ते—औदुम्बरं भवति ( तै० सं० ५-२-८ ) इत्यादि ॥ ४४ ॥

**उत स्म ते वनस्पते वातो विवात्यग्रमित् । अथो इन्द्राय पातवे सुनु सोममुलूखलेति सर्वौषधस्य पूरयित्वाऽवहन्ति ॥ ४५ ॥**

सप्त ग्राम्याः सप्ताऽऽरण्या ओषधयस्ताभिः पूरयित्वा तूष्णीमुत स्म त इति मन्त्रेणावहननम् । सुनु सोममुलूखलेति मन्त्रलिङ्गात् ॥ ४५ ॥

देशविशेषमाह—

**तद्विष्णोः परमं पदमिति मध्येऽग्नेरुलूखलं मुसलमुपदधाति विष्णोः कर्माणि पश्यतेति वा मुसलम् ॥ ४६ ॥**

मध्यत उपदधाति ( तै० सं० ५-२-८ ) इत्यादिब्राह्मणम् । अग्नेर्मध्य उपदधात्युलूखलं मुसलं द्रव्यपृथक्त्वादभ्यावर्तते, इति न्यायादेकमन्त्रपक्षेऽपि । मन्त्रद्वयपक्षे तु तद्विष्णोरित्युलूखलं, विष्णोः कर्माणीति मुसलं चोपदध्यात् ॥ ४६ ॥

**दिवो वा विष्णविति शूर्पम् ॥ ४७ ॥**

दिवो वा विष्णवित्याशीःपदयर्चा शूर्पं, सव्यादित्येवमन्तया ॥ ४७ ॥

उपधेयाया उखायाः सिकतापूरणं चाऽऽह—

**सिकताभिरुखां पूरयति ॥ ४८ ॥**

स्पष्टोऽर्थः ॥ ४८ ॥

**दध्ना मधुना घृतेन वा ॥ ४९ ॥**

पूरयतीत्यनुवर्तते । स्यूता देवेभिरित्युखां पूरयति घृतेन मधुना सिकताभिर्वा सर्वैर्वा । घृतेन संसृज्य पूरयति न रिक्ताया अवेक्षणप्रतिषेधो बहिरपि शुचि(विशु)द्धा भवति, इत्यापस्तम्बेनोक्तत्वात् । पूरणोत्तरकालं पय आनयत्यस्याः संनिवापे तु कृते पूरणमेके परिपठन्ति । अतः क्रमः ॥ ४९ ॥

अन्वयव्यतिरेकाभ्यां पूरणं प्रशंसति—

**यं कामयेत क्षोधुकस्यादित्यूनां तस्योपदध्यात् । यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योपदध्यात् ॥ ५० ॥**

सिकताभिः पूरिताया ईषन्न्यूनाया उखाया उपधाने सति क्षोधुकोऽन्नरहितः क्षुधाशीलो भवति । सोऽयं व्यतिरेकः । सिकतापूर्णाया उपधाने त्वनुपदस्यदेवाक्षीयमाणमेवान्नमत्ति । सोऽयमन्वयः ॥ ५० ॥

स्यूता देवेभिरमृतेनाऽऽगा उखाँ स्वसारमधिवेदिमस्थात् । सत्यं पूर्वैर्ऋषिभिश्चाकु(क्लृ)पानो(णो)ऽग्निः प्रविद्वानिह तत्करोत्वित्युखामादाय ध्रुवाऽसि पृथिवीति च ॥ पृथिवी पृथिव्या॰ सीद माता मातरि माता स्योना स्योनायां क्रतुर्देवानां महिमानमीमहेऽग्नि॰ सधस्थे सदनेषु सुक्रतुः । वैश्वानरं ब्रह्मणा विश्वव्यचस॰ सो(स्तो)मस्य धामं नि मन्नि)हितं पुरीष्यम् । समिद्धमग्नि॰ समिधा समिध्यसेऽग्नि॰ सधस्थे सदनेष्वच्युतम् ॥ वैश्वानरं ब्रह्मणा विश्वव्यचस॰ स्तोमस्य धाम नि(न्नि)दधे पुरीष्यम् । न्ययुर्मात्रया कवयो वयोधसोऽग्नि॰ सधस्थे सदनेष्वाहुतम् ॥ वैश्वानरं ब्रह्मणा विश्वव्यचस॰ स्तोमस्य धाम प(न्प)वन्नानमात्ततम् ॥ ध्रुवाऽसि पृथिवी तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति मध्येऽग्नेरुखामुपदधाति ॥ ५१ ॥

उपदधाति स्थापयति ॥ ५१ ॥

उपरिष्टादुलूखलस्येत्येकेषाम् ॥ ५२ ॥

पृथिवी पृथिव्या॰ सीदेति वोलूखलस्योपर्युखामुपदधाति वाजसनेयिब्राह्मणम् ॥ ५२ ॥

अग्ने युक्ष्वा हि ये तवेति युक्तवतीभ्याम् ॥ (ख० १९ ) ॥

उखायामेकाहुतिं जुहोति ॥ ५३ ॥

उपाहितायामुखायां होमः । अग्निर्देवता ॥ ५३ ॥

पुरुषशिरसः प्राणेषु हिरण्यशल्कान्प्रत्यस्यति । ऋचे त्वेति दक्षिणेऽक्षिकटे । रुचे त्वेत्युत्तरे भासेति दक्षिणस्यां नासिकायां ज्योतिषे त्वेत्युत्तरस्यामभूदिदं विश्वस्य भुवनस्य वाजिनामग्नेर्वैश्वानरस्येऽग्निर्ज्योतिषा ज्योतिष्मानिति दक्षिणे कर्णे रुक्मो वर्चसा वर्चस्वानित्युत्तरे ॥ ५४ ॥

तस्य पुरुषशीर्षस्याऽऽस्यादिच्छिद्रेषु हिरण्यशकलप्रक्षेपं वक्ति श्रुतिः–'प्राणेषु हिरण्यशल्कान्प्रत्यस्यति' ( तै० सं० ५–२–९ ) इत्यादि । प्राणसंचारस्थानेष्वास्यादिषु हिरण्यशकलान्प्रक्षिपेत् । एवमापस्तम्बादिषु द्रष्टव्यम् ॥ ५४ ॥

समित्स्रवन्ति सरितो न धेना इति शृतातङ्क्येन
दध्ना मधुमिश्रेण पुरुषशिरः पूरयित्वा सहस्रधा
असि सहस्राय त्वेत्यादायाऽऽदित्यं गर्भं पयसा
समङ्ग्धीत्युखायामुत्तानं प्राक्चुबुकमुपदधाति॥५५॥

आसामित्यन्तः । अहं मधव्योऽसानि ( ५-२-९ ) इति मधुररसभोगयोग्यो भवानीत्यनेनाभिप्रायेणैतत्पुरुषशिरो मधुयुक्तेन दध्ना पूरयेत् । अत्र द्विविधं दधि । तत्रैकं रजतप्रक्षेपादिना स्वयमेव घनीभवति । अन्यत्तु पक्कक्षीरादातञ्चनेन निष्पद्यते । तत्र क्षीरातञ्चनाभ्यां निष्पन्नं यागयोग्यम् । तस्मात्तादृशेनैव पूरयेत् । सर्वेषां पशुशिरसां चाश्वादीनां हिरण्यशकलप्रक्षेपः पुरुषशिरोवत्पूरणं तद्वदेवेति वाजसनेयिनः परिपठन्ति । सहस्रधा इति पुरुषशिरो गृहीत्वाऽऽदित्यं गर्भं पयसेत्युखायामुपदधाति, यथा पुरस्ताद्धनुर्भवाति प्राचीनं पुरस्ताच्चुबुकमिति व्याख्यातमुत्तानम् । प्राङ्मुखः कर्ता उपदधातीत्यर्थः ॥ ५५ ॥

उदु त्यं चित्रमिति सौर्यर्चाभ्यामक्षिकटयोरभिजुहोति ॥ ५६ ॥

सौर्यर्चाभ्यां होमः सूर्यो देवता । यद्वा–चित्रमिति दक्षिणेऽक्षिकटे, आ प्राद्यावा पृथिवी इति सव्ये जुहोति ॥ ५६ ॥

पशुशीर्षाण्युपदधाति ॥ ५७ ॥

पशुशिरसामुपधानं करोति ॥ ५७ ॥

यं कामयेतापशुः स्यादिति विषूचीनानि तस्योपदध्यात् । यंकामयेत पशुमान्त्स्यादिति समीचीनानि तस्योपदध्यात् । यं कामयेत कनीयोऽस्यान्नꣳ स्यादिति संतरां तस्य पशुशीर्षाण्युपदध्यात् ॥
यं कामयेत समावदस्यान्नꣳ स्यादित्यभितस्तस्य स्वयमातृण्णामुपदध्यात् । यं कामयेत भूयोऽस्यान्नꣳ स्यादित्यन्तेषु तस्य व्युदुह्योपदध्यात् ॥५८॥

यं कामयेतापशुर्भवेदिति विषूचीनानि पराङ्मुखाणि । पुरुषशिरसः प्रतिषेधोऽयं न विधिः । विषूचोऽस्य पशवः, सर्वेऽश्वादयः पलायन्ते, समीचीनानि अपराङ्मुखाणि । पुरुषशिरस इति विधिः प्रशस्यते । समीचो यजमानसमीपेऽश्वादयः पशव आयान्ति,

(अतः) पशुमान्भवति । यजमानसमीप एव दधाति । एवमुत्तरत्र यं कामयेताल्पमस्यान्नँ स्यादिति संतरां संगतान्तरामुखायामेव पशुशीर्षाण्युपधेयानीति प्रतिषेधार्थमुच्यते । समानवत्समानाधिकं न न्यूनं संवत्सरप्रक्रान्तं मध्यतस्तस्याग्नेरुपदध्यात् । चतसृष्वपि दिक्षु । यं कामयेत बह्वन्नं स्यादित्यन्तेषु तस्य चतुर्दिशमप्यग्नेर्विदुह्य मृत्तिकामपनीयोपधानं कर्तव्यम् । दिगन्तेष्वन्ततः । तस्माद्बह्वन्नं स्यात्ततोऽन्नं लभ्यते भूयो बह्वन्नं भवति ॥ ५८॥

**वातस्य ध्राजिमिति पुरस्तात्प्रतीचीनमश्वस्योपदधाति । अजस्रमिन्दुमिति पश्चात्प्राचीनमृषभस्य । वरूत्रिं त्वष्टुरिति दक्षिणत उदीचीनं वृष्णेरुत्तरतो वा दक्षिणं यो अग्निरग्नेरित्युत्तरतो दक्षिणं बस्तस्य दक्षिणतो वोदीचीनं तान्युत्सर्गैरव्यवायन्प्रदक्षिणमनु परिक्रामन्प्रतिदिशमुपतिष्ठते ॥(ख० २०)॥ इमं मा हिꣳसीर्द्विपादमिति पुरुषस्य । इमं मा हिꣳसीरेकशफमित्यश्वस्य । इमꣳ समुद्रमित्यृषभस्य । इमामूर्णायुमिति वृष्णेः । अजा ह्यग्नेरिति बस्तस्य ॥ ५९ ॥**

वातस्य ध्राजिमिति पुरस्तादग्नेः प्रतीचीनं प्रत्यङ्मुखः पुरुषशिरोभिमुखमश्वशिर उपदधाति । अजस्रमिन्दुमिति पश्चादग्नेः प्राङ्मुखः पुरुषशिरोभिमुखमृषभस्य शिर उपदधाति । वरूत्रिं त्वष्टुरिति दक्षिणत उदीचीन उदङ्मुखः पुरुषशिरो[ भि ]मुखं वृष्णेः शिर उपदधाति । यो अग्निरग्नेरित्युत्तरतोऽग्नेर्दक्षिणामुखः पुरुषशिरोभिमुखं बस्तस्य शिर उपदधाति । तान्युपतिष्ठन्ते शिराँसि, अव्यवायेनान्तरं तेषामगच्छन् । उत्सर्गैर्ग्राम्याणां पशूनाम्, आरण्यास्तु तद्रूपा मयुप्रभृतयस्तेषामश्वमेधे वक्ष्यति । इमं मा हिꣳसीर्द्विपादमिति पुरुषशिरस उपस्थाने । इमं मा हिꣳसीरेकशफमित्यश्वस्य, इमꣳ समुद्रमित्यृषभस्य, इमामूर्णायुमिति वृष्णेः, अजा ह्यग्न इति बस्तस्य ॥ ५९ ॥

**अथ यदि वायव्यस्य शिरो भवति ॥ ६० ॥**

**मुख्यस्थाने सर्वैरुपधाय सर्वैरुत्सर्गैरुपतिष्ठते ॥ ६१ ॥**

यदि वायव्यस्य शिरः स्यात्सर्वेषां स्थाने कृतं, मुख्यस्य स्थाने पुरुषशिरसः सर्वेषामुपधानमन्त्रैरुपधाय, उखायाम्—आदित्यं गर्भं वातस्य ध्राजिमजस्रमिन्दुं वरूत्रिं त्वष्टुः, यो अग्निरग्नेरित्येतैः सर्वैरुपधाय चित्रं देवानामित्यक्षिकट्योर्हुत्वा सर्वेषामुत्सर्गैरुपस्थानं भवतीति भावः ॥ ६० ॥ ६१ ॥

अपि वा तस्य तस्य स्थान उपधाय तस्य तस्यो-
त्सर्गेणोपतिष्ठते ॥ ६२ ॥

अथवा पुरुषशिरःस्थान उपधायार्धर्चाभ्यां हुत्वा तस्यैवोत्सर्गेणोपस्थानम् । एव-मश्वादिहोमवर्जमुपधानं कृत्वोत्सर्गेणोपस्थानं भवतीत्यर्थः ॥ ६२ ॥

नमो अस्तु सर्पेभ्य इत्येतेषामेकेनोत्तरेऽंसे सर्प-
शिर उपदधाति । विषूचीनं पशुशिरोभिः ॥६३॥

नमो अस्तु सर्पेभ्य इत्येकया वा सर्पशिरस उपधानं भवति । अनेकमन्त्राणि कर्माणीति न्यायात् । विषूचीनं, न पशुशिरसोऽभिमुखम् ॥ ६३ ॥

अपि वा यजुरेव वदेन्नोपदध्यात् ॥ ६४ ॥

अथवा—ऋचमेव ब्रूयात् । न चातुःस्वर्येण जपति, इत्यनुक्तत्वान्नोपदध्यात्सर्पशिरः । 'अथो खल्पधेयमेव यदुपदधाति' ( तै० सं० ५–२–९ ) इति पुनर्वचनात् । प्राकृतेऽग्नौ नित्यम् । एकविधादिषु गुणविकारेषु च 'यद्यजुर्वदति तेन शान्तम्' ( ५–२–९ ) इति । सूत्रकारस्य त्वेवंविधेषु यदर्थवादे फलमुद्दिश्य तत्कामस्य सहविधिः । सदीप्तिः शान्तिरिति फलम् ॥ ६४ ॥

मा छन्दस्तत्पृथिव्यग्निर्देवता तेनर्षिणा तेन
ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।
प्रमा छन्दस्तदन्तरिक्षं वातो देवता । प्रतिमा
छन्दस्तद्द्यौः सूर्यो देवता । अस्रीविश्छन्दस्त-
द्दिशः सोमो देवता । विराट्छन्दस्तच्चक्षुः पूषा
देवता । गायत्री छन्दस्तदजा बृहस्पतिर्देवता ।
त्रिष्टुप्छन्दस्तद्धिरण्यमिन्द्रो देवता । जगती
छन्दस्तद्गौः प्रजापतिर्देवता । अनुष्टुप्छन्दस्तद्वा-
ग्वरुणो देवता । उष्णिहा छन्दस्तदायुर्मित्रो
देवता । पङ्क्तिश्छन्दस्तत्कृषिः पर्जन्यो देवता ।
बृहती छन्दस्तदश्वः परमेष्ठी देवता । तेन-
र्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा
सीदेति द्वादशभिस्त्रिरभ्यावर्तयन्षट्त्रिंशता पुर-
स्तात्प्रतीचीं पुरुषाकृतिं चितिं चिनोति ॥६५॥

मा छन्द इत्येवमादिभिर्द्वादशेष्टकास्त्रिरभ्यासमुपदधाति, प्रत्यगपवर्गम् । षट्त्रिंशदिष्टकाः प्रतीचीमिति च वैखानसे वचनात् ॥ ६५ ॥

पुरुषशिरोऽस्याः शिरो भवति ॥ ६६ ॥

यथा पुरुषस्याऽऽकृतिः सर्वाभिर्जायते तथा करोति । पुरुषशिरश्च यथास्थाने भवति प्राक्पाद उत्तान ऊर्ध्वहस्तश्च क्रियत इति भाष्यकृत् ॥ ६६ ॥

तामुपधाय सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति पुरुषेण नारायणेनोपतिष्ठते ॥(ख०२१)॥६७॥

इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्ने सप्तमः पटलः ॥ ७ ॥

सहस्रशीर्षा पुरुष इति तां यजमान उपतिष्ठते, प्रत्यङ्मुखः ॥ ६७ ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्ने सप्तमः पटलः ॥

अथैकादशप्रश्नेऽष्टमः पटलः ।

अपस्या उपदधाति । अपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीः । अर्णवे सदने सीदेति पञ्च दक्षिणत उदीचीः । अपां त्वा सदने सादयामीति पञ्च पश्चात्प्राचीः । गायत्री छन्द इति पञ्चोत्तरतो दक्षिणाः ॥ १ ॥

अब्लिङ्गगतैर्मन्त्रैरुपधेया इष्टका अपस्याः । ताश्चोपदध्यायत् । अपस्याः—अपां त्वेमन्त्सादयामीति विंशतिः । पञ्च पुरस्तादग्नेः प्रत्यगपवर्गाः । पञ्च दक्षिणतोऽग्नेरुत्तरापवर्गाः—अर्णवे सदने सीदेति । अपां त्वा सदने सादयामीति पञ्च प्रागपवर्गाः पश्चादग्नेः । गायत्री छन्द इत्युत्तरतोऽग्नेर्दक्षिणापवर्गाः । पक्षयोः पुच्छे चार्णवे सदन इत्येवमाद्याः ॥ १ ॥

ये यज्ञं समगृभ्णन्देवा देवेभ्यः परि । तान्गायत्री नयतु प्रजानती स्वर्गे[1] लोके अमृतं दुहाना । ये ज्योतींषि संदधति स्वरारोहन्तो अमृतस्य लोकम् । ते यन्तु प्रजानन्तो यज्ञं विदानाः सुकृतस्य लोके । ये पशवो मेध्यासो यज्ञस्य योनिमभि संबभूवुः । तान्ददन्ते कवयो विपश्चितो यज्ञं विदानाः सुकृतस्य लोके । यः पन्था विततो

---

१ क. सुवर्गे

देवयानश्छन्दोभिर्विगृहीतं एति । तेनातिष्ठद्दिव-
मन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकम् । यो
यज्ञः सहस्रधारो द्यावापृथिव्योरधि निर्मितः ।
तेनैतु यजमानः स्वस्त्या दिवोऽधि पृष्ठमस्थादिति
पञ्च हिरण्येष्टकाश्चतस्रः प्रतिदिशमेकां मध्ये ॥२॥

ये यज्ञमिति प्रतिमन्त्रं प्रतिदिशं हिरण्येष्टकामुपदधाति । एकां मध्ये ॥ २ ॥

आयवे स्वाहा योष्कृते स्वाहा योष्यत्त्वने स्वाहा
विष्णवे स्वाहा बृहस्पतये स्वाहेति पञ्च हिरण्येष्ट-
काश्चतस्रः प्रतिदिशमेकां मध्ये । त्रिवृत्ते अग्ने
शिरस्तन्मे अग्ने शिरः पञ्चदशौ ते अग्ने बाहू तौ
मे अग्ने बाहू सप्तदशस्ते अग्न आत्मा स मे अग्न
आत्मैकविꣳशौ ते अग्न ऊरू तौ मे अग्न ऊरू
त्रिणवौ ते अग्नेऽष्ठीवन्तौ तौ मे अग्नेऽष्ठीवन्तौ
त्रयस्त्रिꣳशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठान-
मित्येताः शिरसि पक्षात्पुच्छेषु श्रोण्योरꣳसयो-
रुपदधाति । त्रिवृत्ते अग्ने शिरस्तेन माऽभिपाहि
पञ्चदशौ ते अग्ने बाहू ताभ्यां माऽभिपाहि
सप्तदशस्ते अग्न आत्मा तेन माऽभिपाह्येकवि-
ꣳशौ ते अग्न ऊरू ताभ्यां माऽभिपाहित्रिणवौ
ते अग्नेऽष्ठीवन्तौ ताभ्यां माऽभिपाहि त्रयस्त्रिꣳशं
ते अग्ने प्रतिष्ठानं तेन माऽभिपाहीत्युपहिता यज-
मानोऽनुमन्त्रयते ॥ ( ख० २२ )॥ ३ ॥

आयवे स्वाहेति पञ्चानां हिरण्येष्टकानां यथावकाशमुपधानं भवति । त्रिवृत्ते अग्ने इत्येताः पञ्च मृदिष्टकाः शिरसि वा यथावकाशमित्येकेषां मतम् । उपहितानामिष्टकानां त्रिवृत्त इत्यनुमन्त्रणं यजमानस्य ॥ ३ ॥

अद्भ्यः संभूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त-
ताधि । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजा-
नमग्र इत्येतामुपधायर्तसदसि सत्यसदसि तेजःसदसि
वर्चःसदसि यशःसदसि घृणानाऽसि । धामासि धाम्ने
त्वा धामभ्यस्त्वा धामसु सीद । सनिरसि सन्यै त्वा सने-

यम् । वित्तिरसि वित्त्यै त्वा विदेयम् । शक्तिरसि शक्त्यै त्वा शकेयम् । भूतिरसि भूत्यै त्वा भूयासम् । कर्मासि कर्मणे त्वा क्रियासम् । गूर्दोऽसि गूर्दाय त्वा गूर्देभ्यस्त्वा गूर्दे सीद । क्षत्रं पाहि क्षत्रं पिन्व क्षत्रं जिन्व क्षत्रं यच्छ क्षत्रं दृꣳह क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद । विश्वेषु त्वा पार्थिवेषु सादयामि । विश्वेषु त्वाऽन्तरिक्षेषु सादयामि । विश्वेषु त्वा दिव्येषु सादयामि । विश्वेषु त्वा देवेषु सादयामि । विश्वासु त्वाऽप्सु सादयामि । विश्वासु त्वौषधीषु सादयामि । विश्वेषु त्वा वनस्पतिषु सादयामि । विश्वासु त्वा दिक्षु सादयामि । दिवि सीद । स्वर्जिदसि पृतनाजिदसि भूरिजिदस्यभिजिदसि विश्वजिदसि सर्वजिदसि सत्राजिदसि धनजिदसि भ्राडसि विभ्राडसि प्रभ्राडसि । सपत्नहनं त्वा वज्रꣳ सादयामि । अभिमातिहनं त्वा वज्रꣳ सादयामि । अरातिहनं त्वा वज्रꣳ सादयामि । यातुहनं त्वा वज्रꣳ सादयामि । पिशाचहनं त्वा वज्रꣳ सादयामि । रक्षोहणं त्वा वज्रꣳ सादयामि । शत्रुहणममित्रहणं भ्रातृव्यहणमसुरहणं त्वेन्द्रं वज्रꣳ सादयामि । उद्वदस्युदितिरस्युत्रत्यस्याक्रममाणाऽस्याक्रामन्त्यस्याक्रान्तिरसि संक्रममाणाऽसि संक्रामन्त्यसि संक्रान्तिरसि स्वर्ग्याऽसि स्वरसि । इषि सीदोर्जि सीद भगे सीद द्रविणे सीद सुभूते सीद पृथिव्या यज्ञिये सीद विष्णोः पृष्ठे सीदेडायाः पदे सीद घृतवति सीद पिन्वमाने सीद । संवत्सरे सीद परिवत्सरे सीदेदा(डा)वत्सरे सीदेदुवत्सरे सीदेद्वत्सरे सीद वत्सरे सीद । एकस्याँ सीद दशसु सीद शते सीद सहस्रे सीदायुते सीद नियुते सीद प्रयुते सीदार्बुदे सीद न्यर्बुदे सीद समुद्रे सीद मध्ये सीद पद्मे सीदान्ते सीद परार्धे सीद । पिन्वमानाऽसि पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा पिन्वमाने सीद । ऋतमस्यृताय त्वर्तेभ्यस्त्वर्ते सीद । सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद । संधिरसि

संधये त्वा संधिभ्यस्त्वा संधिषु सीद । सर्श्लिडसि सर्श्लिषे त्वा सर्श्लिड्भ्यस्त्वा सर्श्लिट्सु सीद । संपदसि संपदे त्वा संपद्भ्यस्त्वा संपत्सु सीदेत्येताभ्यामनुवाकाभ्यामृषीष्टका उपदधाति ॥ ४ ॥

मृदिष्टका यथावकाशम्—अद्भ्यः संभृत इति च । ऋतसदसीति सप्त, सनिरसीति पञ्च, गूर्द इति षष्ठः । क्षत्रं पाहीति षट् । विश्वेषु त्वा पार्थिवेषु सादयामीति दिवि सीदेत्येवमन्ता दश । स्वर्विदसीत्येवमाद्याः प्रभ्राडसीत्येवमन्ता एकादश । सपत्नहनामित्याद्या वज्राः सप्त । उद्वदसीत्येकादश । इषि सीदेति दश । संवत्सरे सीदेति षट् संवत्सराः । एकस्याऽ सीदेति च दश । पिन्वमानाऽसीति षट् संपदन्ताः । ये तु सादनं न प्रवदन्ति ते अनुवाकाः शाखान्तरे । ये तु सादनं प्रवदन्ति तेषामनुवाकपरिमाणं नोक्तम् । सर्वा एता ऋषीष्टका इत्युच्यन्ते । केचित्त्वाहुः—अनुवाका एव ऋषीष्टका इति । प्रथमाचित्यर्थास्त्वेते तस्य मन्त्राणां मध्य आम्नानात् । प्रथमस्य त्वग्ने ऋषीष्टका उपधाय लोकंपृणाः । त एव प्राणभृतो गणप्रभृतय इति । न च गणभेदो युक्तः, बौधायनमतान्मन्त्रलिङ्गाच्च यदेकधोपदध्यात् , इति । केचित्तु द्विप्रस्तारे प्रथमेऽप्यग्नौ प्राणभृदादीनामुपधानं कृत्वा, ऋषभस्य च पुरी(षान्त)षोपधानं कुर्वन्ति । पुरीषान्ता चितिरिति वचनात् । पश्चाच्च द्वितीयां चितिम् । तस्मिन्नेव प्रस्तारे पुरीषान्तां कुर्यादिति । एवं तु सूत्रकाराभिप्रायः । द्विसाहस्रे द्विप्रस्ताराश्चितयो भवन्तीति न साहस्रे । केचित्तु ऋषीष्टकाः परित्यज्याधिकविधिरनित्य इति । अयं पुरो भुव इत्येव कुर्वन्ति प्रथमे प्यग्नौ । तथाऽपि गणभेदो जायत एवातो द्वितीये तृतीये वाऽग्नौ प्राणभृदादीनामुपयोगः । प्रथमायां चित्यामेव सूत्रकारेणाऽऽम्नानात् ॥ ४ ॥

अयं पुरो भुव इति पञ्चाशतं प्राणभृतः । दश दश प्रतिदिशमक्ष्णया दश । मध्ये बाह्यां बाह्यामुपधायान्तरामन्तरामुपदधाति ॥ ५ ॥

प्राणभृतः, अयं पुरो भुव इति पञ्चाशतमुपदधाति । दश दश तु प्रतिदिशमक्ष्णया वक्रमुपदधाति । दश मध्ये ता अक्ष्णया, अग्नेरभ्यन्तरमुपधाय बाह्याः पश्चादुपदधाति । यद्वा—एतैर्मन्त्रैः साध्यमुपधानमाह—प्राणभृतमुपदधाति ( तै० सं० ९–२–१० ) इत्यादि सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते–अयं पुरो भुव इति पुरस्तादुपदधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात्सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार ( तै० सं० ९–२–१० ) इति ।

एकैकस्यां दिश्युपधेयानामिष्टकानां संख्यां विधत्ते—' दश दशोपदधाति ' ( ५-२-१० ) इति । एकैकं मन्त्रं दशकृत्व आवर्त्य दशेष्टका उपदध्यात् । अत्रोपधाने वक्रत्वं विधत्ते—'अक्ष्णयोपदधाति ' ( ५-२-१० ) इत्यादि । प्रतीच्यामुपक्रम्य प्राच्यामवमाने सत्यार्जवं भवति । नैर्ऋत्यामुपक्रम्यैशान्यां समापनं वक्रत्वम् । एवमितरत्रापि । तदिदमक्ष्णयेत्यनेनोच्यते ।

ननु—' प्राणभृत उपदधाति '( १-४-१८ ) इत्यत्रापि पूर्ववदेव मन्त्रोपादानमर्थवादार्थं विध्यर्थं वेति विवेक्तव्यम् । निमित्तान्तरकथनार्थं तु सूत्रान्तरम् । तत्र हि भूम्नाशब्दप्रयोगः । इह तु लिङ्गवतामल्पत्वात्तत्समवायमात्रेण शब्दप्रवृत्तिः । प्राणभृद्गणे हि प्राणभृत्समवायोऽस्ति । प्राणभृदप्राणभृद्गणेऽपि प्राणभृत्समवायोऽस्तीत्यनेन सादृश्येन प्राणभृच्छब्दः । तदेवम्—'तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमिभिः । षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता ' ॥ ५ ॥

प्राचीं दिशां वसन्त ऋतूनामिति पञ्चाशतमपानभृतो यथा प्राणभृतोऽन्तरामन्तरामुपधाय बाह्यां बाह्यामुपदधाति ॥ ६ ॥

अपानभृतः प्राचीदिशामित्युपदधाति, यथा प्राणभृतः । प्रतिदिशमक्ष्णया च बाह्यामुपधायाभ्यन्तरोपधीयते । यद्वा—अन्तर्देशे प्राणभृदाख्याः पूर्वोक्ता इष्टका उपधाय बहिर्देशे संयदाख्या इमा अपानभृत इष्टका उपदध्यात् ॥ ६ ॥

प्राणभृद्भ्यो विपरीतप्रकारं विधत्ते—

विषूची प्राणभृतं चापानभृतं चोपदधाति ॥ ७ ॥

यस्मात्प्राणभृतामपानभृतां चान्योन्यविपर्ययक्रमः, तस्माल्लोकेऽपि प्राणापानावन्योन्यविपरीतस्वरूपौ । बहिर्गतिः प्राणोऽन्तर्गतिरपानः ॥ ७ ॥

आयुषः प्राण१ संतन्वित्येतेनानुवाकेन संयत उपदधाति ॥(ख०२३)॥८॥

आयुषः प्राणमिति द्वादश संततीरित्यापस्तम्बः, अनियतदेशाः ॥ ८ ॥

पृथिव्यसि जन्मना वशा साऽग्निं गर्भमधत्ताः(त्थाः) सा मया संभव । द्यौरसि जन्मना वशा साऽऽदित्यं गर्भमधत्ताः(त्थाः) सा मया संभव । नक्षत्राण्यसि जन्मना वशा सा चन्द्रमसं गर्भमधत्ताः(त्थाः) सा मया संभव । आपोऽसि जन्मना वशा सा वरुणं गर्भमधत्ताः(त्थाः) सा मया संभव । औषधोऽसि जन्मना वशा सा सोम१ राजानं गर्भम-

धत्ताः(त्थाः)सा मया संभव । वयोविनिरसि जन्मना वशा (साजरां) सा मह्यं गर्भमधत्ताः(त्थाः) सा मया संभव । विराडसि जन्मना वशा सा राजानं गर्भमधत्ताः(त्थाः)सा मया संभवेत्येतेनानुवाकेन वशेष्टका उपदधाति ॥ ९ ॥

पृथिव्यसीत्यारभ्य सप्त वशाः ; पञ्च वशा इत्यापस्तम्बः ॥ ९ ॥

या देव्यसीष्टक आयुर्दा उपशीवरी । सा मामुपवेशेषु जायेव पतिमित्सदा ॥ या देव्यसीष्टके प्राणदा अपानदा व्यानदाश्चक्षुर्दाः श्रोत्रदाः पृथिविदा अन्तरिक्षदा द्यौर्दाः सुव(स्व)र्दाः कुमारीदाः प्रफर्वीदा युवतिदा उपशीवरी । सा मामुपवेशेषु जायेव पतिमित्सदेत्येतेनानुवाकेनोपशीवरीरुपदधाति ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

अर्थेतः स्थाध्वगतोऽग्नेर्वस्तेजिष्ठेन तेजसा देवताभिर्गृह्णामि । शुक्राः स्थ वीर्यावतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णामि । अधिपत्नीः स्थ तेजस्विनीरादित्यानां वो देवानां देवताभिर्गृह्णामि । मन्द्राः स्थाभिभुवो विश्वेषां देवानां देवताभिर्गृह्णामि । क्षत्रभृतः स्थौजस्विनीर्मित्रावरुणयोर्ब्रह्मणा देवताभिर्गृह्णामि । व्रजक्षितः स्थ ऊर्ध्वश्रितो बृहस्पतेर्वो ब्रह्मणा देवताभिर्गृह्णामीति द्वादश कुम्भेष्टका अद्भिः पूरयित्वा षट्कुम्भान्षट्कुम्भीर्हिरण्यवर्णाः शुचयः पावका इत्येतेनानुवाकेन प्रतिमन्त्रं कुम्भं कुम्भीं च प्रतिदिशमनुसीतमुपदधाति । चतस्रो मध्ये ॥ ११ ॥

अर्थेतः स्थाध्वगत इति ग्रहणमपां कुम्भकुम्भ्योश्च युगपदिति भाष्यकृत् । अपामभिधायका मन्त्रा इति । अशक्तात्वेकैकस्य पूरणमिति न्यायाच्च । कुम्भेष्टकानां द्वे द्वे समानतया देवते । वाजसनेयिनां पाठात्—शर्म च स्थ वर्म च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदतमिति तथा पुरस्तादग्नेरुपदधाति

यथासीतम् । कुम्भमपरतः कुम्भीं पूर्वतः । ज्योतिषे वामिति हिरण्यशल्क(ल्कौ त)योः प्रक्षिपतीत्यापस्तम्बवैखानसौ । युगपत्कुम्भकुम्भ्योश्च द्विवचनत्वान्मन्त्रस्य । एवमनेन प्रकारेण पूरणमुपधानं हिरण्यशल्कक्षेपश्चोत्तरा उत्तरैर्मन्त्रैः प्रतिदिशं तूपधीयन्ते । दक्षिणतो द्वे तथाऽपरत उत्तरतश्च कुम्भो दक्षिणतश्च कुम्भीमुत्तरतोऽनुसीतं च । सर्वत्राधस्तात्पाषाणेष्वेवावस्थानं कुम्भेष्टकानाम्—यदपोऽग्नेरधस्था( स्ता )दुपदधाति ( तै० सं० ५-६-२ ) इति । एवमपरतोऽपि तथैव कुम्भोऽपरतः कुम्भी पूर्वतः । उत्तरतः कुम्भो दक्षिणतः कुम्भी, उत्तरतश्चतस्रस्तु मध्ये ता अनुसीतं द्वे द्वे समानतया देवते, पूर्वदिग्वर्तिनीषु तिसृषु सीतासु कुम्भं कुम्भीं चेति द्वंद्वम् । एवं दिगन्तरेष्वपि । तदिदमुच्यते—‘ द्वंद्वमन्या उपदधाति चतस्रो मध्ये धृत्यै ’ ( तै० सं० ५-६-२ ) इति । द्वादशानां मध्ये दिक्चतुयेऽष्टौ गताः । अथावशिष्टाश्चतस्रो मध्ये स्थापयेत् । तच्च धृत्यै दार्ढ्याय भवति ॥ ११ ॥

दिवि श्रयस्वान्तरिक्षे यतस्वेति बार्हस्पत्यं नैवारं चरुं पयसि शृतं मध्ये कुम्भेष्टकानाम् ॥ १२ ॥

उपदधातीत्यनुवर्तते । दिवि श्रयस्वेत्युपधानं नैवारस्य, बार्हस्पत्यसंकल्पेन लौकिकेऽग्नौ ( नैवारपचनं ) नैवारचरुश्रपणं भवति । गार्हपत्ये पचनमिति भाष्यकृत् । केचित्तु—हिरण्यवर्णा इत्यारभ्य मातर इत्यन्ता द्वादशर्चः कुम्भकुम्भ्योरुपधाने विनियुज्यावशिष्टे द्वे तस्मा अरम्—दिवि श्रयस्वान्तरिक्ष इति च नैवारोपस्थानं कुर्यान्नैवारस्य चरोर्नोपधानमिति व्याचक्षते ॥ १२ ॥

तेजसे वां वर्चसे वां चक्षुषे वां ज्योतिषे वां रेतसे वां प्रजाभ्यो वामिति द्वौ द्वौ हिरण्यशकलावुपास्यति ॥ १३ ॥

तेजसे वामिति हिरण्यशक(लौ त)योः क्षिपति । युगपत्कुम्भकुम्भ्योश्च द्विवचनत्वान्मन्त्रस्य ॥ १३ ॥

त्वामग्ने वृषभं चेकितानमित्यृषभं हिरण्यशकलं चितौ चितौ प्रास्य चितिमचितिं चिनवदिति चितिक्लृप्त्याऽभिमृशति ॥ (ख० २४) ॥ १४ ॥

त्वामग्ने वृषभमित्यृषभोपधानमुत्क्रमेणापि प्रथमेऽग्नौ क्रियते । चित्यां चित्यामृषभमुपदधाति, इति । लोकंपृणाश्च पूरणार्थाः । लोकं पृण च्छिद्रं पृणेति लिङ्गात् । लोकंपृण ता अस्य सूददोहस इति लोकंपृणाभिश्छादयति सर्वमग्निम् । सर्वान्वर्णानिष्टकानां ( करोति )कुर्यादिति श्रुतिः । न श्वेतपीतादीन्वर्णान्निदधाति । लेखा वर्णा इत्युच्यन्ते,

श्रुत्यन्तर एवं विहितत्वात् । चितौ हिरण्यं स्थापयित्वा चित्तिमचित्तिमित्यभिमृशति । चितिक्लृप्तिरित्यस्या नामधेयम् ॥ १४ ॥

यत्तेऽचितं यदु चितं ते अग्ने यदूनं यद्वाऽत्राति-
रिक्तम् । विश्वे देवा अङ्गिरसश्चिन्वन्नादित्यास्ते
चितिमापूरयन्तु ॥ यास्ते अग्ने समिधः ॥ चित्ति-
मचित्तिम् । वयमग्ने धनवन्तः स्यामालं यज्ञायोत
दक्षिणायै । ग्रावा वदेदभि सोमस्यांशुनेन्द्रं शिक्षे-
मेन्दुना सुतेन ॥ रायस्पोषं नो धेहि जातवेद ऊर्जो
भागं मधुमत्सूनृतावत् । दधाम यज्ञं सुनवाम सोमं
यज्ञेन त्वामुपशिक्षेम शक्र ॥ ईशानं त्वा शुश्रुमो
वयं धनानां धनपते गोमदग्ने । अश्वावद्भूरि-
पुष्टं हिरण्यवदन्नमध्येहि मह्यम् ॥ दुहां ते द्यौः
पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु । प्रजाप-
तिनाऽऽत्मान माप्रीणे रिक्तो म आत्मा । यो रुद्रो
अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना
विवेश तस्मै रुद्राय नमो अस्तु देवा इति सप्तभिः
स्वयंचित्याऽभिमृश्य लोकंपृणाभिः प्रच्छादयति ॥ १५ ॥

यत्तेऽचितमित्यारभ्यैताभिरष्टाभिरभिमृश्य लोकंपृणाभिः प्रच्छादयति सर्वमग्निम् ॥ १५ ॥

द्वाभ्यां द्वाभ्यां मन्त्राभ्यामेकैकां लोकंपृणामुपदधाति ॥ १६ ॥
पूर्वयोपधाय सूददोहसाऽभिमृशति ॥ १७ ॥

चित्तिमचित्तिमित्यभिमृश्य यत्तेऽचितमित्यारभ्यैताभिरभिमृशत्यष्टाभिः ॥ १६ ॥ १७ ॥

सर्वास्विष्टकासु तया देवतमन्ततो दधाति ॥ १८ ॥

इष्टकोपधानेषु मन्त्रान्ते तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इत्यन्तः ॥ १८ ॥

कृष्णोऽश्वः श्यावो वोत्तरतस्तिष्ठति । तमा-
लभ्य चात्वालात्पुरीषमाहृत्य पृष्ठो दिवीत्य-
नुव्यूहति ॥ १९ ॥ सा चितिर्भवति ॥ २० ॥

उत्तरत उत्तरतोऽग्नेस्तिष्ठति कृष्णोऽश्व उपधानादारभ्य, श्वेतो वा । तमुपस्पृश्य चात्वालात्पुरीषमाहृत्य वैश्वानर्यर्चा पुरीषमनुव्यूहति, नैवमुपदधाति । वैश्वानर्यर्चा पुरी-

षमुपदधाति, इति श्रुतिः । पुरीषान्ता श्रु(चि)तिर्भवति । प्रत्यवरोहणं वाङ्म आस-न्नित्युक्त्वा ॥ १९ ॥ २० ॥

यो अप्स्वन्तराग्नियों वृत्रे यः पुरुषे यो अश्मनि । य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । यः हुतादमग्निं यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः । यो देवानां देवतमस्त्व(स्त)पोजास्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । पृष्टो दिवीत्येषा । यः सोमो अन्तर्यो गोष्वन्तर्वयांसि य आविवेश यो मृगेषु । य आ विवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । येनेन्द्रस्य रथः(थाः) संबभूवुर्यो वैश्वानर उत वैश्वदेव्यः ॥ धीरो यः शु(श)क्रः भ(प)रि भूरिदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । उक्षान्नाय वशान्नायेति षड्भिश्चितिं चितिमुपधायाभि जुहोति ॥ २१ ॥

यो अप्स्वन्तराग्निरिति षड्भिश्चितिं चितिमुपधाय पुरीषान्तामुपरि जुहोति । सर्वत्राग्निर्देवता । चितावेव हिरण्यं निधाय तस्य जुहुयादित्येके ॥ २१ ॥

एवमेतान्यत ऊर्ध्वमृषभप्रभृतीनि सर्वेषु चित्यन्ते समानानि क्रियन्ते ॥ २२ ॥

सर्वेषु वक्ष्यमाणचित्यन्तेषु चर्षभप्रभृतीनि कर्माणि समानान्येव ॥ २२ ॥

आग्नेय्या गायत्रिया प्रथमां चितिमभिमृशेत् । त्रिष्टुभा द्वितीयाम् । जगत्या तृतीयाम् । अनुष्टुभा चतुर्थीम् । पङ्क्त्या पञ्चमीम् । सर्वासां धामच्छद्द्वितीया । अग्ने भूरीणि तव जातवेद इति धामच्छत् । अग्ने देवाः इहाऽऽवह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः । अगन्म महा मनसा यविष्ठं योदीदाय समिद्धः स्वे दुरोणे । चित्रभानू रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् । त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नरो नान्यं त्वत् । मनुष्वत्त्वा निधी-

महि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान्देवायते यज । अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवꣳ स प्रीतो याति वाऽऽर्यमिषꣳ स्तोतृभ्य आभरेत्येता आम्नाता भवन्ति ॥ २३ ॥

अग्ने भूरीणीति सप्तभिर्जुहोतीत्यापस्तम्बः । उपस्थानं करोति चितेरिति वैखानसः । आग्नेय्या गायत्र्या प्रथमां चितिमभिमृशेत् , इति ब्राह्मणोक्तम् । अग्निर्यस्या देवता गायत्र्या प्रथमां चितिमेतया होमे कृतेऽभिमृशति । त्रिष्टुभाऽभिमृशति द्वितीयाम् । जगत्या तृतीयाम् । अनुष्टुभाऽभिमृशति चतुर्थीम् । पङ्क्त्याऽभिमृशति पञ्चमीम् । अग्ने भूरीणीति धामच्छत् । अग्ने देवाꣳ इहाऽऽवह इत्येवमाद्या आग्नेय्या गायत्र्या प्रथमां चितिमभिमृशेत् । तस्मिन्नाम्नाये शाखान्तर आम्नाताः पङ्क्त्यन्ताः ॥ २३ ॥

षडुपसदः ॥ २४ ॥

उपसदोऽग्निसंयोगेन षड्भवन्ति । सोमाङ्गमपि सत्यं चित्यसंयोगे षड्भवन्ति ॥ २४ ॥

अनुपसदमग्निं चिनोति । अन्वहमेकैका चितिर्द्व्यहमुत्तमा चितिः ॥ २५ ॥

द्व्यहं द्व्यहमेकैकेनोपसन्मन्त्रेण जुहोति । अनुपसदमग्निं चिनोति द्व्यहम् । उत्तमा चितिः, ( आप० श्रौ० १६–१०–२३ ) इत्यापस्तम्बः । उपसदमनु अनुपसदम् । उपसदि समाप्तायामग्निं चिनोति, प्रवर्ग्यः पश्चात् । उपसदो न लभ्यन्त इति भाष्यकृत् । उपसदमेवं कृत्वाऽग्निं चिनोतीति सूत्रकाराभिप्रायः । द्व्यहमुत्तमा चितिः [ इति ] द्वाभ्यां परिसमाप्यते ॥ २५ ॥

त्रीणि चतुस्तनानि व्रतानि भवन्ति । एवं त्रिस्तनानि द्विस्तनान्येकस्तनानि ॥ २६ ॥

व्रतानि त्रीणि चतुस्तनानि क्रयदिवसस्य रात्र्या व्रतानि भवन्ति । एवं त्रीणि त्रिस्तनानि त्रीणि द्विस्तनानि व्रतान्यग्नीषोमीयदिन एकस्तनम् ॥ २६ ॥

आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य यदक्रन्दः प्रथमं जायमान इति श्वेतमश्वं प्रदक्षिणं परिणीय वसन्ति वसन्ति ॥ (ख० २५) ॥ २७ ॥

इति सत्याषाढहिरण्यकेशिसूत्र एकादशप्रश्नेऽष्टमः पटलः ॥ ८ ॥

इति सत्याषाढसूत्र एकादशप्रश्नः ॥ ११ ॥

अपराह्णे भवे आपराह्णिक्यौ ताभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य श्वेतमश्वं प्रदक्षिणीकृत्य चितेः प्रागुदग्वाऽऽरभ्यते प्रदक्षिणं कृत्वा वसन्ति विरमन्ति कर्मणः । भाष्यकारस्तु मध्यरात्रे व्रतप्रदाने कृतेऽश्वपरिणयनान्तं कृत्वा वसन्तीति व्याचष्टे । केचित्तु वसत्यङ्गं परिणयनमित्याहुः । तस्मात्पञ्चम्यां चितौ न परिणयनम् । वसत्यङ्गं तु तत्परिणयनं, तत्प्रकरणत्वात्तस्मात्पञ्चम्यामपि क्रियते । अभ्यासः प्रश्नपरिसमाप्त्यर्थः ॥ २७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामेकादशप्रश्नेऽष्टमः पटलः ॥ ८ ॥

इति हिरण्यकेशिसूत्रव्याख्यामेकादशप्रश्नः समाप्तः ॥ ११ ॥

अथ द्वादशप्रश्ने प्रथमः पटलः ।

**सर्वासु चितिषु प्रवर्ग्योपसदावादितः पौर्वाह्णिक्यावुपरिष्टादापराह्णिक्यौ प्रवर्ग्योपसच्चितिहोमोऽश्वपरिणयनं च व्याख्यातम् । श्वोभूते द्वितीयां चितिं चिनोति ॥ १ ॥**

श्वोभूते श्वः प्रभाते पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य । प्रवर्ग्यश्चोपसच्च प्रवर्ग्योपसदौ ताभ्यां प्रचर्य सुब्रह्मण्यान्ते द्वितीयां चितिं चिनोति । यदि प्रथमस्याश्चितेरिष्टकाः संसादयति, इति कृतं तदा चितौ चितौ प्रणयनम् । उत्तरवेद्यभिमर्शनं तु सकृत् । अग्न्यङ्गत्वात्तथाऽऽत्मन्यग्निग्रहणं स्वयंचित्याऽभिमर्शनं शालामुखीयहोमः, अग्न्यर्थत्वात् सकृदेव । इष्टका उपधास्यञ्श्वेतमश्वमभिमृशेत्पुरीषमुपधास्यन्कृष्णम् । इति चितौ चितौ पुरीषान्ता चितिरिति चित्यङ्गत्वादश्वाभिमर्शनं, तस्याः सर्वत्राऽऽरोहणं जपतीति वचनादेतदपि चितौ चितौ । [पक्षे]यदा तु तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिष इति कृतः पक्षस्तदा न पुनः प्रणयनम् । अश्वावभितः स्थापितौ कृष्ण उत्तरतः श्वेतो दक्षिणतस्तदा श्वेतमालभ्य ॥ १ ॥

**ध्रुवक्षितिर्ध्रुवयोनिरिति पञ्चाऽऽश्विनीरुप दधाति । चतस्रः प्रतिदिशमेकां मध्ये ॥ २ ॥**

अश्विदेवयुक्तैर्मन्त्रैरुपधेया इष्टका आश्विन्यः । आश्विनीरुपदधाति ( तै० सं० ५–३–१ ) इति विधेराश्विनीरिष्टका उपदध्यात् । संख्यां विधत्ते–'पञ्चोपदधाति' ( ५–३–१ ) इत्यादि । पञ्च पूर्वार्धेऽग्नेः ॥ २ ॥

**सजूरृतुभिरिति पञ्चर्तव्या आश्विनीरुपदधाति ॥ ३ ॥**

आश्विनीनां पश्चात्—सजूर्ऋतुभिरिति पञ्चर्तव्या उपदधाति । आस्वृतव्यासु ना(अ)वकाम् । 'द्वंद्वमन्या उपदधाति चतस्रो मध्ये धृत्यै' इत्यवकामनूपदधातीत्यधिकारात् । यद्वा—एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—ऋतव्या उपदधाति ( ५–३–१ ) इत्यादि । वसन्तादीनामृतूनां स्वस्वव्यापारसामर्थ्यायैतदुपधानम् । इष्टकासंख्यां विधत्ते—'पञ्चोपदधाति' ( तै० सं० ५–३–१ ) इत्यादि । हेमन्तशिशिरयोः समासेनर्तूनां पञ्चत्वम् ॥ ३ ॥

अनुपरिहारꣳ सादयति प्राणं मे पाह्यपानं मे पाहीति पञ्च वायव्या ऋतव्या अनूपदधाति वायोर्याऽन्यसि देवानां वायो याऽन्यसीति द्वे संयान्ये । शुक्रश्च शुचिश्चेति द्वे ऋतव्ये ॥ समानतया देवते भवतः ॥ ४ ॥

प्राणं मे पाहीत्यृतव्यानां पश्चात्पञ्च प्राणभृतः । ( अपस्पिन्वेति पञ्चापस्या इत्यापस्तम्बः । ) अनुपरिहृत्य चाग्निमित्येकैकया प्रतिदिशमुपदधाति, इति श्रुतेः । भरद्वाजस्य तु यदेकधोपदध्यादिति तस्याः श्रुतेरयमर्थस्तेन विकल्पितः । संयान्यौ च द्वे वायोर्याऽन्यसि, इति । शुक्रश्च शुचिश्चेति द्वे ऋतव्ये अवकोपधानं च पूर्ववत् ॥ ४ ॥

अपस्पिन्वेति पञ्चापस्या वायव्या अनूपदधाति । अनुपरिहारꣳ सादयति । विष्टम्भो वय इति चतस्रः । मूर्धन्वतीः पुरस्तादुपदधाति ॥ ५ ॥

अपस्पिन्वेत्यपस्याः पञ्च, वायव्या दिशि उपधानम् । विष्टम्भो वय इति चतस्रो वयस्याः, पुरस्तादारभ्य प्रत्यगपवर्गा इति भाष्यकृत् । मूर्धन्शब्दोपेतैर्मन्त्रैरुपधेया इष्टका मूर्धन्वत्यः । यस्मात्पूर्वस्यां दिश्युपधेया मूर्धन्शब्दोपेतमन्त्रसाध्यास्तस्मात्पक्ष्याकारेण चीयमानस्याग्नेरपि मूर्धा पूर्वस्यां दिशि भवतीति भाष्ये विस्तरः ॥ ५ ॥

त्र्यविर्वय इति पञ्च दक्षिणतो वयस्विनीः । पष्ठवाद्वय इति पञ्च पश्चाद्द्वेऽनुमतीर्बस्तो वय इति पञ्चोत्तरतः सिꣳहवतीः । अपि वा बस्तो वय इति दक्षिणेऽꣳस उपदधाति । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति । सिꣳहो वय इत्युत्तरे । पुरुषो वय इति मध्ये ॥ ६ ॥

त्र्यविर्वय इति पञ्चाग्नेर्दक्षिणस्याꣳ श्रोण्याम् । उत्तरस्यां—पष्ठवाद्वय इति ताः पञ्च । बस्तो वय इत्येकां दक्षिणेऽꣳसे । वृष्णिर्वय इत्युत्तरेऽꣳसे । व्याघ्रो वय इत्येकां दक्षिणे पक्षे । सिꣳहो वय इत्युत्तरे । पुरुषो वय इति मध्ये ॥ ६ ॥

ऋषभप्रभृतिव्याख्याताश्चित्यन्तः ॥ ७ ॥

त्वामग्ने वृषभमित्यृषभादि समानं चित्यन्तम् । त्रिष्टुभा द्वितीयामिति तु विशेषः । आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्याश्वपरिणयनमित्येवमन्तं चित्यन्तम् ॥ ७ ॥

श्वोभूते तृतीयां चितिं चिनोति ॥ ( ख०१ ) ॥ ८ ॥

श्वः प्रभाते पौर्वाह्णिकीभ्यां प्रचर्य सुब्रह्मण्यान्तं विधाय तृतीयां चितिं श्वेतमश्वमभिमृश्य वाङ्म आसन्निति चोक्त्वा ॥ ८ ॥

इन्द्राग्नी अव्यथमाना इति स्वयमातृण्णामभिमृश्याश्वेनावघ्राप्य विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीमिति मध्येऽग्नेराविदुषा ब्राह्मणेन सहोपदधाति । भुव इति चैतया व्याहृत्या ॥ ९ ॥

इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णां प्रणीतामभिमृश्य । इतरथा तु तृतीयस्याश्चितेरिष्टकाप्रणयनादि । अश्वेन तां स्वयमातृण्णामवघ्राप्य चितिस्थ एव–विश्वकर्मा त्वा सादयत्वित्येवमादि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद भुव इत्येवमन्तेन मन्त्रेणोपदधाति ॥ ९ ॥

चित्तिं जुहोमीति स्वयमातृण्णायाः हुत्वाऽनुव्यनित्यविद्वान्ब्राह्मणो वरं ददाति ॥ १० ॥

चित्तिं जुहोमीति जुह्वा स्वयमातृण्णायां च हुत्वाऽव्या(नुव्य)ननं निरुच्छ्वासेनावस्थानं वरदानं साम गायेति प्रैषः । ऊर्ध्वजानुश्चोपदधाति ॥ १० ॥

ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहीति हिरण्येष्टकाम् । अधि द्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तार इति मण्डलेष्टकाम् । अनुरेतः सिचो विवयस उपदधाति । विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् । अन्तरिक्षस्य यान्यसि देवानामन्तरिक्ष यान्यसीति द्वे संयान्यौ ॥ ११ ॥

ज्योतिरसीति हिरण्येष्टकाम् । अधि द्यौरिति मण्डलेष्टकाः । सर्वा रेतःसिचो मध्यमे (ध्ये वि) वयसः । विश्वकर्मा त्वा सादयत्विति प्रणीतानामेका विश्वज्योतिः । अन्तरिक्षस्य यान्यसीति द्वे संयान्यौ ॥ ११ ॥

नभश्च नभस्यश्चेषश्चोर्जश्चेति चतस्र ऋतव्या द्वे द्वे समानतया देवते भवतः ॥ १२ ॥

नभश्च नभस्यश्चेत्यृतव्याश्चतस्रः, द्वे द्वे समानतया देवते । अवकोपधानं च, द्वे द्वे उपदधाति । केचित्तु-चतस्र उ(सृणामु)पधानं कुर्वन्ति, इति ॥ १२ ॥

**राज्ञ्यसि प्राची दिगिति पञ्च दिश्याः । चतस्रः प्रतिदिशमेकां मध्ये ॥ १३ ॥**

दिक्शब्दोपेतैर्मन्त्रैरुपधेया इष्टका दिश्याः । प्रतिदिशमेकां मध्ये पुरस्तादारभ्य । राज्ञ्यसि प्राची दिगिति पञ्च दिश्या उपदधाति (५ ।३।२)इति श्रुतेश्च ॥ १३ ॥

**आयुर्मे पाहीति दश वैराजीः पुरस्तादुपधाय ॥ १४ ॥**

पुरस्तादग्नेः । ताश्च ब्राह्मणे सूत्रान्तरे च—दश प्राणभृतः पुरस्तादुप दधाति, इत्याद्या द्रष्टव्याः । प्राणशब्दोपेतान्मन्त्रानुपधानकाले बिभ्रतीति प्राणभृतः । अत्रैव चरममन्त्रे ज्योतिःशब्दं प्रशंसति—'ज्योतिष्मतीमुत्तमामुपदधाति' (तै० सं ५–३–२) इति । ज्योतिःशब्दयुक्तेन मन्त्रेणोपधातव्येष्टका ज्योतिष्मती । चरमा सैवोत्तमा भवतीति भाष्यकारोक्तेः ॥ १४ ॥

**षट्त्रिꣳशतं बृहतीरुपदधाति । मा छन्द इति द्वादश दक्षिणतः । पृथिवी छन्द इति द्वादश पश्चात् । अग्निर्देवतेति द्वादशोत्तरतः ॥ १५ ॥**

यथा बृहती छन्दसां मध्ये प्रशस्ता, एवं बृहत्याख्या इष्टका अपि प्राशस्ता इति भाष्यकृत् । बृहतीः षट्त्रिꣳशतमुपदधाति दक्षिणतोऽग्नेरारभ्य पश्चादुत्तरतश्च । ता एता इष्टका दिग्विशेषु विधत्ते—मा छन्द इति दक्षिणत उपदधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयाजी जयति (तै० सं० ५–३–२) इति । मन्त्रपाठप्राप्तामिष्टकासंख्यां विधत्ते—षट्त्रिꣳशत्संपद्यन्ते (तै० सं० ५–३–२) इत्यादि ॥ १५ ॥

**मूर्धाऽसि राडिति सप्त वालखिल्याः पुरस्तात्प्रतीचीरुपदधाति । यन्त्री राडिति सप्त पश्चात्प्राचीः॥१६॥**

सप्त वालखिल्याः पुरस्तादारभ्य प्रत्यगपवर्गाः । सप्त पश्चादारभ्य प्रागपवर्गाः । यद्वा—वालखिल्यनामकैर्मुनिभिरादौ दृष्टत्वादिष्टका अपि वालखिल्याख्याः । इष्टकागतया सप्तसंख्यया शीर्षण्यच्छिद्रसाम्यं, पुरस्तादेकं सप्तकं पश्चादेकं सप्तकमिति सप्तकयोर्द्वित्वादधोदेशवर्तिच्छिद्रद्वयसाम्यम् । सप्तकद्वये मन्त्रविभागं विधत्ते—मूर्धाऽसि राडिति पुरस्तादुपदधाति, यन्त्री राडिति पश्चात् (तै० सं० ५–३–२) इति ॥ १६ ॥

**पृथिव्यै स्वाहेति द्वादश भूतेष्टकाः ॥ १७ ॥**

भूतेष्टका द्वादश, शाखान्तरपठिताः ॥ १७ ॥

प्राच्या त्वा दिशा सादयामीति पञ्चाऽऽत्मेष्टका-
श्चतस्रः प्रदिशमेकां मध्ये ॥ ( ख०२ ) ॥ १८ ॥

गतार्थः ॥ १८ ॥

इन्द्रो दधीचो अस्थभिरित्येतेनानुवाकेनाथर्वशिरो
दशातिष(रि)क्ता इष्टका उपदधाति ॥ १९ ॥

दशातिष(तिरि)क्ताः शिरस्युपदधाति ॥ १९ ॥

ऋषभप्रभृत्तिव्याख्यातश्चित्यन्तः ॥ २० ॥

ऋषभाद्यश्वपरिणयनान्तं चित्यन्तं पूर्ववत् । विशेषस्तु तृतीयस्याश्चितेरभिमर्शनं जगत्या ॥ २० ॥

श्वोभूते चतुर्थीं चितिं चिनोति ॥ २१ ॥

श्वोभूते पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां सुब्रह्मण्यन्ताभ्यां प्रचर्य चतुर्थीं चिनोति चितिम् । अश्वालम्भं कृत्वा वाङ्म आसन्निति जपः । इतरथा तु तस्याश्चितेरिष्टकाप्रणयनादि ॥ २१ ॥

आशुस्त्रिवृदग्नेर्भागोऽसीत्येताभ्यामनुवाकाभ्यां
यथाब्राह्मणमुपदधाति ॥ २२ ॥

यथा ब्राह्मण उक्तं तथोपधानं पुरस्ताद्दक्षिणतः पश्चादुत्तरतश्च । प्रथमानुवाके चत्वारः पर्यायाः । द्वितीयानुवाके त्रयः । आशुर्व्योम धरुणो भान्तः प्रतूर्तिरभिवर्तो वर्चस्तपो योनिर्गर्भो ओजः संभरणः क्रतुर्ब्रध्नस्य प्रतिष्ठा नाकः, अग्नेर्नृचक्षसां मित्रस्येन्द्रस्य वसूनामादित्यानामदित्यै देवस्य धर्त्रो यावानामभूणां विवर्त इति । अत्र विनियोगसंग्रहकारस्त्वेवम्—

आशुरष्टादशाऽऽदध्याद्दक्षिणया स्तोमसंयुताः ।
अग्नेः शिष्टा दशाऽऽदध्याद्दक्षिणया स्तोमसंज्ञकाः ॥ २२ ॥

अन्तरिक्षमन्तरिक्षाय त्वेति द्वे संयान्यौ ॥ २३ ॥

यत्संयानीर्यत्संयनीरुपदधाति, इति ब्राह्मणम् ॥ २३ ॥

सहश्च सहस्यश्चेति द्वे ऋतव्ये । समानं तया
देवते भवतः ॥ २४ ॥

स्पष्टोऽर्थः ॥ २४ ॥

एकयाऽस्तुवतेति सप्तदश सृष्टीः ॥ २५ ॥

सृजतिधातुयुक्तैर्मन्त्रैरुपधेया इष्टकाः सृष्टयः । सृष्टीरुपदधातीत्यर्थः ॥ ननु—सृष्टीरुपदधाति (जै० सू० १–४–१७) इति सृष्टिशब्दो गुणविधिरुतार्थवाद इति संशयः ।

तत्राऽऽख्यातसंबन्धाद्विध्यन्तरैकवाक्यत्वाभावादर्थवत्त्वाच्च विधिः । सृष्टिलिङ्गा मन्त्रा उपधानार्थत्वेन विधीयन्ते । मैवम् । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वान्न विधिर्मन्त्राणां संभवति । तथा सति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानादन्ये परिसंख्यायेरन् । सा च त्रिदोषा, परिसंख्यातानां च मन्त्रान्तराणामानर्थक्यं स्यात् । तस्मादुपधानमेवात्र विधेयम् । सृष्टीरिति तु लिङ्गप्राप्तमन्त्रानुवादमात्रं यथा सृष्टमेवावरुन्धे (तै० सं० ५–३–४) इत्यस्यार्थवादस्योपपत्त्यर्थमिति भाष्याभिप्रायः । केचित्तु–मन्त्रविधिमेव समर्थयन्ते । न ह्येकयाऽस्तुवत (तै० सं० ४–३–१०) इत्येवमादीनामुपधान ऐकान्तिकं लिङ्गमस्ति येन प्राप्तिः स्यात् । साधारणलिङ्गत्वाद्धि ग्रहणासादनादिष्वपीष्टकानां प्राप्नुयुः, तत्रास्ति विधेरवकाशः । सत्यामप्युपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवद्भविष्यति । वक्ष्यति हि— ' मध्यमायां तु वचनाद्ब्राह्मणवत्य ' इति । न चास्मिन्सूत्रे सृष्टीनां विधानमवश्यमादर्तव्यम् । गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः, भूमा । सृष्टिसमुदाये हि भूमाऽस्ति । सृष्टचमृष्टिसमुदायेऽपि । ' एकयाऽस्तुवत ' ( तै० सं० ४–३–१० ) इत्यनुवाके सृष्टिभूमाऽस्ति, इत्यनेन सादृश्येन सृष्टिशब्दः ॥ २५ ॥

**इयमेव सा या प्रथमा व्यौच्छदिति पञ्चदश व्युष्टीः ॥ २६ ॥**

विशेषेणोच्छति तमो विनाशयतीति व्युष्टिरुषःकालस्तद्वाचकशब्देनोपेतैर्मन्त्रैरुपधेया इष्टका व्युष्टयः । ता उपदध्यादित्यर्थः ॥ २६ ॥

**अग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्तादुपदधाति । सहसा जातानिति पश्चात् । चतुश्चत्वारिंशः स्तोम इति दक्षिणतः । षोडशः स्तोम इत्युत्तरतः ॥ २७ ॥**

पश्चादुपदधातीत्यनुवर्तते । एतन्मन्त्रसाध्यमुपधानं विधत्ते —' अग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्तादुपदधाति । सहसा जातानिति पश्चात् , चतुश्चत्वारिंशः स्तोम इति दक्षिणतः, षोडशः स्तोम इत्युत्तरतः ' ( तै० सं० ५–३–५ ) इत्यादि ॥ २७ ॥

**इष्टकायां पुरीषमध्यू( ध्यु )ह्य पृथिव्याः पुरीषमस्यप्सो नामेति मध्येऽग्नेः पुरीषवतीमुपदधाति ॥ २८ ॥**

एतन्मन्त्रसाध्यमुपधानं विधत्ते—'पुरीषवतीं मध्य उपदधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते ' ( तै० सं० ५–३–५ ) इति । पुरीषमध्यू( ध्यु )ह्य तस्यो-

पर्युपधीयमानत्वात्पुरीषवती । पुरीषं वा, आत्मनो गवादिशरीरस्य मध्यमुदरमध्ये वर्तमानत्वात् । अतः पुरीषवत्त्वेन सात्मानं शरीरसहितमेवाग्निं चिनुत इत्यर्थः ॥ २८ ॥

**ऋषभप्रभृतिभ्या( भ्यां )ख्यातश्चित्यन्तः ॥ २९ ॥**

ऋषभादिश्चित्यन्तः । अश्वपरिणयनान्तं पूर्ववत् । अनुष्टुभाऽभिमृश्यते चतुर्थी चितिः ॥ २९ ॥

**श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चमीं चितिं चिनोति ॥३०॥**

श्वोभूते श्वः प्रभाते पौर्वाह्णिकीभ्यां प्रचर्य सुब्रह्मण्यान्ते पञ्चमी चितिः । श्वेतमश्वमभिमृश्य वाङ्म आसन्निति जपित्वा, इतरथा पञ्चम्याश्चितेरिष्टकाप्रणयनादि ( समानम् ) ॥ ३० ॥

**एवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं विराजो दश दश प्रतिदिशमक्ष्णया ॥ ३१ ॥**

उत्तमायां पञ्चम्यां चितौ विराडाख्या इष्टका उपदध्यादिति शेषः । विराजस्तु— ' उत्तमायां चित्यामुपदधाति विराजमेवोत्तमाम् ' ( तै० सं० ९-३-९ ) इति ब्राह्मणे द्रष्टव्यः । एकैकस्यां दिशीष्टकासंख्यां विधत्ते—'दश दशोपदधाति ' ( ९–३–९ ) इति । सम्यक्पङ्क्तिरूपत्वं वारयितुं वक्रत्वं विधत्ते—'अक्ष्णयोपदधाति ' ( तै० सं० ९–३–९ ) इति ॥ ३१ ॥

**रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येकत्रिंशतं स्तोमभागाः सप्त सप्त प्रतिदिशं तिस्रो मध्ये ॥ ३२ ॥**

रश्मिरित्यादयः स्तोमभागाः । एतैर्मन्त्रैरुपधेया इष्टका अपि स्तोमभागाः । उपदधाति, इति सामान्येन विहितं पुनर्विशेषाकारेण प्रशंसति--'सप्त सप्तोपदधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै ' ( तै० सं० ९–३–९ ) इति । एकैकस्यां दिशि सप्तसप्तोपधानेन सवीर्यत्वं दार्ढ्यं भवति । मध्ये तिसृणामुपधानेन प्रतिष्ठा स्थैर्यं भवतीत्यर्थः ॥ ३२ ॥

**राज्ञ(ज्य)सि प्राची दिगिति पञ्च नाकसदश्चतस्रः प्रतिदिशमेकां ( मध्ये । ) पश्चात्प्राचीमुत्तमामुपधायायं पुरो हरिकेश इति नाकसत्सु पञ्च चोडा उपदधाति । ता उपधाय वृत्तां चितिं चिनोति ॥ ३३ ॥**

नाकः स्वर्गः सद्यते प्राप्यते यैर्मन्त्रैस्ते नाकसदः । तथा च मन्त्रलिङ्गम्—'नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु ' ( तै० सं० ४-४-२ ) इति । एतैर्मन्त्रैरुपधेया इष्टका अपि नाकसदः । अर्धेन तु ध्यायन्द्रेष्यम्, तत्र चाऽऽपस्तम्बः सूत्रयामास—' द्वेष्यं मनसा ध्यायन्पश्चात्प्राचीमुत्तमाम् ' ( आप० श्रौ० १७-१-४-९ ) इति । पञ्चमेन कृतास्तासु पुरीषं क्षिप्त्वा तूष्णीम्, अयं पुरो हरिकेश इति पञ्च चोडास्तासामुपर्युपधाने या तु प्रतीच्या सा तु पश्चादुपधीयते । अयं पश्चाद्विश्वव्यचा, इत्युपदधाति । पञ्च चोडा द्वेष्यं मनसा ध्यायति जम्भे दधामि देवदत्तमिति । यद्वा—चुड संवरण इत्यस्माद्धातोरुत्पन्नश्चोडाशब्दः । नाकसदामुपरि च्छिद्रावरणार्थत्वादेता इष्टकाश्चोडा इत्युच्यन्ते । पञ्चसंख्याकाश्चोडाः पञ्चचोडा उपदधातीत्यर्थः । उपधानकाले ध्यानविशेषं विधत्ते—'यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आवृश्चति ताजगार्तिमार्च्छति ' ( तै० सं० ५-३-७ ) इति । यजमानो यं पुरुषं द्विष्यात्तं द्वेष्यमध्वर्युरुपधानं कुर्वन्ध्यायेत् । तेन ध्यानेनैताभ्य एवाऽग्निसेनान्यादिभ्यो देवताभ्य एनं द्वेष्यमावृश्चति सर्वतो विच्छिन्नं करोति । ताजगार्तिमार्छति तदानीमेव मरणं प्राप्नोति । नाकसदामुपरि पञ्चचोडोपधानं विधत्ते—उत्तरा नाकसद्भ्य उपदधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत्, ( तै० सं० ५-३-७ ) इति । गृहस्थानीया नाकसदो जायास्थानीयाः पञ्च चोडाः । तत्रायं पश्चादिति तृतीयमन्त्रेणोपधेया येयमिष्टका तस्याश्चरमत्वं विधत्ते—' पश्चात्प्राचीमुत्तमामुपदधाति तस्मात्पश्चात्प्राची पत्न्यन्वास्ते ' ( तै० सं० ५-३-७ ) इति । यस्मात्पश्चिमायां दिशि प्राङ्मुखत्वेनोपधेयामिष्टकां चरमत्वेनोपधत्ते, तस्मात्पश्चिमायां दिश्यवस्थाय प्राङ्मुखी पत्नी गार्हपत्यमुपविशतीत्यर्थः ॥ ३३ ॥

**तपश्च तपस्यश्चेति द्वे ऋतव्ये समानतया**
**देवते भवतः ॥ ( ख० ३ ) ॥ ३४ ॥**

भाष्यकारस्तु—वसन्तेनैवास्य पूर्वार्धमचिनुत, इति प्रथमे पूर्वार्धेऽग्नेरुपधीयते, दक्षिणे पक्षे द्वितीये—'ग्रीष्मेण दक्षिणं पक्षम् ' इति । पुच्छे तृतीये—'वर्षाभिः पुच्छम् ' इति पुच्छसमीपे द्वे । 'शरदोत्तरं पक्षम् ' इति चोत्तरपक्षसमीपे । हेमन्तेन मध्यमिति हेमन्तशिशिरनामधेये इष्टके मध्ये इति व्याचष्टे । अत्रोपधान—अनुग्रह—अप्युक्तं ( नेऽनुक्रमोऽप्युक्तः ) । वैखानसेन तु यथावकाशम्, इति ॥ ३४ ॥

**देवानां यान्यासि देवानां देवयान्यसीति द्वे**
**संयान्यौ ॥ ३५ ॥**

गतार्थः ॥ ३९ ॥

प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मती-
मिति विश्वज्योतिषम् । अत्र रेतःसिचः स्थविर-
स्योपदधाति ॥ ३६ ॥ द्यौरपराजिताऽमृतेन विष्टाऽऽ
दित्यास्ते गोप्तार इति मण्डलेष्टकाम् । सुवरसि
सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीति हिरण्ये-
ष्टकाम् ॥ ३७ ॥

अथवाऽन्यः क्रमः—पञ्चचोडान्ता उपधाय देवानां यान्यसीति संयान्यौ, तपश्च तपस्यश्चेत्यृतव्ये, प्रजापतिस्त्वा सादयतु दिवः पृष्ठ इति विश्वज्योतिः स्वराड्ज्योतिरिति रेतःसिक् । सुवरसीति हिरण्येष्टका द्यौरपराजितेति मण्डलेष्टका प्रोथदश्व इति विकर्णी परमेष्ठी त्वा सादयतु दिव इति स्वयमातृण्णा, इत्यापस्तम्बसूत्रे, एष वा क्रमो भवत्युपधानस्य ॥ ३६ ॥ ३७ ॥

आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य यदक्रन्दः
प्रथमं जायमान इति श्वेतमश्वं प्रदक्षिणं परिणीय
वसन्ति ॥ ३८ ॥

गतम् ॥ ३८ ॥

औदुम्बरीस्तिस्रः समिधः प्रादेशमात्रीर्घृते वासयति ॥ ३९ ॥

औदुम्बरीः समिधो घृते क्षिपति ॥ ३९ ॥

श्वोभूत उत्तमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य
पञ्चम्याश्चितेः शेषं याज्ञसेनीं चितिं चिनोति ॥ ४० ॥

श्वोभूते श्वःप्रभाते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चम्याश्चितेः शेषं द्व्यहमुत्तमा चितिः, इत्युक्तम् । चित्रनामकस्य कस्यचित्पुरुषस्य वंशे समुत्पन्नो यज्ञसेननामकस्तेन दृष्टा चितिर्याज्ञसेनी तां चिनोतीत्यर्थः ॥ ४० ॥

अग्निर्मूर्धेति तिस्रो गायत्रीर्मूर्धन्वतीः पुरस्तादुप-
दधाति । उत्तरतस्त्रिष्टुभस्तिस्रो दक्षिणा उत्तरा
जगतीस्तिस्रः पश्चादुत्तरा अनुष्टुभस्तिस्र उत्तरतो
बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि
च्छन्दांसि यथावकाशमुपदधाति ॥ ४१ ॥
अत्रैवातिच्छन्दसमुपदधाति । द्विपदामुत्तमामुप-
धाय ॥ ४२ ॥

अग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधात्येवमुत्तराण्यपि च्छन्दांसि त्रीणि त्रीण्युप-

दशातीत्यापस्तम्बवैखानसौ । त्रिष्टुभो दक्षिणतोऽग्नेः । जगतीः पश्चादनुष्टुभ उत्तरतः । बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरित्येतानि बृहत्यादीनि यथावकाशं त्रीणि त्रीण्येव स्युः । अधिका या अक्षरपङ्क्तिः सा विकल्पार्था । अतिच्छन्दस्तु मध्येऽग्नेः—अग्निं होतारमिति । द्विपदास्त्वन्ततः पुच्छे तासां तु नेष्यते कर्मकाले द्विपदासु नेष्यत इति च्छन्दोविचितिवचनात् ॥ ४१ ॥ ४२ ॥

आयोस्त्वा सदने सादयामीति स्वयमातृण्णामभिमृश्याश्वेनावघ्राप्य परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीमिति मध्येऽग्नेरविदुषा ब्राह्मणेन सहोपदधाति । सुवरित्येतया व्याहृत्या । चित्तिं जुहोमीति स्वयमातृण्णायां हुत्वाऽपानिति । प्रोथदश्वो न यवसे अविष्यन्नित्युत्तरेऽंसे विकर्णीमुपदधाति । स्वयमातृण्णा च विकर्णी च नान्याभिरिष्टकाभिरभ्युपदधाति ॥ ४३ ॥ ४४ ॥

आयोस्त्वा सदने सादयामीति प्रणीताः स्वयमातृण्णा अभिमृश्य श्वेतेनाश्वेन चावघ्राप्य, आरूढ एवावघ्रापणं करोतीत्येके, नीत्वाऽश्वसमीपं, परमेष्ठी त्वा सादयतु दिवः पृष्ठ इत्यविदुषा ब्राह्मणेन सहोपदध्यात् । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद सुवरित्यन्तेन मन्त्रेण, चित्तिं जुहोमीति तस्यां हुत्वाऽपाननमूर्ध्वं श्वासवायुर्नीयते । वरदानं सामगानप्रैषश्च, स्थिते नोपधानं ताभ्याम् । प्रोथदश्व इति विकर्णीमुत्तरेंऽस उपदधाति । ते त्विष्टके स्वयमातृण्णा विकर्णी च तयोरुपरि नान्यामिष्टकामुपदधाति ॥ ४३ ॥ ४४ ॥

अग्ने गोभिर्न आगहीत्येतेनानुवाकेन गोचितिमुपदधाति । सहस्रं पादमात्रीरिष्टकाः ॥ ४५ ॥ ता मध्यमायां चित्यां चित्यां पशुकाम उपदधाति ॥ ( ख० ४ ) ॥ ४६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने प्रथमः पटलः ॥ १ ॥

अग्ने गोभिर्न आगहीत्यनुवाकेन प्रतिमन्त्रमुपदधाति, यावत्सहस्रमपहित(मुपधान)मिति पुनः पुनरभ्यस्यतेऽनुवाकः । पूर्णे सहस्रमधिका ऋचस्त्यज्येरन् । अयं विधिः सहस्राग्निसंख्याधिकं यथा न भवति तथेति । अन्यत्र सहस्रात्प्रथमां तामुक्त्वा, द्विसाहस्रादिषु पशुकामस्य यजमानस्य । गोचितिरित्यस्या नामधेयम् । योऽग्निश्चीयते तस्य

पादमात्रीः, ताः प्रथमायां मध्यमायां पञ्चम्यां वा समाप्तायां, न पुरीषमुपदध्यादित्यर्थः । ॥ ४९ ॥ ४६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकायां द्वादशप्रश्ने प्रथमः पटलः ॥ १ ॥

अथ द्वादशप्रश्ने द्वितीयः पटलः ॥

**इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीत्यष्टौ सयुजः ॥ १ ॥**

देवताभिः सहाग्निं योजयन्तीति सयुजो मन्त्राः । तैर्मन्त्रैरुपधेया इष्टका अपि सयुजः । यत्सयुज उपदधाति ( तै० सं० ५–३–९ ) इत्यादिदर्शनात् ॥ १ ॥

**अम्बा नामासीति सप्त कृत्तिकाः ॥ २ ॥**

असमानेन सप्त कृत्तिकाः ॥ २ ॥

**पुरो वातसनिरसीति पञ्च वृष्टिसनीरनुपरिहारꣳ सादयति ॥ ३ ॥**

वृष्टिसनिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका वृष्टिसनयः । एकामिष्टकां हस्ते धृत्वा चयनक्षेत्रं प्रदक्षिणीकृत्योपदध्यात् । एवं पञ्चानुपरिहारं प्रतिदिशमेकां च मध्ये । ‘ यदेकधोपदध्यादेकमृतुं वर्षेत् ’ ( तै० सं० ५–३–९ ) इत्येकप्रयत्नोपधानं वारयितुमनुक्रमेण परितो हृत्वा हृत्वा तदुपधानं विदधाति भगवती श्रुतिः ॥ ३ ॥

**सलिलाय त्वा सर्णीकाय त्वेत्यष्टावादित्येष्टकाः ॥ ४ ॥**

आदित्यशब्दोपेतैर्मन्त्रैरुपधेया इष्टका आदित्येष्टकाः ॥ ४ ॥

**ऋचे त्वा रुचे त्वेति पञ्च घृतेष्टका अनुपरिहारꣳ सादयति ॥ ५ ॥**

घृतपिण्डा एव घृतेष्टकाः । अमृन्मयीष्विष्टकासु सूत्रकारेण परिगणितत्वात् । तत्रापि पूर्ववदेकैकस्या इष्टकायाः प्रदक्षिणावृत्तिपूर्वकत्वं विधत्ते ‘अनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिस्तेजो दधाति ’ ( तै० सं० ५-३–१० ) इति ॥ ५ ॥

**यशोदां त्वा यशसि सादयामीति पञ्च यशोदाः ॥ ६ ॥**

असमासेनोपदध्यात् । ‘ यशोदा उपदधाति ’ ( ५–३–१० ) इत्यादिब्राह्मणम् ॥ ६ ॥

**भूयस्कृदसि वरिवस्कृदसीति पञ्च भूयस्कृतः ॥ ७ ॥**

भूयो बाहुल्यं करोतीति भूयस्कृत् । ताः पञ्चोपदध्यादित्यर्थः ॥ ७ ॥

अप्सुषदसि श्येनसदसीति पञ्चाग्निरूपाणि ॥ ८ ॥

अग्निरूपवाचिभिर्मन्त्रैरुपधेयत्वादिष्टका अप्यग्निरूपाणीत्येवोच्यन्ते । 'अप्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपꣳ रूपेणैवाग्निमवरुन्धे' (तै० सं० ५-३-१०) इति । अग्न्याकारवाचिनां पदानां पाठेन योगरूपेण युक्तमग्निमेव प्राप्नोतीत्यर्थः ॥ ८ ॥

पृथिव्यास्त्वा द्रविणे सादयामीति पञ्च द्रविणोदाः ॥ ९ ॥

द्रविणोदाः पञ्च । द्रविणोदाशब्दयुक्तैर्मन्त्रैरुपधेयत्वाद्द्रविणोदा इत्यासां नाम ॥९॥

प्राणं मे पाह्यपानं मे पाहीति षडायुष्याः ॥ १० ॥

आयुष्याः षट् । आयुःशब्दोपेतैर्मन्त्रैरुपधेयत्वादेता इष्टका आयुष्याः ॥ १० ॥

अग्ने यत्ते परꣳ हृन्नामेत्यग्नेर्हृदयम् ॥ ११ ॥

अग्ने यत्ते परꣳ हृन्नामेत्येका । मध्य उपदध्याद्धृदयसाम्यादिति भावः ॥ ११ ॥

या वा अयावा इति सप्तर्तव्याः ॥ १२ ॥

एतद्यावादिशब्दानामृतुसंबन्धित्वात्तैरुपधेया इष्टका अप्यृतव्या इत्युच्यन्ते ॥ १२ ॥

अग्निना विश्वाषाडित्येतेनानुवाकेनेन्द्रतनूरुपदधाति ॥ १३ ॥

इन्द्रतनवो द्वाविंशतिः । विश्वाषाडित्यादिशब्दा इन्द्रतनूविशेषवाचकास्तद्युक्तैर्मन्त्रैरुपधेया इष्टका इन्द्रतनवः ॥ १३ ॥

अभीषाच्चाभिषवी चाभिवयाश्चोर्ध्ववयाश्च बृहद्वयाश्च सवयाश्च सह्वाꣳश्च सहमानश्च सहस्वाꣳश्च सहीयाꣳश्चेत्येतेनानुवाकेनेन्द्रनामान्युपदधाति ॥१४॥

अभीषाच्चेति दशेन्द्रनामानि ॥ १४ ॥

प्रजापतिर्मनसाऽश्वोऽच्छेत इति त्रयस्त्रिꣳशतं यज्ञतनूः ॥ १५ ॥

यज्ञतनुप्रतिपादकशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका यज्ञतनवः ॥ १५ ॥

ज्योतिष्मतीं त्वा सादयामीति द्वादश ज्योतिष्मतीः ॥ १६ ॥

ज्योतिष्मतीशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका ज्योतिष्मत्यः । ते च मन्त्रा आरण्यकाण्डे समाम्नाताः ॥ १६ ॥

रोहितेषु त्वा जीमूतेषु सादयामि । अरुणेषु त्वा जीमूतेषु सादयामि । सितेषु त्वा जीमूतेषु सादयामि । नीलेषु त्वा जीमूतेषु सादयामि । कृष्णेषु त्वा जीमूतेषु सादयामीति पञ्च जीमूताः ॥ १७ ॥

पञ्च जीमूता असमासेन ॥ १७ ॥

कृत्तिका नक्षत्रमित्येतेनानुवाकेनासꣳस्पृष्टा नक्षत्रेष्टका उपदधाति ॥ १८ ॥

नक्षत्रशब्दोपेतैर्मन्त्रैरुपधेया इष्टका नक्षत्रेष्टकाः ॥ १८ ॥

अग्ने रुचः स्थेति सर्वास्वनुषजति ॥ १९ ॥

अग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्येति प्रथमायामेव । सर्वास्वनुषङ्गः, इति प्रत्यक्षवचनादस्मत्सूत्रे सूत्रान्तरे वा ॥ १९ ॥

पूर्णा पश्चादिति पुरस्तात्पौर्णमासीमुपधाय पूर्वां पूर्वामुपधायापरामपरामुपदधाति । आ विशाखाभ्याम् । यत्ते देवा अदधुरिति पश्चादमावास्यायामुपधायापरामपरामुपधाय पूर्वां पूर्वामुपदधात्याऽपभरणीभ्योऽन्ततः ॥ २० ॥

पूर्णा पश्चादिति पौर्णमासीं पुरस्तादग्नेरुपदधाति । कृत्तिका नक्षत्रमिति नक्षत्रेष्टकाः पुरस्तादारभ्य प्रत्यगपवर्गा असंस्पृष्टाश्च परस्परम् । पूर्वामुपधाय कृत्तिका नक्षत्रमिति ज्योतिषे त्वेत्यन्तेन । एवमपरामपरामा विशाखाभ्याम् । दक्षिणेन स्वयमातृण्णाया यथा रीतिर्भवति तथा करोति । यत्ते देवा अदधुरिति पश्चादग्नेरपरत उपधायामावास्याम् । अनूराधा नक्षत्रं मित्रो देवतेत्यवशिष्टानां नक्षत्रेष्टकानां पूर्वां पूर्वामाऽपभरणीभ्य उपदधाति । सहाऽपभरणीभिरसमासेन पूर्ववत् ।

यद्वा—अथोपधाने कंचिद्विशेषं विधत्ते—' यत्सꣳस्पृष्टा उपदध्यादवृष्टिश्चै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उपदधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति ' ( तै० सं० ५–३–१ ) इति इष्टकानां परस्परं स्पर्शे सति वृष्टेः स्थानस्याऽऽच्छादितत्वात्पर्जन्यो वृष्टिरहितो भवति । असंस्पर्शे तु तच्छिद्रस्य वृष्टिस्थानत्वान्मेघो वर्षणशीलो भवति । उपधाने विशेषान्तरं विधत्ते—पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीस्तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्यावर्तन्ते (तै०सं०५-४-१) इति । स्वयमातृण्णाया दक्षिणभागे पूर्वां दिशमारभ्य प्रत्यगवसानाः कृत्तिकादिविशाखान्ता इष्टका उपदध्यात् । अनूराधाद्यपभरण्यन्ता इष्टकाः स्वयमातृण्णाया उत्तरभागे प्रतीचीं दिशमारभ्य प्रागवसाना उपदध्यात् । स्वयमातृण्णाया दक्षिणोत्तरभागस्थितयोः पङ्क्त्योर्मध्ये पश्चिमायां दिशि समरूपेणामावास्याख्यामिष्टकामुपदध्यात् । स्वयमातृण्णाया दक्षिणोत्तरभागस्थितयोः पङ्क्त्योर्मध्ये पूर्वस्यां दिशि समरूपेण पौर्णमास्याख्यामिष्टकामुपदध्यात । यस्मादेवं तस्माल्लोकेऽपि नक्षत्राणि गोलकस्यापि दक्षिणे भागे पश्चिमाभिमुखानि, उत्तरभागे तु प्राङ्मुखानीत्येवमावर्तन्ते ॥ २० ॥

---

१ घ. ' सर्वास्वनुषजति ' इति ।

हिरण्यगर्भः समवर्तताग्र इत्यष्टौ सरितः ॥ २१ ॥

हिरण्यगर्भ इत्यष्टौ सरित उपदधातीत्यर्थः ॥ २१ ॥

विश्वकर्मा दिशां पतिरिति पञ्च
हिरण्येष्टकाश्चतस्रः प्रतिदिशमेकां मध्ये ॥ २२ ॥

हिरण्येष्टकाः प्रतिदिशमसमासेन ॥ २२ ॥

प्राणाय त्वा चक्षुषे त्वेति चतस्रः शर्कराः
स्वयमातृण्णाः प्रतिदिशम् । [¹संवत्सरस्य
प्रतिमामिति प्रतिमामत्रैवर्षभ आम्नातः] ॥ २३ ॥

प्राणाय त्वा चक्षुषे त्वा तया देवतया, व्यानाय त्वा चक्षुषे त्वा तया, अपानाय त्वा त्वा तया, वाचे त्वा चक्षुषे त्वा तया, इति चतस्रः स्वयमातृण्णा उपदधाति ॥२३॥

अग्न आयाहि वीतये । अग्निं दूतं वृणीमहे ।
अग्निनाऽग्निः समिध्यते । अग्निर्वृत्राणि
जङ्घनत् । अग्ने स्तोमं मनामहे सिध्रमद्य
दिविस्पृशम् । देवस्य द्रविणस्य व इति
पञ्चाह्नां रूपाणि । [अथ व्रतमुपदधाति] ॥ २४ ॥

शाखान्तरस्थाः पठिताः पञ्चाह्नां रूपाणि । अत्र व्रतमुपदधातीति शाखान्तरोक्तम् । एवमापस्तम्बेऽपि ॥ २४ ॥

शतायुधायेति पञ्चाज्यानीः । इन्द्रस्य वज्रोऽ-
सि वार्त्रघ्न इति चतस्रो वज्रिणीः प्रतिदिशं
( अश्मन इषुहस्त उपदधाति ) पञ्चैके समा-
मनन्ति यो न उपरिष्टादिति मन्त्रं संनमति ॥ २५ ॥

अज्यानिशब्दोपेतैर्मन्त्रैरुपधेया इष्टका अज्यानयस्ता एता उपदध्यात् । वज्रिणीरुपदधाति (तै० सं० ५-७-३) इति ब्राह्मणे विधिर्द्रष्टव्यः । वज्रिणीरश्मनस्ताः प्रतिदिशमुपधीयन्ते । असमासेन यो न उपरिष्टादिति । इषुहस्तेन पञ्चमीति शाखान्तरस्था । उपरिष्टादघायुरभिदासतीति ॥ २५ ॥

अग्ने यशस्विन्यशसे ममर्पयेति चतस्रो राष्ट्र-
भृतः । गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षि-
णतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्ये ।

¹ धनुश्चिह्नान्तर्गतग्रन्थः सूत्रपाठे नास्ति ।

गायत्रीं दक्षिणत उपदधाति । एवमनुपूर्वाः सर्वाः । सर्वत्राग्निर्मूर्धा । भुवो । जनस्य गोपाः । त्वां चित्रश्रवस्तम । अग्ने तमद्याश्वमित्येता आम्नाता भवन्ति ॥ (ख० ६) ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने द्वितीयः पटलः ॥ २ ॥

अग्ने यशस्विन्निति राष्ट्रभृतः पुरस्तादग्नेश्चतस्रः । हिरण्येष्टकाभिः सर्वतोमुखमुपदधाति, इत्यापस्तम्बः । उपधानम्—'यो वा अग्निꣳ सर्वतोमुखं चिनुते' ( तै० सं० ५-७-४ ) इत्युक्तं ब्राह्मणे । गायत्रीमग्निर्मूर्धेति पुरस्तादुपदधाति । त्रिष्टुभं दक्षिणतोऽग्नेर्भुवो यज्ञस्येति । जगतीं पश्चाज्जनस्य गोपाः । अनुष्टुभमुत्तरतस्त्वां चित्रश्रवस्तमेति । पङ्क्तिं मध्ये, अग्ने तमद्याश्वमिति । एष सर्वतोमुखोऽग्निर्हिरण्येष्टकाभिश्चीयते ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्ने द्वितीयः पटलः ।

अथ द्वादशप्रश्ने तृतीयः पटलः ।

सहस्रस्य प्रमा असीति सहस्रेण हिरण्यशल्कैः प्रदक्षिणमनुपरिक्रामन्प्रतिदिशमग्निं प्रोक्षति द्वाभ्यां द्वाभ्याꣳ शताभ्याम् । मध्य उत्तमाभ्यां प्राङ्मुखः ॥ १ ॥

सहस्रस्य प्रमा असीत्येतैर्मन्त्रैर्हिरण्यशल्कैरूर्ध्वस्थितो न वक्रं शताभ्यां द्वाभ्यामेकैकस्यां दिशि प्रोक्षति, आज्यप्रोक्षणवत् । सहस्रस्येति वचनं द्विसाहस्रादिष्वप्यनूहः । सहस्रादीनामपरिमितवाचित्वात् ॥ १ ॥

इमा मे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूः कुरुते ॥ २ ॥

अनेन मन्त्रेण श्रोणयन्ते तिष्ठन्नुत्तरा धेनूर्धेनुम्र्थिनाया एवेष्टकाः कुरुते । यजमानो धेनूः करोतीति वैखानसभरद्वाजौ ॥ २ ॥

ऐडिक्या चित्याऽभिमृशत्यारण्येऽनुवाक्या भवन्ति ॥ ३ ॥

एडिकी चितिः—अग्निरसि वैश्वानरोऽसीत्यनुवाकः । तेनाभिमृशत्यध्वर्युरग्निम् ।

तथा चाऽऽहाऽऽपस्तम्बः—' ऐडिक्या चित्याऽध्वर्युरग्निमभिमृश्य ' इति । तेन धेनुकरणं याजमानं पुनरध्वर्युग्रहणमभिमर्शनार्थमिति ॥ ३ ॥

शतरुद्रीयं जुहोति जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा गवीधुकसक्तुभिर्जर्तिलैः सर्पिषा मृगक्षीरेणाजक्षीरेण वाऽर्कपर्णेनोर्ध्वस्तिष्ठन्नुत्तरार्ध्यायामिष्टकायां नमस्ते रुद्र मन्यव इत्येताननुवाकाꣳस्त्रेधं प्रतिविभज्य प्रथमेनानुवाकेनाशीत्या च जानुदघ्नेऽशीत्यैव नाभिदघ्नेऽशीत्या यच्च प्रागवतानेभ्यस्तेनाऽऽस्यदघ्ने सहस्राणि सहस्रश इत्यसंख्याताꣳदशावतानान् प्रत्यवरोहाञ्जुहोति ॥ ४ ॥ नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने ॥ ५ ॥ असंचरेऽर्कपर्णमुदस्यति ॥ ६ ॥

शतरुद्रीयमिति कर्मनामधेयम् । रुद्रा बहवो यत्रेज्यन्त इति । जर्तिला आरण्यतिलाः । तेषां यवाग्वा । कसर्कै( कुशयवै )र्गवीधुकैर्वाऽऽरण्यतिलैरेव वा गवीधुकसक्तुभिरेव वा कुस ( श ) य [ व ]सर्पिषेति वैखानसः । तच्च जीर्णं घृतमित्येके । अजक्षीरेणाऽऽरण्यानां होममुदङ्मुख उत्तरार्ध्यायामुत्तरस्य पक्षस्योत्तरापरकोणस्तस्मिञ्जुहोति विकर्ण्यां वा । उत्तरेऽंसेऽग्नेः स्वयमातृण्णायां वा तृतीयायां यथाऽग्निर्नाऽऽक्रम्यते तथा बध्यते, न प्रचारः । अनुपरिचारोऽप्रदक्षिणं संततधारया जुहोतीति वैखानसः । अपरिवर्गमेवैनꣳ शमयतीति लिङ्गात् । वाजसनेयिनामपि संतता होतव्येति स्पष्टवचनान्न मन्त्रान्तेन होमः ।

नमस्ते रुद्र मन्यव इति विभागः पदैस्त्रेधा येषामनुवाकानां तेषाꣳसहस्रयोजन इत्येवमन्तास्तिस्र आहुतयः । जानुदघ्नेन नाभिदघ्नेनाऽऽस्यदघ्नेन चोत्तराभिस्तिस्रो नमो रुद्रेभ्यो ये पृथिव्यामित्यादि । आस्यदघ्ने नाभिदघ्ने जानुदघ्ने चैवं हुत्वाऽसमासेन या उत्तमास्ता यजमानं वाचयति, इति । एता एव यजमानो वाच्यते । एष विधिस्तैत्तिरीयाणाम् । अथवा प्रथमान्नमस्त इत्यारभ्य जानुदघ्ने नमस्तक्षभ्यः स्वाहेति जुहोति । सर्वत्र रुद्रा देवताः । रथकारेभ्यश्च व इत्युपक्रम्य नाभिदघ्ने नमः स्वायुधाय च स्वाहेति जुहोति । भाष्यकारस्तु नमः स्वायुधाय च स्वाहेति हुत्वा सुधन्वन इत्युत्तरत्राऽऽरम्भ इति । सुधन्वने चेत्यारभ्याऽऽस्यदघ्ने शेषमन्त्रगणेन प्रागवतानेभ्यः पूर्वमवतानेभ्यस्तासामीशान इत्यास्यदघ्ने हुत्वा सहस्राणि सहस्रश इत्यसमासेन दशावताना हूयन्ते । केचित्तु—एकादशाव-

तानान्ये वनानीति पठन्ति । विकल्पार्थेऽन्वारोहः । नमो रुद्रेभ्यो ये पृथिव्यामित्यसमासेन जानुदघ्ने नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवि, इत्यास्यदघ्ने । एतानेव यजमानं वाचयत्यन्वारोहान् । एतानेव विपरीतान्—नमो रुद्रेभ्यो ये दिवि, इत्यास्यदघ्ने, नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने, नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने, तं वो जम्भे दधामीत्येवमन्तम् ॥

यद्वा—शतरुद्रीयं जुहोति ( तै० सं० ५-४-३ ) इति । शतमित्यपरिमितत्वं लक्ष्यते । अपरिमिता रुद्रा यस्मिन्नध्याये प्रतिपाद्यन्ते सोऽध्यायः शतरुद्रीयः । जर्तिला आरण्यातिलाः । गवीधुका आरण्यगोधूमाः । अथवाऽजक्षीरेण जुहुयात् । अर्चनीयेन पूज्येन प्रवर्ग्यघृतेन तथाविधेनाजारोमसंघातेन चोत्पन्नत्वादस्य स्थावरस्यार्कनाम संपन्नम् । तेनार्कपर्णेन जुहुयात् । तत्र त्रेधा विभाग एव करणीयः—नमस्ते रुद्रेत्यारभ्य सभापतिभ्यश्च वो नम इत्यन्तः प्रथमो भागः । नमो अश्वेभ्य इत्यारभ्यावार्याय चेत्यन्तो द्वितीयो भागः । नमः प्रतरणाय चेत्यारभ्य य एतावन्तश्चेत्यृचा सहितस्तृतीयो भागः । त्रिष्वप्याहुतिषु क्रमेण जानुदघ्नादिदेशेषु स्रुग्धारणं हस्ताभिनयेन व्याख्यातम् । नमो रुद्रेभ्य इत्याद्यस्ता अध्वर्युर्यजमानं वाचयेत् । यत्र पशवो न संचरन्ति तत्रार्कपर्णत्यागः ॥ ४ ॥ ५ ॥ ६ ॥

अर्कपर्णस्य परित्यागदेशमाह—

यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्यः प्रथमः
पशुरभितिष्ठति स आर्तिमार्छति ॥ ( ख० ७) ॥
शतरुद्रीयस्य ब्राह्मणम् ॥ ७ ॥

यं पुरुषं यजमानो द्विष्यात्तस्य पशूनां संचरप्रदेशे तदर्कपर्णं परित्यजेत् । तत्त्यक्तं पर्णं यः पशुः प्रथम इतरेभ्यः पशुभ्यः पूर्वः सन्नभिक्रम्य तिष्ठति स म्रियेत । इदं शतरुद्रीयस्य ब्राह्मणमित्यर्थः ॥ ७ ॥

यो रुद्रो अग्नौ यो अप्सु य ओषधीष्विति रौद्रं गावीधुकं चरुं पयसि शृतं यस्यामिष्टकायाᳪ शतरुद्रीयं जुहोति तस्यां निदधाति ॥ ८ ॥ तिस्रधन्वमयाचितं ब्राह्मणाय दद्यात् ॥ ९ ॥ वसवस्त्वा रुद्रैः पुरस्तात्पान्त्विति प्रदक्षिणमनुपरिक्रामन्प्रतिदिशमाज्येनाग्निं प्रोक्षति ॥ मध्य उत्तमेन प्राङ्मुखो यत्ते रुद्र पुरो धनुरिति प्रदक्षिणमनुपरिक्रामन्प्रतिदिशं नमस्कारैरुपतिष्ठते मध्य उत्तमेन प्राङ्मुखः ॥ १० ॥

यो रुद्रो अग्नाविति रौद्रं रुद्रदेवत्यम् । एतेन यजुषोत्तरापरस्यां स्रक्त्यां इ(गे)ष्टका सैवोपद(सर्वोप)धानस्यान्ते क्रियते चरमायामिष्टकायां निदध्यादिति तस्यां प्रतिष्ठाप्यो गावीधुकश्चरुः । अन्यस्यां वा यस्यां शतरुद्रीयं जुहोति । पाषाणा निखन्यन्ते वाजसनेयिनाम् । जानुदघ्ने उपधाय, तैत्तिरीयाणामप्युपधानं नित्यादि क्रियते, अपामुपस्पर्शने कृते । तिसृभिरिषुभिर्धनुर्ददाति यजमानोऽध्वर्यवे, अयाचितं न कर्मकृतमिति । यत्ते रुद्र पुरो धनुरिति यजमानस्यैवोपस्थानम् ॥ ८ ॥ ९ ॥ १० ॥

उदकुम्भमादायाश्मानमवधायाश्मन्नूर्जामिति त्रिः प्रदक्षिणमग्निं परिषिञ्चन्पर्येति ॥ ११ ॥

अध्वर्युर्गृहीत्वोदकुम्भमश्मन्नूर्जमिति त्रिः प्रदक्षिणं परिषिञ्चन्गच्छति ॥ ११ ॥

निधाय कुम्भं त्रिरपरिषिञ्चन्प्रतिपर्येति । यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य प्राणं प्रक्षिणोमीति दक्षिणस्याꣳ श्रोण्यां कुम्भं प्रक्षिणोति । द्वेष्यस्य नाम गृह्णाति ॥ १२ ॥

निधाय कुम्भं स्थापयित्वा घटम् । अश्मꣳस्ते क्षुदमुमिति नामग्रहणं शत्रोः । देवदत्तं ते शुगृच्छतु यं द्विष्म इति त्रिरेव पुनर्निवर्तते । त्रिः परिषिञ्चन्पर्येति ( तै० सं० ५-४-४ ) इति वचनात् । केचित्तु-कुम्भं पुनर्गृह्णन्ति यद्यभिचरेद्यजमानः प्रतिनिवृत्त्याध्वर्युरिदमहं देवदत्तस्य भार्गवस्याऽऽयुः प्रक्षिणोमीत्यनेन मन्त्रेण दक्षिणस्यां स्रक्त्यामाग्नेयकोण उत्तरे वा कुम्भं भिन्द्यादित्यर्थः ॥ १२ ॥

पृष्ठैरुपतिष्ठते । गायत्रेण पुरस्तात् । बृहद्रथंतराभ्यां पक्षौ । ऋतुस्था यज्ञायज्ञीयेन पुच्छम् । दक्षिणस्याꣳ श्रोण्यां वारवन्तीयं गायत्युत्तरस्यां वामदेव्यमपि पक्षं प्रति प्रजापतेः साम ऋचं गायति ॥ १३ ॥

तां पृष्ठैरुपतिष्ठतेऽध्वर्युः सामादिभिः । तान्यध्वर्युर्गायेदिति वाजसनेयिनः श्रुतेः । छन्दोगानां वा तेषां विधानात् । गायत्रेण साम्ना पुरस्तादुपतिष्ठते रथंतरेण दक्षिणं पक्षं बृहतोत्तरम्, अल्पाच्तरम् ( पा० सू० २-२-३४ ) इति बृहतः पूर्वनिपातः । ऋतुस्था यज्ञायज्ञीयं साम तेन पुच्छं, दक्षिणा या श्रोणी तस्यां वारवन्तीयेनोपस्थानम् । केचिदुत्तरस्यां योऽग्निस्तमुपतिष्ठत इति वर्णयन्ति । वामदेव्यस्य स्थाने तैत्तिरीयकश्रुत्यैत-

---

१ क. ख. सामानृचं ।

मपि दक्षिणस्याऽऽत्मनश्च या परा स्रक्तिः प्रजापतेः साम्ना तत्रोपस्थानं प्रजापतेर्हृद- यम् ॥ १३ ॥

**इष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेऽह भक्षीयेति स्तुतशस्त्रयोर्दोहे यज- मानं वाचयति ॥ १४ ॥**

स्पष्टोऽर्थः ॥ १४ ॥

**पिता मातरिश्वेति संचितोक्थ्येन होताऽऽशꣳसति । होतर्यकामयमानेऽध्वर्युः ॥ १५ ॥**

स्तुतशस्त्रयोर्दोहे यजमानं वाचयतीत्यनुकर्षः । तस्मिंस्तुते स्तुतस्य स्तुतमसीति यज- मानो वाच्यतेऽध्वर्युणा, पिता मातरिश्वेति संचितस्याग्नेर्यच्छस्त्रं तेन होताऽग्नेः पश्चात्स्थितः ( सन् ) शंसति । अकामयमानेऽनिच्छति होतरि शंसनं कर्तुमध्वर्युरेव शंसति । पिता मातरिश्वेत्यारभ्य पादानुतक्षुरिति विरम्य बृहस्पतिरुक्था मदानि × शꣳसिषदित्येतामेव त्रिः । पराचाऽनुशंसतीति वचनात् । अथवा बह्वृचानामेका अङ्गिरश्मि(ग्मि)जन्मना, इत्यनूच्यत इति सकृदेव प्रयोग इति भाष्यकृत् । इदानीं शस्त्रस्य शस्त्रमसीति वाच- यति यजमानम् ॥ १५ ॥

**अत्र धेनुः करणमेके समामनन्ति ॥ (ख० ८) ॥ १६ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने तृतीयः पटलः ॥**

स्पष्टोऽर्थः ॥ १६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकाया द्वादशप्रश्ने तृतीयः पटलः ॥

अथ द्वादशप्रश्ने चतुर्थः पटलः

**अवकां मण्डूकं वेतसशाखां च दीर्घवꣳशे प्रबध्य समुद्रस्य त्वाऽवाकयाग्ने परिव्ययमसीति सप्तभिर- ष्टाभिर्वाऽग्निं विकर्षति ॥ १ ॥**

अवकां शैवालं वेतसस्य वञ्जुलस्य शाखां मण्डूकं च दीर्घेऽपरिमिते वंशे बद्ध्वा पुरुष- मण्डूकेन विकर्षति दीर्घवंशे बद्ध्वेति वैखानसः ॥ समुद्रस्य त्वेति सप्तभिरष्टाभिर्वा ऋग्भिरग्निं विकर्षति विलिखति । अथवा—योऽयं वेतसः सोऽयमपां पुष्पस्थानीयोऽप्सु

---

× 'सिषोनि' ।

जायमानत्वात् । याश्चावकाः शैवालाभिधास्ता अपां शरः सारं दध्नो मण्डमिव । तस्मादेताभ्यामग्निं विकर्षेत् । पूर्वोक्तद्रव्यद्वयेन सह मण्डूकस्यापि विकर्षणसाधनत्वं विधत्ते—'यो वा अग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन विकर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयति' ( तै० सं० ५–४ ·४) इति । गोमहिषाजादीनां मध्ये यः पशुरिमामिष्टकाभिश्चितमग्निं प्रथममधिरुह्य पादेनाऽऽक्रामति तं पशुं संतापेन प्रदग्धुमयमाग्निः प्रभुर्भवति । तस्मात्पश्वन्तरेण विकर्षणं न कुर्यात्किंतु मण्डूकेन कुर्यात् । मण्डूकश्च यागयोग्येषु ग्राम्येष्वारण्येषु च पशुष्वनन्तर्भावाल्लोकेऽपि गोमहिषादिवदुपयोगादर्शनाच्च केनाप्युपजीव्यो न भवति । अतस्तेन विकर्षणे तमेव मण्डूकं संतापेन योजयति ॥ १ ॥

**अनुगमयित्वा मण्डूकस्य प्राणान्संल्लोभ्य सर्वान्त्समुद्धृत्योत्करे न्यस्यति ॥ २ ॥ यं द्विष्यात्तमुपस्पर्शयेत् ॥ ३ ॥**

विकर्षन्नेवानु गमयित्वा मण्डूकस्य प्राणान् प्राणस्थानानि नासिकाद्यादीनि सर्वाणि संल्लोभ्य यथा न ज्ञायन्तेऽङ्गानीयं नासिका इमे अक्षिणीति तथा कुप्यते । उत्करे शेषमुदस्यति । यं द्विष्याद्यजमानस्तमेतैरवकादिभिः स्पृशेत् ॥ २ ॥ ३ ॥

**स्वयं कृण्वानः सुगम [प्र]यावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नꣳ सधस्थमनु पश्यमाना आ तन्तुमग्निर्दिव्यं ततान ॥ त्वं न तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाऽग्ने पृष्ठं वयमारुहेमाथा देवैः (वः)सधमादं मदेम । अतिसर्गं ददतो मानवाय युञ्जु पन्थानमनुपश्यमानाः । अजुषन्त मरुतो यज्ञमेतं वृष्टिं देवानाममृतꣳ स्व(सुव)र्विदम् । आ वर्तमानो भुवनस्य मध्ये प्रजा विकुर्वञ्जनयन्विरूपाः । संवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पान्तु रजसः परस्तात् । प्रजां ददातु परिवत्सरो नो धाता ददातु सुमनस्य मानः । वह्वीः साकं बहुधा विश्वरूपा एकव्रता मामभि संविशन्त्विति पञ्चान्वारोहाञ्जुहोति । (ख०९ )॥ ४ ॥**

जुह्वां पञ्चगृहीतं गृहीत्वा स्वयं कृण्वान इत्यादिचित्येऽग्नावन्वारोहनामकं होमं कुर्यात् । सर्वत्राग्निर्देवता ॥ ४ ॥

पृथिवीमाक्रमिषं प्राणो मा मा हासीदिति
कृष्णाजिनस्योपानहावुपमुञ्चतेऽन्यतरां वा ॥ ५ ॥

कार्ष्णी (र्ष्ण्यौ) कृष्णमृगस्य चर्मणा कृतावुपानहौ लङ्घयति । एकां वा ॥ ५ ॥

अपामिदं न्ययनं नमस्ते हरसे शोचिष इति
द्वाभ्यामग्निमधिक्रामति ॥ ६ ॥

द्वाभ्यामृग्भ्यामग्निमधिरोहति चितिमध्वर्युः ॥ ६ ॥

जुह्वां पञ्चगृहीतं गृहीत्वा नृषदे वडिति पञ्चभि-
रक्ष्णयाऽग्निं व्याघारयति । यथोत्तरवेदिम् । ७ ॥

सुवर्विदे वडित्यन्तः । पञ्चभिर्मन्त्रैरग्निं (ग्नौ)व्याघारणं स्वयमातृण्णायां वेत्यापस्तम्ब-बौधायनौ । उत्तरवेदिवत् । अक्ष्णया विधानं ब्राह्मणे—'नृषदे वडिति व्याघारयति' इत्यारभ्य—'अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै' ( तै० सं० ५-४-५)इति ॥ ७ ॥

ये देवा देवानामिति द्वाभ्यां दध्ना मधुमिश्रेण दर्भ-
गुमुष्टिनाऽग्निमनु परिचारमवोक्षति ॥ ८ ॥

स्नुष्वित्यन्तः । द्वाभ्यामृग्भ्यामनु परिचारं गत्वा प्रदेशमग्नौ व्यवोक्षणं करोति, दध्ना मधुमिश्रेण दर्भाणां च महता मुष्ट्या गृहीत्वाऽग्निं विविधमवोक्षति । गुरुः स्थूलो दर्भमुष्टिर्गुमुष्टिरिति भाष्यकृत् ॥ ८ ॥

कूर्मपृषन्तं कृत्वा प्राणदा अपानदा इति प्रत्यवरोहति ॥ ९ ॥

यथा कूर्मपृष्ठं भवति नानाबिन्दुचित्रितं तथा पृष्ठमध्ये कृत्वा । (ए)कस्य मन्त्रः प्राणदा अपानदा इति । तूष्णीं यजमानः प्रत्यवरोहति ॥ ९ ॥

जुह्वां पञ्चगृहीतं गृहीत्वाऽग्निस्तिग्मेन शोचिषा
सैनाऽनीकेनेति सन्हिताभ्यामग्नयेऽनीकवत
एकामाहुतिं जुहोति ॥ १० ॥

अग्निस्तिग्मेनेति द्वाभ्यामेकाहुतिः, अग्निरनीकवान्देवताज्ञानं कर्माङ्गम् ॥ १० ॥

षोडशगृहीतेन स्रुचं पूरयित्वा य इमा विश्वा
भुवनानि जुह्वदिति सूक्ताभ्यां नाना वैश्वकर्मणा-
नि जुहोति । सर्वाभिर्वा ॥ ११ ॥

षोडशगृहीतेनाऽऽज्येन जुहूं संपूर्य विश्वकर्मा सर्वकर्मा येषां देवता वैश्वकर्मणानि, तानि जुहोति । य इमा विश्वा भुवनानीत्यारभ्य, अपां गर्भं व्यदधात्पुरुत्रा स्वाहेत्येका-

हुतिः । चक्षुषः पितेत्यारभ्य, अयमुग्रो विहव्यो यथाऽसत्स्वाहेति द्वितीयेन सूक्तेन नानासूक्ताभ्यां सूक्तेन सूक्तेनाऽऽहुतिद्वयमित्यर्थः ॥ ११ ॥

अत्रेदं चिन्त्यते— किमयं वैश्वकर्मणहोमः प्रतिमन्त्रं पृथक्कार्यः किंवा सूक्तद्वयं सहोच्चार्य सकृदनुष्ठेय आहोस्विदेकैकं सूक्तमुच्चार्यानुष्ठेय इति । तत्राऽऽद्यं पक्षद्वयं शाखान्तरगतत्वेनाङ्गीकरोति—

यं कामयेत चिरं पाप्मनो निर्मुच्येतेत्येकैकं तस्य जुहुयात् । यं कामयेत ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात् ॥ १२ ॥

एकैकमन्त्रहोमेन शनैः शनैः पापनिर्मोको भवति । सर्वसूक्तहोमेन तु तदानीमेव पापनिर्मोकः । पृथक्सूक्तद्वयेऽपि सामर्थ्यं पृथक्संपादितं भवति । अपि च सूक्तद्वित्वं यजमानस्य प्रतिष्ठायै संपद्यते । तस्मादयमेव पक्षः श्रेयानित्यर्थः ॥ १२ ॥

समुद्राय वयुनाय सिन्धूनां पतये नम इति यद्येनमुदकेऽभिविन्देदञ्जलिनोदकमादायाप्सु जुहुयात् । अयज्ञसंयुक्तः कल्पः ॥ (ख० १०) ॥ १३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

यद्येनं पुरुषमुदके वर्तमानस्य विन्देत भीर्जातिर्जायेतेत्यर्थः । शुचिभूतोदकाञ्जलिमादाय—समुद्राय वयुनायेति तास्वेवाप्सु जुहुयात्, यासु भयमुत्पन्नम् । यथालिङ्गं त्यागः ॥ १३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

अथ द्वादशप्रश्ने पञ्चमः पटलः ।

---

उत्तमाभ्यामापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्योदेनमुत्तरां नयेति तिसृभिर्घृतोषितास्तिस्रः समिध आहवनीयेऽभ्यादधाति ॥ १ ॥

आदधाति प्रक्षिपति । अन्यत्स्पष्टम् ॥ १ ॥

उदु त्वा विश्वे देवा इत्यग्निमुद्यच्छते ॥ २ ॥

इध्मं प्रणयनीयं क्षिप्त्वा सिकताभिश्चोपयम्य, अग्नये प्रणीयमानायेति संप्रैषः । उदु त्वा विश्वे देवा इत्यग्नेरुद्यमनं कृत्वोद्यतहोमः ॥ २ ॥

**पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरिति षड्भिर्हरति ॥ ३ ॥**

जुषन्तामित्यन्तः । प्रथमायां त्रिरनूक्तायां पञ्च दिशो दैवीरिति हरत्याग्नीध्रादिति शेषः । यदाऽपि षड्भिस्तदाऽपि पञ्चम्यावृत्तिः । 'षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति' ( तै० सं० ५-४-६ ) इति ब्राह्मणम् ॥ ३ ॥

**आशुः शिशान इति दक्षिणतो ब्रह्मा दशर्चेनाप्रतिरथेनान्वेति । मैत्रावरुणो ब्राह्मणाच्छꣳसी वा॥४॥**

आशुः शिशान इति दशर्चेन दक्षिणतोऽग्नेः स्थितो ब्रह्माऽनुगच्छति, मैत्रावरुणो वा 'यदाऽप्रतिरथं द्वितीयो होता' ( तै० सं० ५-४-६ ) इति ब्राह्मणाद्ब्रह्मगणस्य द्वितीयो होता ब्राह्मणाच्छंसी । प्रतिप्रस्थाता वेत्यापस्तम्बः ॥ ४ ॥

**विमान एष दिवो मध्य आस्त इति द्वाभ्यामाग्नीध्रेऽश्मानं निदधाति ॥ ५ ॥**

आग्नीध्रो यस्मिन्प्रदेशे भविष्यति( भवेत् )स आग्नीध्र इति तस्मिन्प्रदेशे विमान एष दिव इति द्वाभ्यामश्मानं निदधाति, उपधानार्थं शुभ्रप्रस्तरम् । मध्ये दिवो निहितः पृश्निरश्मेति लिङ्गात् । मध्य उपधानकाले उपधीयते ॥ ५ ॥

**इन्द्रं विश्वा अवीवृधन्निति चतसृभिरा पुच्छादेति ॥ ६ ॥**

आग्नीध्रान्निर्गत्य पुच्छपर्यन्तमेतैर्मन्त्रैर्गच्छेत् । द्वितीया त्वनवसाना ॥ ६ ॥

**प्राचीमनु प्रदिशमिति पञ्चभिरग्निमाक्रमन्ते ॥ ७ ॥**

स्वस्तीत्यन्तः । पञ्चभिरग्निमधिरोहत्यध्वर्युः ॥ ७ ॥

**कृष्णायै श्वेतवत्सायै[1] पयसा दध्ना वौदुम्बरीꣳ स्रुचं पूरयित्वा नक्तोषासा, अग्ने सहस्राक्षेति सꣳहिताभ्याꣳ स्वयमातृण्णायामेकाहुतिं जुहोति ॥ ८ ॥**

अधिरुह्य नक्तोषासाऽग्ने सहस्राक्षेति द्वाभ्यामृग्भ्यां संहिताभ्यां देवा अग्निं धारयन्द्रविणोदा अग्ने सहस्राक्षेत्येवं संहिताभ्याम् । अन्ये त्वाहुः— अवसानं क्रियते नोच्छ्वस्यते, मध्य ऋचोः । दध्नः पूर्णामौदुम्बरीमेताभ्यामृग्भ्यां हूयते स्वयमातृण्णायाम् । अग्निर्देवता । एतन्मन्त्रसाध्यं होमं ब्राह्मणे— 'दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोति' ( तै० सं० ५-४-७ ) इति विदधाति । जुहूसदृशी काचित्स्रुगौदुम्बरी ॥ ८ ॥

**ऊर्णाम्रदन्तं प्रथमः सीद योनिमित्युच्यमाने सुपर्णोऽसि**

---

१ घ. श्वेतवर्णोऽश्मा उप° ।

**गरुत्मान्पृथिव्याः सीदेति तिसृभिः स्वयमातृण्णायामग्निं प्रतिष्ठापयति द्वाभ्यां वा ॥ ९ ॥**

ऊर्णावन्तं प्रथमः सीद योनिमिति होतुः शब्दं श्रुत्वा पाशुकाः संभराः परिध्याद्पोऽनवतीर्ण एव विश्वायुरसीति । यदेतान्त्संभरान्त्संभरति, इति श्रुतेः । अग्नेरधस्तात् क्रियते, अन्यस्मै प्रदायाग्निम । उत्तरवेदिविकारत्वादग्नेः । अग्नेर्भस्मासीति संभरा गुग्गुलसुगन्धितेजनोर्णाः स्तुकाः—सुपर्णोऽसि गरुत्मानिति तिसृभिः स्वयमातृण्णायां संभा(भ)रवत्यां प्रतिष्ठापनमग्नेः सुपर्णोऽसि गरुत्मान् भासाऽन्तरिक्षमा पृण ( इति द्वे ऋचौ वा ), आजुह्वान इति वाऽवसानवती, अनवसाने तु पूर्वे प्रतिष्ठापितेऽग्नावग्नेः पुरीषमसीत्युत्तरत उपयमनी(न्यां)न्युप्य ॥ ९ ॥

**प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति । विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् । शमीमयीं पूर्वामेके समामनन्ति । वैकङ्कतीमुत्तराम् ॥ (ख०११) ॥ १० ॥**

मनुष्व त्वेत्युपसमिन्धनं, समिन्धनार्थत्वात्प्रकृतस्योपसमिन्धनस्य वैकृतमन्त्रेण—प्रेद्धो अग्न इत्यौदुम्बरी, आधीयते । विधेम त इति वैकङ्कती । ताः सवितुरिति शमीमयीम् । शमीमयी पूर्वा वैकङ्कत्युत्तरा च शाखान्तरस्था । केचित्तु —सर्वत्र समिधमादधातीत्यनुवर्तत इति पठन्ति ॥ १० ॥

**अग्ने तमद्याश्वमित्यक्षरपङ्क्त्या जुहोति ॥ ११ ॥**

चित्तिं जुहोमि, अग्ने तमद्याश्वमिति द्वे आहुती हुत्वेत्यापस्तम्बः ॥ ११ ॥

**जुहूं स्रुवं च संमृज्य चतुर्गृहीतेनाष्टगृहीतेन द्वादशगृहीतेन वा स्रुचं पूरयित्वा सप्त त इति पूर्णाहुतिं जुहोति ॥ १२ ॥**

आज्येन चतुर्गृहीतेनाष्टगृहीतेन द्वादशगृहीतेन वा स्रुचं पूरयित्वा प्राकृती पूर्णाहुतिः । अग्निः सप्तवान्देवता । द्वादशगृहीतेनाऽऽज्येन पूर्णां जुहूं तया जुहुयादित्यर्थः ॥ १२ ॥

**तां जुह्वदिह सोऽस्त्विति दिग्भ्योऽग्निं मनसा ध्यायति ॥ १३ ॥**

तां जुह्वद्यो दिक्ष्वग्निरिह सोऽस्त्विति ध्यानम् । ततोऽतिमुक्तीः— अग्निर्यज्ञं नयतु

१ ग. औदुम्बरीं समिधमाधी°

प्रजानन्नित्येवमाद्याः पशुबन्धवत्प्रणयनोपदेशात्तन्मते तु व्याघारणान्तामुत्तरवेदिं कृत्वा पांशुकान्त्संभारान्न्युप्य ति ( ते ) संभारा एवोप्यन्ते, ततः परिधयो लुप्यन्त इति। अत्राप्याहाऽऽपस्तम्बः—आ वेदिप्रोक्षणात्कृत्वा, ( आप० श्रौ० १७-६-१ ) इति। सह वेदिप्रोक्षणेनेत्याभिविधिः। तस्मादाहोत्तरत्र वेद्यास्तरणादि सौमिकं कर्म प्रतिपद्यते, इति। अग्निवत्युत्तरं परिग्राहं परिगृह्णातीति। अनुवीक्षणान्तं कृत्वा शाखामाहृत्य मैत्रावरुण्याः पयस्याया वत्सापकरणम्। अन्तर्वेदि शाखायाः पलाशप्रशातनोपवेषान्तं करोति। गोमयलेपनान्तं कृत्वा कुम्भ्याः प्रोक्ष्य बर्हिस्त्रिर्वेदिमिति प्रोक्षति लौकिकेनोदकेन तूष्णीकेन॥ १३॥

**वैश्वानरीयस्य तन्त्रं प्रक्रमयति। तत्र यावत् क्रियते तद्व्याख्यास्यामः॥ १४॥**

वैश्वानरस्याग्नेस्तन्त्रमङ्गसमुदायं प्रक्रमयत्यारभ्यते कर्तुं बर्हिः प्रस्तरवर्जं यदा ध्रुवा प्रस्तरे साद्यते परिस्तिरणानीध्माघारसमित्प्रथमा प्रयाजानूयाजसमित्, त्रीन्परिधीनेकां समिधं यज्ञायुरनुसंचरानितीध्ममन्त्र इध्मप्रवृश्चनानि निदधाति। १४॥

**वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीः स्तीर्त्वा यथार्थं पात्राणि प्रयुनक्ति॥ १५॥**

वेदं कृत्वा समूहन्त्यग्न्यागारमायतनोपलेपनादि क्रियते पूर्वमकृतमिति। अग्नीन्परिस्तीर्य पाणिप्रक्षालनादिकर्म प्रतिपद्यते कर्तुम्। यथार्थं पात्राणि न दर्शपूर्णमासवत्सर्वाणि प्रयुनक्तीत्यर्थः॥ १५॥

**न प्रणीताः प्रणयति॥ १६॥**

विमोकाद्यभावात्॥ १६॥

**निर्वपणकाले वैश्वानरं द्वादशकपालं निरुप्य सप्त मारुतान्त्सप्तकपालान्निर्वपति॥ १७॥**

अग्नेर्वैश्वानरस्य द्वादश कपालानि मारुतानां सप्तकपालमिति। केचित्तु—सर्वाण्यपराणि प्राशित्रहरणेडापात्रमन्वाहार्यस्थालीवर्जानि पूर्वाणीति। निर्वपणकाले प्राप्ते—अग्नेर्वैश्वानरस्य निर्वापं कृत्वा सप्त मारुताः सप्तकपालास्तस्मिंश्च शूर्पे पृथक्॥ १७॥

**तूष्णीमुपचरिता मारुता भवन्ति॥ १८॥**

तूष्णीमुपचरितत्वाद्दार्विहोमा एत इति। अत उपसादनप्रोक्षणादयस्तूष्णीमवहननफलीकरणप्रक्षालनावेक्षणोत्पवनकपालोपधानाधिश्रयणादीनि पृथक्तूष्णीमुपचरितत्वात्॥ १८

**यजुरुत्पूताभिः संयौति। अभिवासित आप्यलेपं निनीय। संप्रैषेण प्रतिपद्यते॥ १९॥ यदन्यादि-**

**ध्माबर्हिषः पत्नीसंनहनाच्च तत्संप्रेष्यति ॥ २० ॥**

पिष्टेषु यजुरुत्पूताभिरद्भिः संयौति । संप्रैषकाले पत्नीवर्जं संप्रेष्यति । नित्यः संप्रैषः । अन्वास्ते तु पत्नी ॥ १९ ॥ २० ॥

**यत्प्रागाज्यग्रहणात्तत्कृत्वा ध्रुवायामेव गृह्णाति ॥ २१ ॥**

आज्यग्रहणकाले ध्रुवायामेव गृह्णाति, प्रयाजानूयाजाभावात् ॥ २१ ॥

**प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्य ध्रुवाᳪ स्रुवं च सादयति ॥ २२ ॥**

प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यत इत्यापस्तम्बोक्तेः प्रकृतिवत्, पुनर्वचनात् । इतरथा तूष्णीकं प्रोक्षित इति न क्रियते वेदिप्रोक्षणम् । तेन निवर्तते । सर्वत्रोपसत्सु स्फुटदर्शनात् । स्तरणकालेऽपरेणाग्निं बर्हिस्तीर्त्वा । एकाऽऽघारसमित् । वीतिहोत्रमिति । सर्वमन्यत्प्रकृतिवत् । ध्रुवां स्रुवं च सादयति प्रस्तरे बर्हिषि वा ॥ २२ ॥

**एषाऽसददिति मन्त्रᳪ संनमति ॥ २३ ॥**

एतावसदतामित्यभिमन्त्रणं ध्रुवायाः स्रुवस्य च ॥ २३ ॥

**विष्णवसि वैष्णवं धाम प्राजापत्यमित्याज्यमभिमन्त्रयते ॥(ख० १२)॥ २४**

विष्णवसीति ध्रौवस्याऽऽज्यस्याभिमन्त्रणम् ॥ २४ ॥

**वैश्वानरमासाद्य मारुतानासादयति ॥ २५ ॥**

कपालवत्पुरोडाशादित्याद्यासन्नाभिमर्शनान्तं प्रकृतिवत् । आग्नेयविकारवत्तूष्णीकं मारुतानाम् ॥ २५ ॥

**उच्चैर्वैश्वानरस्याऽऽश्रावयति ॥ २६ ॥**

इदानीमेव वेदनिधानं वेद्यन्तान्परिस्तरणं होतृषदनपरिकल्पनं च । ततः सामिधेन्यः । उपवा(वी)जनं वेदेन । ध्रौवाघारः । न संप्रेष्यति—अग्नीत्परिधीनिति च । इदानीमपि न संमार्ष्टि परिधीनग्निं च । ततः प्रवरो दैवस्य मानुषस्य च । नापि प्रयाजा इज्यन्ते । न तेभ्य आज्यम् । तत आवाहनप्रतिषेधः क्रियते । प्रचर्य चाऽऽज्यभागाभ्याम् । जुह्वामुपस्तीर्य कृत्स्नं वैश्वानरमवदाय तूष्णीमवदानानि । तत अवदानानीत्यवस्थाभिधेयाभावात् । द्विरभिघारणं चतुरवत्तं जुहोतीति । उच्चैर्मध्यमादपि स्वराद्वैश्वानरस्याऽऽश्रवणं भवति ॥ २६ ॥

**सर्वहुतमपर्यावर्तयञ्जुहोति ॥ २७ ॥**

स्पष्टोऽर्थः ॥ २७ ॥

**ईदृङ्चान्यादृङ्चेत्यासीनो हस्तेनोपांशु मारुतान्स**

वेहुतान्गणेन जुहोति ॥ २८ ॥ पूर्वं पूर्वं गणमनुद्रुत्योत्तरेणोत्तरेण जुहोति ॥ २९ ॥ स्वतवांश्च प्रघा ी च सांतपनश्च गृहमेधी च क्रीडी च साकी चोर्जिषी चेत्युत्तमं गणमनुद्रुत्य प्रथमेन जुहोति ॥ ३० ॥

उपांशु मारुतान् प्रतिनिवृत्य वैश्वानरं हुत्वा हूयन्ते दर्विहोमाः । ईदङ्चेत्यनुद्रुत्य शुक्रज्योतिश्चेति होमः । सर्वत्र मरुतो देवता । शुक्रज्योतिश्चेत्यनुद्रुत्य ऋतजिच्चेति होमः । ऋतजिच्चेत्यनुद्रुत्याऽऽरण्यकेन धुनिश्चेति होमः । धुनिश्चेत्यनुद्रुत्य ऋतश्च सत्यश्चेति होमः । ऋतश्च सत्यश्चेत्यनुद्रुत्य स्वतवांश्चेति होमः । स्वतवांश्चेत्यनुद्रुत्य ईदृक्षास इति होमः । ईदृक्षास इत्यनुद्रुत्य ईदङ्चान्यादङ्चेति होमः । गणेन गणेन वा होमः । तथाऽपि चतुर्थ अरण्योऽनुवाकः । षष्ठश्च स्वतवान् । सर्वतो वा वेष्टयते मारुतैर्वैश्वानरम् । आपस्तम्बे तु स्वतवाँश्चेति षष्ठो मितामश्चेति होम एवा नुषङ्गः । नानुद्रवणो मानुषीश्चानुवर्त्मानो भवन्तु स्वाहेत्यन्तोऽनुषङ्गस्य ।

अथवा— अत्रत्येषु मन्त्रेष्वाम्नाताः पञ्च गणाः । आरण्यकाण्ड आम्नातो धुनिश्च ध्वान्तश्चेत्यपरो गणः । सूत्रान्तरोक्तः स्वतवानित्यादिरेकः । अतो ब्राह्मणे तु सप्त भवन्ति सप्त गणा वै मरुतो गणश एव विशमवरुन्धे ' ( तै० सं० ५-४-७ ) इति पुरोडाशानां संख्या द्रष्टव्या । होमकाले मन्त्रोच्चारे कंचिद्विशेषं विधत्ते—' गणेन गणमनुद्रुत्य जुहोति ' ( तै० सं० ५-४-७ ) इति । यदा प्रथमगणेन हुत्वा द्वितीयगणेन जुहोति तदानीं प्रथमगणमुच्चार्य पश्चाद्द्वितीयगणेन जुहोति । तथा द्वितीयगणमुच्चार्य तृतीयगणेन जुहुयात् ॥ २८ ॥ २९ ॥ ३० ॥

इन्द्रं दैवीर्विशो मरुतोऽनुवर्तमान इति हुत्वोपतिष्ठते ॥ ३१ ॥

यजमान इति शेषः ॥ ३१ ॥

यदि कामयेत विशा क्षत्रꣳ हन्यामिति ग्राम्येऽनुवाक्यस्य गणस्य त्रीणि चत्वारि वा पदान्यनू- ( पादाननू )च्यारण्येऽनुवाक्यस्य शेषेण जुहोति ॥ ३२ ॥ एवं त्रिभिरादितो यथासमाम्नातं ग्रामेऽनुवाक्यस्य यथा पूर्वैरेवं त्रिभिरुत्तरैर्गणैः ॥ ३३ ॥ यदि कामयेत क्षत्रेण विशꣳ हन्यामित्यारण्येऽनुवाक्यस्य पट्सु पदान्तरालेषु षड्गणानोप्य ग्रामेषु वाक्यं जपित्वाऽऽरण्येन वाक्य-

शेषं जुहोति ॥ ३४ ॥ एवं त्रिभिरादितो यथा-
समाम्नातं ग्रामेऽनुवाक्येन यथा पूर्वैरेवं त्रिभिरुत्त-
रैर्गणैः ॥ ३५ ॥

यदि कामयेत यजमानः क्षत्रं क्षत्रिया वैश्येभ्य ओजस्विनः स्युरिति ग्रामेऽनुवाकस्य त्रीणि चत्वारि वा पदान्यर्धपदानि, ईदृङ्चेति पदम् । एवं विधान्यपि पश्चादरण्येऽनुवाक्ये उच्येते, पञ्चमे वाक्य आरभ्य चतुर्थे वा ग्रामेऽनुवाक्य(क)शेषेण होमः । एवमाद्यैस्त्रिभिर्होमं कृत्वा पश्चादरण्येऽनुवाक्ये(के) केवलेन होमः । यथा पूर्वैर्हुतं त्रिभिर्गणैस्त्रीणि चत्वारि वा पदान्यनुद्रुत्येत्येवमादि । एवमुत्तरैस्त्रिभिर्जुहुयात् ।

यदि कामयेत वैश्याः क्षत्रियेभ्य ओजस्विनो भवन्त्विति यथापरिपठितमादितस्त्रिभिर्गणैर्गणेन गणेन हुत्वाऽऽरण्येऽनुवाक्य(क)स्य पट्सु पदान्तरालेषु षड्गणाः क्षिप्यन्ते । धुनिश्च ईदृङ्चेति गण उच्यते । ध्वान्तश्चेत्युक्त्वा शुक्रज्योतिश्चेति ध्वनश्च ऋतजिच्चेत्युच्यते । ध्वनयश्च ऋतश्चेति विलिम्पश्चेत्युक्त्वा स्वतवाँश्चेत्युच्यते । विलिम्पश्चेत्युक्त्वा ईदृक्षास इत्युच्यते । विक्षिप इत्युक्त्वा पुनः केवलेनाऽऽरण्यकेन होमः । यथा पूर्वैर्हुतमेवमुत्तरैरपि होमो गणैः । 'मारुतहोमान्तो वैश्वानर इति भाष्यकृत् । उग्रश्च धुनिश्चेति वैकल्पिकः ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ॥ ३५ ॥

न संप्रेष्यति । न संमार्ष्टि । नानूयाजान्यजति ॥ ३६ ॥

न संप्रेष्यति ब्रह्मन्प्रस्थास्यामः इत्येवमादि । न संमार्ष्टि परिधीनाग्निं च । न यजति चानूयाजान् । अस्मिन्काल आज्यं गृहीत्वाऽनूयाजार्थं प्रतिषिद्धवर्जं सर्वं कर्तव्यमिति न्यायः । आग्नेयविकारत्वाद्वैश्वानरस्य न संप्रेष्यति न संमार्ष्टीति यथाश्रुति पठितं सूत्रकारेण । मारुतान्हुत्वा नारिष्टान्वैश्वानरे हविरिदमिति च । अर्थलोपात्स्विष्टकृदादिचतुर्धाकरणान्तानां लोपः । व्यूहनं वाजवतीभ्याम् । यदि प्रस्तरो ध्रुवार्थं कृतः । ततः प्रकृतिवत्संस्रावान्तम् । यदि तु न कृतो न तदा । प्राक्परिधिप्रहरणात् । सूक्तवाको याज्येति वचनात् । ततः प्रकृतिवत्संस्रावान्तम् । ततः पत्नीसंयाजादि ब्राह्मणभोजनान्तं प्रकृतिवत् ॥ ३६ ॥

यं कामयेत क्षत्रियं प्र स्वादायतनाच्च्यवेतेति
तस्यारण्येऽनुवाक्य(क)स्य गणस्याग्निष्ठं रथवाहनं
वा व्यङ्गयेदित्ययज्ञसंयुक्तः कल्पः ॥ (ख० १३) ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

यं कामयेत राजानं राजशत्रूणां क्षत्रेणास्य स्वेन स्वैरेव क्षत्रिया हन्येरन् । अन्ये यस्माच्च प्रच्यवेत देशान्तरं शत्रुभिर्नीयेतेति तस्यारण्येऽनुवाक्ये(के)नाहोरात्रे त्वोदी-

रयतामित्यग्निप्रवाहणं शकटे यद्येताद्धि रथवाहनं शकटं तदरण्येऽनुवाक्ये(के)न व्यङ्गं करोति । अन्यद्वा किंचिदस्य प्रदेशमिति । अयज्ञसंयुक्तो विधिः सर्वार्थः ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

=====

अथ द्वादशप्रश्ने षष्ठः पटलः ॥

**वसोर्धारां जुहोति । आज्येनौदुम्बर्या स्रुचाऽग्नाविष्णू सजोषसेत्यनुद्रुत्य वाजश्च मे प्रसवश्च म इति संततामा मन्त्रसमापनात् ॥ १ ॥**

वैश्वानरे परिसमाप्तेऽग्नाविष्णू सजोषसेति चतुर्गृहीतं जुहोति । औदुम्बरीᳲ स्रुचं व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा ( आप० श्रौ० १७–६–१७ ) इत्यापस्तम्बः । औदुम्बरी स्रुक्, उदुम्बरेण कृता व्यायाममात्री चतुररत्निः, मृदा प्रलिप्यते यथा न दह्यते पश्चात्तस्या आसेचनं बिलं पश्चिमभागे व्यायामस्य दण्डोऽल्पः, मुखं दीर्घं तां घृतस्य पूरयित्वा पूर्णाहुतिरेका वाजश्च म इत्यारभ्य, वाजशब्द एव धारा संतताऽविच्छिन्ना यावत्सर्वैर्मन्त्रैः समाप्ता । भुवनश्च स्वाहा, अधिपतिश्च स्वाहा, इति मन्त्रे मन्त्रे स्वाहाकारः । वाजश्च मे स्वाहा प्रसवश्च मे स्वाहा इत्येवमन्ताः । अर्धेन्द्राणि जुहोति, द्वादश द्वादशानि जुहोति ( तै० सं० ५–४–८ ) इति च श्रुतेः । भाष्यकारस्तु—अन्त एव स्वाहाकार इति । एतच्च सूत्रकारमतात् । स्वाहेत्यारभ्य संतता धारा इति मीमांसकाः । तथाहि—' संततां वसोर्धारां जुहोतीत्यत्र संततवचनात्तस्य च साहित्यवाचित्वात्साहित्यस्य चानेकापेक्षितत्वात्कर्मणश्चैकत्वात्कर्ममन्त्रयोः साहित्यमिदमुच्यते । अतोऽत्र मन्त्रादेः कर्मादेश्च संनिपातः । स्यादेवं यद्येकं कर्म स्यात्, भिन्नानि त्वत्र द्वादश द्वादशानि जुहोति इति संख्यया कर्माणि तेषामविच्छेदः संततशब्देनोच्यते । जुहोतीति तेषामुपात्तत्वान्न मन्त्रकर्मणोः साहित्यं मन्त्रस्यानुपात्तत्वात् । अविच्छेदेऽपि संततशब्दो वर्तते न केवलं साहित्ये । अतोऽत्रापि पूर्व एव न्यायः ॥ १ ॥

अन्वयव्यतिरेकाभ्यां संतत्यं विधत्ते—

**यं कामयेत प्राणानस्यान्नाद्यं विच्छिन्द्यामिति विग्राहं तस्य जुहुयात् । यं कामयेत प्राणानस्या-**

न्नाद्य९ संतनुयामिति संततां तस्य जुहुयात् ॥२॥

अस्य यजमानस्य प्राणानन्नं च विच्छिन्द्यामित्येवं द्विषन्नध्वर्युरेतं मन्त्रं मध्ये विगृह्य जुहुयात् । यस्तु प्राणानामन्नस्य च सांतत्यं कामयते सोऽयं संततामाहुतिं जुहुयात् । प्रतिषेधार्थमिति न्यायः । अध्वर्युकाम इति भाष्यकृत् ॥ २ ॥

यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पक्त्वा चतुरोऽध्वर्यून्भोजयेत्तेभ्यश्चतस्रो धेनूर्दक्षिणा दद्यात् ॥ ३ ॥ चतुःशरावमोदनं पक्त्वा तद्व्यञ्जनं भोजयाति ॥ ४ ॥

यदाज्यमुच्छिष्येत् स्रुचि तस्मिन्नाज्य ओदनश्चतुःशरावः पच्यते । अथेमं लौकिकेन न्यायेन तं ब्राह्मणाश्चत्वारः प्राश्नीयुरिति पुनरुपदेशाच्चतुर्णां ब्राह्मणानाम् । भाष्यकारस्तु गार्हपत्ये पाक इति । चतुःशरावश्चतुर्मल्लकः । ओदनं पक्त्वा हुतातिरिक्तघृतेन यच्छिष्टं धारयाऽऽहृतं तस्यौदनस्य व्यञ्जनं भवति । यद्यपि ब्राह्मणग्रहणमविशेषं तथाऽपि प्राकृता एवाध्वर्युप्रभृतयो गृह्यन्ते । प्राशितवद्भ्यो भुक्तवद्भ्यश्चतस्रो धेनूर्दद्या‌द् यजमानः । यद्यप्याज्यगृहीतेन व्यञ्जनं भुज्यते तदप्याज्ये श्रप्यते ॥ ३ ॥ ४ ॥

वाजप्रसवीयं जुहोति । सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः । पृथगन्नानि द्रवीकृत्य वाजस्येमं प्रसवः सुषुव इति चतुर्दशभिर्ऋग्भिरौदुम्बरेण स्रुवेणैकैकयर्चाऽन्नमन्नं जुहोति ॥ ५ ॥

वाजप्रसवशब्दो यस्मिन्होमसमुदाये विद्यते स वाजप्रसवीयस्तं जुहोति । सप्त ग्राम्या ओषधयस्तस्मिन्हूयन्ते सप्त चाऽऽरण्याः पूर्वोक्ताः । पृथक्पृथगन्नानि ग्राम्यारण्यानां द्रव्याणामाज्येन कृत्वेति भाष्यकृत् । पच्यमानानि यथा द्रवाणि भवन्ति तथा कर्तव्यमिति न्यायः । केचिदपक्वान्याज्येन द्रवाणि कृत्वा होमं कुर्वन्ति । अपरे तु अपक्वेऽप्यन्नशब्दो विद्यतेऽन्नस्यान्नस्य वपति, इति ब्रुवन्तः । तत्त्वयुक्तं ( भवति ) भविष्यति । तदन्नमिति तस्मिन्नन्नशब्दः । औदुम्बरेण उदुम्बरमयेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति प्रत्यृचं ग्राम्यान् हुत्वाऽऽरण्याञ्जुहोति— वाजो नः सप्त इति ।

केचित्—तिलमाषव्रीहियवप्रियङ्ग्वणवो गोधूमा इति सप्त ग्राम्याः । वेणुश्यामाकाद्य उदाहृता आरण्याः । उभयविधधान्यसमृद्धये चतुर्दशाभिर्होमः । एकैकेन मन्त्रेणैकैकस्य होमं विधत्ते —अन्नस्यान्नस्य जुहोति ( तै० सं० ५-४-९ ) इति । असांकर्येण

तत्तदन्नप्राप्त्यर्थमीदृशो होमः । चोदकप्राप्तां जुहूं बाधितुं साधनान्तरं विधत्ते—औदुम्बरेण स्रुवेण जुहोति ( तै० सं० ५-४-९ ) इति ॥ ५ ॥

पितुं नु स्तोषं महोधर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव । उप नः पितवाचर शिवः शिवाभिरूतिभिः ॥ मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः । तव त्ये पितो रसा रजाꣳस्यनुविष्ठिताः ॥ दिवि वाता इव श्रिताः । तव त्ये पितो ददतस्तव स्वादिष्ठ(ष्ठ)ते पितो ॥ प्रस्वात्या श्रा)नो रथा(सा)नां तुविग्रीवा इवेरते । त्वे पितो महानां देवानां मनो हितम् ॥ अकारि चारु केतुना तवाहिमवसाऽवधीत् । यददो पितो अजगन्विवस्व पर्वतानाम् ॥ अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः । यदपामोषधीनां परिंशमा रिशामहे ॥ वातापे पीव इद्भव । यत्ते सोम गवाशिरो यवाशिरो भजामहे ॥ वातापे पीव इद्भव । करम्भ ओषधे भव पीवो वृक्क उदारथिः वातापे पीव इद्भव । तं त्वा वयं पिता वचोभिर्गावो न हव्या सुषूदिम ॥ देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादमिति हुत्वा हुत्वा पात्र्याꣳ संपातमवनयेत् ॥ ( ख० १४ )॥ ६ ॥

हुत्वा हुत्वा पात्र्यां संपातशेषमवनयति सर्वान्नानाम् ॥ ६ ॥

अपि वा यस्यान्नस्याग्रे जुहुयात्तस्येध्मं कुर्यात् ॥ ७ ॥

शाखान्तरोक्तानुवादः ॥ ७ ॥

यजमानायतन औदुम्बर्यामासीनमग्निमन्वारब्धं कृष्णाजिने संपातैरभिषिञ्चति ॥ ८ ॥ दक्षिणे वा पक्षावस्मिन्कृष्णाजिने ब्राह्मणं व्याघ्रचर्मणि राजन्यं बस्तचर्मणि वैश्यं पशुकाममिति ॥ ९ ॥ नित्यवदेके समामनन्ति ॥ १० ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बृहस्पतेꣳ

साम्राज्येनाभिषिञ्चामीति ब्राह्मणम् ॥ ११ ॥
इन्द्रस्य साम्राज्येनाभिषिञ्चामीति राजन्यम् । अग्नि-
स्य साम्राज्येनाभिषिञ्चामीति वैश्यम् ॥ १२ ॥
पुरस्तात्प्रत्यङ्ङ्तिष्ठन्पश्चात्प्राङ्मुखमासीनं शीर्ष-
तोऽभिषिच्याऽऽमुखादन्ववस्रावयति ॥ १३ ॥

दक्षिणं प्रत्यपि पक्षं यत्र प्रजापतेर्हृदयेन कृतमुपस्थानं तत्रौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यामासन्द्यां कृष्णाजिनं प्राचीनग्रीवदुपरि लोमानि यथा भवन्ति तथा विस्तीर्य (प्रसार्य) तस्मिन्कृष्णाजिन आसीनमुपविष्टं प्राङ्मुखमाग्निमन्वारभ्य स्थितं संपातैरन्नशेषैरभिषिञ्चति ब्राह्मणम् । व्याघ्रचर्मणि राजन्यं क्षत्रियम् । छागस्याजिने वैश्यम् । कृष्णाजिने ब्रह्मवर्चसकामं क्षत्रियं वैश्यमपि । बस्ताजिने तु पुष्टिकामं ब्राह्मणमपि । देवस्य त्वा, इत्यनुद्रुत्य मन्त्रं, पूष्णो हस्ताभ्यामग्नेस्त्वा साम्राज्येनाभिषिञ्चामीति ब्राह्मणमभिषिञ्चति । पूर्ववदनुद्रुत्येन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीति क्षत्रियम् । पूर्ववदनुद्रुत्य बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति वैश्यम् । 'मन्त्रविपर्यासमेके समामनन्ति' (आप०श्रौ० १७–४) इत्यापस्तम्बः । भाष्यकारस्तु देवस्य त्वा सवितुरित्यारभ्य सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्यभिषिञ्चति । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते । यथाऽग्निचित्यायामिति स एव वाजपेयपाठो दर्शित इति । इह तु प्रत्यक्षपाठः । 'अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याहैष वा अग्नेः सवः' (तै०सं०५–६–३) इति प्रत्यक्षपाठो ब्राह्मणे । प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठन्नध्वर्युः क्षिप्त्वा हुतशेषमामुखाद् यावन्मुखं तावदेव स्रावयति । अत्राभिषिक्तस्य माहात्म्यं दर्शयत्यापस्तम्बः—'तदाहुर्होतव्यमेव नहि सुषुवाणः कंचन प्रत्यवरोहतीति' (आप० श्रौ०१७–७–६) इति । तदाहुर्ब्रह्मवादिनोऽन्ये शाखान्तरस्था होतव्यमेव नाभिषेकार्थे शेषः कर्तव्य इति । न ह्यभिषिक्तः सन्यजमानः कंचन दृष्टं गुरुमपि प्रत्यवरोहति, यावज्जीवं प्रत्युत्थानं न कुर्यात् । एषोऽभिषेकस्य धर्मः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

कृष्णायै श्वेतवत्सायै पयसा दध्ना वौदुम्बरीस्
स्रुचं पूरयित्वा न स्कोपासेत्याहुतिं जुहोति ॥ १४ ॥

अग्निर्देवता । दधिहोमो शाखान्तरस्थः ॥ १४ ॥

ऋताषाडृतधामेति षड्भिः पर्यायैर्द्वादशगृहीतेन
द्वादश राष्ट्रभृतो जुहोति ॥ १५ ॥ पर्यायमनुद्रुत्य
तस्मै स्वाहेति पूर्वामाहुतिं जुहोति ॥ १६ ॥ ताभ्यः
स्वाहेत्युत्तराम् ॥ भुवनस्य पत इति रथमुखे

पञ्चाऽऽहुतीर्जुहोति ॥(ख० १५) ॥ दश वा पर्याये रथ्यस्याऽऽहवनीये धार्यमाणꣳ रथशिरोऽभि जुहोति । रथशिरसा जुहोतीत्येकेषाम् ॥ ७ ॥ समुद्गृहीतꣳ रथमध्वर्योरावसथꣳ हरन्ति । अनुनयन्ति त्रीनश्वाꣳश्चतुर इत्येकेषाम् ॥१८॥ तान्सरथानध्वर्यवे ददाति ॥ १९ ॥

कामाहुतीः षड्भिः पर्यायैः परिवर्तकैर्द्वादश जुहोति राष्ट्रभृन्मन्त्रैः—ऋताषाडृतधामा, ऊर्जो नामेत्येवमन्तः पर्यायः । सकृदेवोक्त्वा तस्मै स्वाहेति प्रथमाहुतिः । ताभ्यः स्वाहेत्युत्तराहुतिः । एवमुत्तरेष्वपि पर्यायेषु विभागः । ऋताषाडृतधामाऽग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा इति । तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा इत्येवं मा भूदर्थसंबन्धो विभागः । परिपाठसामर्थ्यादन्यथा परिपठितस्य मन्त्रस्यान्यथा क्रिया न युक्ताऽसति कारणे नोहेत् । अर्थान्नाभिदधाति. प्रकृतिवदित्यत ऊहः क्रियते विकृतौ प्रकृतिवच्छन्दोभावात् । भुवनस्य पत इति पर्यायाणां सप्तमी । भुवनस्य पत इति सप्तमीं जुहोतीत्यापस्तम्बः । पर्यायानाधिकृत्यैषा श्रुतिर्विदधाति । भुवनस्य पत इति त्रयोदशीं जुहोतीत्यन्या श्रुतिराहुतीरधिकृत्य, एवमेकार्थत्वाच्छ्रुतिद्वयस्य । एतेन व्याख्यातं पर्यायमनुद्रुत्य तस्मै स्वाहेति प्रथमाहुतिः, ताभ्यः स्वाहेत्युत्तरा । एवं पञ्चाऽऽहुती रथमुखे पञ्च । केचिदाहुः—आहवनीयस्य रथशिरो धार्यमाणमभिजुहोतीति । पञ्चभिर्दशाभिर्वाऽभिहुतास्वाहुतिषु रथमुख आहवनीयस्योपरिष्टाद्धार्यमाणेऽध्वर्योरावसथं नयन्ति, उद्यम्यैव हरन्तो न कर्षन्तोऽनुनयन्ति पश्चाद्रथस्य त्रीनश्वान् । यदि पष्टवाही त्रियुग्रथः । चतुरो वा । यदि चतुर्युग्रथः । तानश्वान्रथं चाध्वर्यवे ददाति । पृथगश्वानां प्रतिग्रहः पृथग्रथस्य । न चोहः प्रकृतिविकृत्यर्थत्वान्मन्त्राणाम् । यजमानो हि निमित्ते तिस्रो वडवा द्वे वा वडवे ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

समुद्रोऽसि नभस्वानित्यञ्जलिना त्रीन्वातनामानि जुहोति ॥ २० ॥ कृष्णाजिनपुटेन वा ॥ २१ ॥

समुद्रोऽसि नभस्वानित्यञ्जलिना वात एव हूयते त्रिः । न ह्येतस्य वायोरवदानं शक्यते ग्रहीतुम् । भाष्यकारस्तु—अञ्जलिना तिस्र आज्याहुतीः, इति । कृष्णाजिनपुटेन वा वातहोमः । नाञ्जलिना । उपदेशोऽपि वायुरेवात्र हूयत इति ॥ २० ॥२१॥

अग्न उदधे यात इषुर्युवा नामेति पञ्चभिः पर्यायैः प्रदक्षिणमनुपरिक्रामन्प्रतिदिशं पञ्चाऽऽज्याहुतीर्जुहोति । मध्य उत्तमेन प्राङ्मुखः । समीची नामासि प्राची दिगिति षड्भिः पर्यायैर्दध्ना मधुमिश्रेण षण्महाहुतीर्जुहोति । यथा सर्पाहुतीर्यास्ते अग्ने सूर्ये रुच इति तिस्रो रुचो जुहोति ॥ २२ ॥

अग्न उदध इत्यसमासेन पञ्चाऽऽज्याहुतीः । वायुः प्रकृत इत्याज्याहुतीरित्युच्यते । समीची नामासि प्राची दिगिति दध्ना मधुमिश्रेण सर्पाहुतीः षट् । असमासेन परिक्रम्याग्निं प्रतिदिशमभिजुहोति । पञ्चमीं षष्ठीं च प्राङ्मुख एव पश्चादुपरिष्टाज्जुहोति । अनुपरिक्रामन्नित्यर्थः । हेतयो नाम स्थेति षण्महाहुतीर्जुहोति । यथैव सर्पाहुतीर्मधुमिश्रेण दध्ना । तिस्रो रुचो यास्ते अग्न इति ॥ २२ ॥

सुवर्णघर्मस्वाहेति पञ्चार्काहुतीर्हुत्वा ॥ २३ ॥

अर्काहुतीः पञ्चाऽऽज्येनैव ॥ २३ ॥

वेदिस्तरणप्रभृतीनि कर्माणि प्रतिपद्यते ॥ २४ ॥

अथैनां बर्हिषा बहुलं प्राचीनं स्तीर्त्वेति वैखानसोक्तेस्तरणादि सौमिकं प्राग्धिष्णियनिवपनात्कृत्वा सर्वतः प्रसृते दृशीकवः संचरेयुः, इत्येवमन्तं विधायोपवपनप्रत्याम्नायश्चयनम् ॥ २४ ॥

ममाग्न इत्येतेनानुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियाश्चिनोति । एकैकेन मन्त्रेणैकैकं धिष्णियमु-(म) पवर्जयति । अष्टावाग्नीध्रीय उपदधात्यश्मा नवम इत्येकेषाम् ॥ २५ ॥ द्वादश चतुर्विंशतिं वा होत्रीय एकादशैकविंशतिं वा प्रशास्त्रीये षण्मार्जालीयेऽष्टावितरेषु ॥(ख० १६)॥ तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् । बृहस्पते अतियदर्यो अर्हात् । एवा पित्र इति तिसृभिर्ब्राह्मीभिर्ब्रह्मसदने यमो दाधार पृथिवीं यमो विश्वमिदं जगत् । यमाय सर्वमि-

त्सस्थे यत्प्राणाद्वायुरक्षितम् । यथा पञ्च यथा पड्यथा पञ्चदशर्षयः ॥ यमं यो विद्वान्स ब्रूयाद्यथैक ऋषिर्विजानते ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप् छन्दाꣳसि सर्वा ता यम आहितेति तिसृभिर्यामीभिर्मार्जालीये त्वेषं वयꣳ रुद्रं यज्ञसाधं वङ्कुं कविमवसे निह्वयामहे । आरे अस्मद्दैव्यꣳ हेडो अस्य तु सुमतिमिद्वयमस्या वृणीमहे ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्निद्विशो अस्माकमा च रारिष्टवीरा जुहवाम ते हविः ॥ मृडा नो रुद्रोत नो मयस्कृधीति तिसृभी रौद्रीभिश्चात्वाले हव्यं प्रीणीहि हव्यꣳ श्रीणीहि हव्यं पच हव्यꣳ श्रपय हव्यमसि हव्याय त्वा हव्येभ्यस्त्वा हव्ये सीदेत्यष्टौ शामित्रे हव्यसूदोऽव ते हेड उदुत्तमं तत्त्वा यामि ब्रह्मणा वन्दमान इति तिसृभिर्वारुणीभिरवभृथे (तासु प्रचरन्ति । खण्डाः कृष्णा लक्ष्मणाश्चोत्कर उदस्यति अवशिष्टाश्च ) ॥ २६ ॥

ममाग्ने वर्चो विहवेष्वित्यनुवाकेनैकेष्टका ऋचा ऋचोपधीयते प्रतिमन्त्रम् । हिरण्यकेशिनस्तु–'एकैकयर्चा एकैकंधिष्णियमपवर्जयन्ति' इतिश्रुत्यन्तरम् । तैत्तिरीयाणां तु यद्विहव्या उपदधाति, इत्युक्त्वा 'होतुर्धिष्णिय उपदधाति' ( तै० सं० ५–४–११ ) इति । विहव्या इति बहुवचनमेकैकस्मिन्बह्वीभिरिष्टकाभिर्धिष्णियपरिमाणाभिश्चिनोतीति । अश्मा नवमा( म आ )ग्नीध्रीयेऽष्टाविष्टकाश्चतुरस्रा ( श्रा ) दीर्घा इति नियमो नास्ति । ( ममाग्न इत्यारभ्य ) नवभिर्ऋग्भिरुपधानम् । अश्मा तु मध्य एकस्या ऋचस्त्यागः । उपधाय क्रमेण चयनं भवति । होत्रीयं प्राशास्त्रीयं ब्राह्मणाच्छंसीयं पौत्रीयं नेष्ट्रीयमच्छावाकीयमिति । ततो ब्रह्मसदनं मार्जालीयमिति । यदा द्वादशहोत्रीयं तदा पञ्चमी दशमी च द्विरभ्यस्यते । यदा षोडश तदा पञ्चमी चतुरावर्तते दशमी च । यदैकविंशतिस्तदा द्विरेकैका उत्तमा तु त्रिः । यदा चतुर्विंशतिस्तदा

---

१ इदं सूत्रं ख्यानपुस्तकयोर्विद्यते । २ ग. पुस्तके आचार्यास्तु ।

पञ्चमी, अष्टकृत्वोऽभ्यस्येत दशमी च । एवं संख्यां पूरयेत् । एकादश ब्राह्मणाच्छंसीये षडिष्टकास्तु मार्जालीयेष्टावग्रावन्येषु धिष्णियेषु उपधानमनुद्देशेऽप्यपि चतुरश्रा वा भवन्ति धिष्णियाः परिमण्डला वा । केचित्त्वाहुर्गुणविकारेषु परिमण्डला इति । तेषां धिष्णियानां यस्य यावत्य इष्टका उपधास्यन्ते शर्करा अपि परिश्रितास्तावत्य एव परिश्रयणार्थाः । अच्छावाक( स्य ) धिष्णियोपधानं कृत्वा ब्रह्मसदने पञ्चोपधाय विहव्यास्तव श्रिये इति षष्ठी । बृहस्पते अति यदर्यो अर्हात्, इति सप्तमी । बृहस्पतेः समजयदित्यष्टमी । मार्जालीये विहव्या उपधाय तिस्रो यमो दाधारेति च तिस्र उपदधाति । चात्वाले विहव्याः पञ्चोपधाय त्वेषमिति षष्ठी । अस्या( श्या )मत इति सप्तमी । मृडा नो रुद्र इत्यष्टमी चात्वाले । हव्यं प्रीणीहीति यजुर्भिरष्टौ शामित्रस्थाने । ततोऽवभृथस्थानं गत्वा विहव्याः पञ्चोपधाय–अव ते हेड, उदुत्तमं, तत्त्वा यामि, इत्युपदधाति तिस्रः, कृत्वा परिस्तरणं पूर्वं पश्चादुपधानमिष्टकानामिहाप्यवभृथे तासु प्रचरणं साङ्गस्यावभृथस्य काले । भाष्यकारस्तु–बर्हिरभिजुहोत्याहुतीनां प्रतिष्ठित्या इति बर्हिः प्रत्याम्नायत्वादिष्टकानां प्रचरन्तीति तस्मिन्नेव काल उपदधाति नास्मिन्काल इति । अस्मिन्काल इति न्यायः । अस्मिन्काल उपहिता अपि तृणप्रत्याम्नाया एतेनैव तृणं प्रह्रियते । खण्डाः कृष्णा इष्टका यासां च किंचिच्चिह्नं च न सर्वत्र लोहितास्ता उत्करे क्षिपति । अवशिष्टा अपि गुणयुक्ता हित्वोत्करे क्षिपति । २५ ॥ २६ ॥

**यत्प्राग्यूपसंमानात्तत्कृत्वैकयूपमेकादश वा यूपान्संमिनोति ॥ २७ ॥ तेषामग्निष्ठं पूर्वेद्युरुच्छ्रयति ॥ २८ ॥**

यत्प्राग्यूपसंमानात्तत्पूर्वं कर्म–अग्नेनामग्नेपते नमस्ते अस्तु मा मा हिंसीरिति तं तमभिक्रामत्येवमादि पूर्ववदाज्यान्यभिमन्त्र्येवमत(न्त)मविकृतेन ज्योतिष्टोमेन विधिना । यद्यप्येकादश यूपास्तथाऽपि वेदिसंमितेनैव न रथाक्षेण विमानम् । एकयूपं वा करोति । अग्नीषोमीयकाल एकादश वैकादशिनधर्मेण वेदिसंमिता । साग्निचित्ये वेदिसंमिता[ या ] एवाऽऽम्नानान्न रथाक्षविमानं लभ्यते तेषां यूपानाम् । योऽग्निष्ठः स पूर्वेद्युरग्नीषोमीयकाले मिनोति । वेदिसंमानविधानं कथं लभ्यत इति पुनरालभ्यते ये त्वग्निष्ठादाश्विनं गृहीत्वोच्छ्री( च्छ्र )यन्त ( इति ) प्रधानकालत्वादङ्गानाम् । अग्नीषोमीयकाल एव वा । येऽप्यग्निष्ठाद्विभज्यैकादशधा वेदिम् । एष एकाहेषु विधिः ॥ २७ ॥ २८ ॥

**अत्रैव वा । इतराभ्यो वा । अग्नीषोमीयस्य पशुपुरोडाशं निरुप्य देवसुवां हवींष्यनुनिर्वपत्यग्नये गृहपतय इति यथासमाम्नातम् ।**

**पशुपुरोडाशस्य देवसुवां च हविषाᳲ समानᳲ स्विष्टकृदिडम् ॥ ( ख० ॥ १७ ) ॥ २९ ॥३०॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने षष्ठः पटलः ॥ ६ ॥**

श्वो वेत्यहीनार्थः । श्वो वा यावन्तः पशव आलभ्यन्ते तावतामुच्छ्रयो यूपानाम् । यथा द्विरात्रे पञ्च पूर्वेऽहन्यालभ्यन्ते षडुत्तर इति । त्रिरात्रे तु प्रथमेऽहनि त्रयः पशवो द्वयोरुच्छ्रयणं यूपयोरग्निष्ठ एवाऽऽलभ्यत आग्नेयः । द्वितीये यूपचतुष्टयं पशवश्चत्वारस्तथा तृतीये । एवमन्यत्राप्यहीनेषु विभागः । सत्रे तु प्रत्यक्षविभागः । यदि यूपैकादशिनी स्यात्, अन्वहमहन्यहनि न तु प्रथमेऽहन्युच्छ्रयः, अग्निष्ठस्य विद्यमानत्वात् । द्वितीयप्रभृतिष्वहःसु एकैकस्य समानम् । दीर्घसत्रेषु पशुरेवाऽऽवर्तते न यूपोच्छ्रय उच्छ्रितत्वात् । श्वो वेति विकल्पविधानाद्द्विरात्रादिष्वपि अग्नीषोमीयकाल उच्छ्रयणं लभ्यते । अग्नीषोमीयपशोः सर्वसोमार्थत्वादेकयूपे वा सर्व ऐकादशिनी (न) आलभ्यन्ते । स तु यूपस्तेषामेवैकोऽग्निष्ठ इति । अग्नीषोमीयकाल एव द्वाभ्यां रशनाभ्यां परिवीयते । प्रतिपशु स्वरुः (स्व:) स स्वरुभिः पशून्व्यर्धयति; इति लिङ्गात् । अग्नीषोमीयस्य पशोः पशुपुरोडाशं निरुप्याष्टौ देवसुवां हवींषि निर्वपति—'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाᳲ सोमाय वनस्पतये श्यामाकं चरुᳲ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाᳲ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुम्' ( तै० सं० १-८-१० ) इति । षष्टिभि(षष्टिसंख्यै)रेव दिनैः पच्यमाना आशुव्रीहयः । स्थूलबीजं महाव्रीहयः । आम्बा धान्यविशेषाः । कमलबीजमित्येके । अत्र याजुषहौत्रसत्त्वे त्वमग्ने बृहद्वयः ( तै० सं० ३-४ ११ ) इत्यनुवाकोक्ता याज्यापुरोनुवाक्या ग्राह्याः । समानं तु स्विष्टकृदिडं स्विष्टकृच्चेडा च पशुपुरोडाशस्य मुख्यत्वादग्निगुणकः स्विष्टकृत्स देवसुवामपि भवति । इडाप्राशनं च मैत्रावरुणपष्ठो भवति ॥ २९ ॥ ३० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्ने षष्ठः पटलः ।

---

अथ द्वादशप्रश्ने सप्तमः पटलः ।

---

**पशुकाल एकयूप एकादश पशूनुपाकरोति एकादशसु वा ॥ १ ॥**

पशुकाले प्राप्ते पशुनेर्हाति । आग्नेयं सवनीयं पशुमुपाकरोति ' आप० श्रौ० १७-८-२ ) इत्यापस्तम्बः । त्रिवृता यूपं परिवीय क्रतुपशवोऽपि लभ्यन्ते, तेषां प्रदर्शन-

माग्नेयग्रहणम् । भाष्यकारस्त्वाग्नेय एवोक्थ्यादिषु सर्वसंस्थासु च लभ्यते पुनर्विधाना-दिति । न त्वन्यासु शाखासु संगच्छते क्रतुपशुप्रदर्शनार्थं इत्येव संगच्छते । एका-दशसु वेति । वेदिसंमितां मिनोतीति पुनर्विधानात् । एकयूपे चैकादशिनानां यद्-ग्रावेकादशिनीं मिनुयात् , इति यूपभेदनिन्दां कृत्वा एकयूपत्वं चैकादशिनानां विधी-यते । एकादशिनीति च यस्यां यूपभेदस्तामेवोपचरन्ति । 'वज्रो वा एषा संमीयते यदेकादशिनी ' इति सा समर्था ' प्रत्यञ्चं यज्ञ९ संमर्दितोर्येत्पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय' इति श्रुतेः । न पश्वैकादशिन्यां पात्नीवतं यूपैकादशिन्यामेव 'सर्वे वा अन्ये यूपाः पशुमन्तः, इति बहुत्वं यूपानामुक्त्वोपशयपशुविधानादुपशयोऽपि यूप-भेदद्वारकः । तस्मादेकयूपेष्वैकादशिनेषु न भवति सौत्रामण्यां च । तच्च कात्यायनेनाप्यु-क्तम्—'यूपैकादशिन्यामेवोपशयपात्नीवतौ न पश्वैकादशिन्याम्' इति । अतश्च पशुगणे बहिः सोमे तत्र संमर्दितस्याभावान्नापात्नीवतः, यूपभेदद्वारत्वात्तूपशयः क्रियते । आग्नि-चित्य एवैकयूपो लभ्यते तत्रोक्त इति । अन्येषु तु गणेषु बहिस्तन्त्रवर्तिषु यूपभेद एव । यत्रिषु यूपेष्वालभेत, इति लिङ्गात् ॥ १ ॥

अग्निं युनज्मि शवसा घृतेनेति तिसृभिः प्रातः-
सवनेऽग्निमभिमृशति ॥ २ ॥

पुरस्तात्प्रातरनुवाकाद्ग्रावसूपावहृत्य सोमम्, अग्निं युनज्मीति तिसृभिरभिमृशन्ने-वाग्निं युनक्ति, यज्ञवाहनार्थं न मन्त्रान्तेनाभिमृशति ' यत्सर्वाभिः पञ्चभिर्युञ्ज्यात् ' इति दोषमुक्त्वा ' यज्ञायज्ञीयस्य स्तोत्रे द्वाभ्याममभिमृशति ' इति तदप्यभिमर्शनं, नमो अस्तु मा मा हि९सीरिति द्वाभ्याममभिमर्शनं योग एव वक्ष्यति स्वयमेव सूत्रकारः ॥ २ ॥

दक्षिणाकाले हिरण्यपात्रं मधोः पूर्णं शतमानस्य
कृतं चित्रं देवानामित्यवेक्ष्य मध्यंदिनेऽश्वेनाव-
घ्राप्य ब्रह्मणे ददाति ॥ ३ ॥

दक्षिणाकाले प्राप्ते प्रतिहर्त्रे तत इति कृते हिरण्मयं पात्रं मधुनः पूर्णं शतमानस्य हिरण्यस्य कृतं चित्रं देवानामिति यजमानोऽवेक्ष्याश्वेनावघ्राप्य ( पणं कारयित्वा ) ब्रह्मणे ददाति हिरण्यपात्रम् । तस्य प्रतिग्रहोऽग्नये हिरण्यमिति तस्य हिरण्मयत्वात् । हिरण्यपात्रं मधोः पूर्णं ददाति, इति पात्रस्य प्रतिग्रहणं न मधुनः ॥ ३ ॥

अध्वर्यवे कल्याणीर्दक्षिणा दद्यात् ॥ ४ ॥

अध्वर्यवे कल्याणीः सुरूपा बहुमूल्याश्च ददाति यदि चिनोत्यध्वर्युः । तथा चोक्तं ब्राह्मणे—' तं वा एतं यजमान एव चिन्वीत यदस्यान्यश्चिनुयाद्यत्तं दक्षिणाभिर्न राध-

येदग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात्तं दक्षिणाभी राधयेदग्निमेव तत्स्पृणोति' ( तै० सं० ५-६-९ ) इति चयनव्यापारं यजमान एव कुर्यात् । अध्वर्युर्मन्त्रान्ब्रूयात् । यदा यजमानश्चिनोति तदा न दक्षिणा ददाति । यदाऽध्वर्युश्चिनोति तदा यजमान एव बहुमूल्या गा अध्वर्यवे दद्यादित्यर्थः । न यजमानाय दक्षिणाभागमेव विशिष्टमध्वर्यवे ददाति न ब्रह्मण इति भाष्यकृत् । अधिकमध्वर्योश्चिन्वत इति न्यायः । न ह्यङ्गनिमित्तां प्रधानदक्षिणां ( वि ) कुर्यात् । बोधायनमतिश्च—आरण्यकानुवाकेनात्राध्वर्यवेऽग्निदक्षिणा ददाति शतं सहस्रमन्विष्टकां वेति । शतं सहस्रं वा रौप्यकमुद्रा इत्यर्थः । ॥ ४ ॥

**यदस्यान्याश्चिनुयाद्यत्तं दक्षिणाभिर्न राधयेदग्निमस्य वृञ्जीत ॥ ५ ॥**

तं दक्षिणाभिस्तोषयेत्तेनाग्निमेव तोषयति ॥ ५ ॥

**उपाकृते यज्ञायज्ञि(ज्ञी)यस्य स्तोत्र एकया प्रस्तुत एकस्यां वा गीतायां समुद्रे ते हृदयमिति द्वाभ्यामग्निमभिमृशति ॥ ६ ॥**

यज्ञायज्ञीयस्य स्तोत्रे वर्तमान एकया ऋचा प्रस्तावे कृते नमस्ते अस्तु मा मा हिंसीः, नमस्पथ इत्येव मन्त्राभ्यां द्वाभ्यामभिमर्शनम्[1] ॥ ६ ॥

**हारियोजनेन चरित इमꣳ स्तनमूर्जस्वन्तं धयापामित्यग्निविमोचनीयामेकाहुतिं जुहोति । वि ते मुञ्चामीति वा ॥ ७ ॥**

नन्वग्नौ श्रूयते—'अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेव तद्युनक्ति पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इत्यग्नियोगः । तथा—'इमꣳ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णाꣳ स्रुचं जुहोतीत्येष वाऽग्नेर्विमोक' इति । सोऽयमग्निविमोकः किं प्रधानमात्रापवर्गे स्यादुत साङ्गप्रधानापवर्ग इति । यदि प्रधानमात्रार्थो योगस्तदपवर्गे विमोकः, साङ्गप्रधानार्थत्वे तु योगस्य सर्वान्ते विमोकः । तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगः सर्वार्थः । तस्मात्सर्वापवर्गे विमोक इति पूर्वपक्षं कृत्वा 'पाङ्क्तो यज्ञः' इति वाक्यशेषेण यज्ञार्थता योगस्य । अतः प्रधानापवर्गे विमोक इति भाष्यकारेण सिद्धान्तितम् । एवं च सौमिकमपि वरणं यद्वृता वषट्कुर्युर्भ्रातृव्यमेव यज्ञस्याऽऽशीर्गच्छेत्, इति यज्ञसंयोगादाग्निसंयोगतुल्यन्यायं केवलप्रधानार्थं भवति । तत्रावभृथे सौमिकेन वरणेन प्रत्याम्नातं होतृवरणं प्राप्नोति । तत्र न

१ घ. द्वाभ्यामभिमर्शनं काल एव स्तोत्रे वेदे । इति पाठोऽधिकः ।

होतारं वृणीत इति प्रतिषेधोऽवक्लृप्तो भवति । इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वादवभृथे पृथक्वरणप्राप्त्यभावात्प्रतिषेधो न स्यादिति च लिङ्गमुक्तम् । तथा द्वादशाहे अहरहर्युनक्ति अहरहर्विमुञ्चति, इति प्रत्यहं योगविमोकदर्शनं द्वादशाहे । इतरथा साङ्गप्रधानार्थत्व आद्यन्तयोरेव योगविमोकदर्शनं स्यादिति ।

ननु—प्रधानार्थत्वेऽपि वरणस्यापूर्वत्वादवभृथस्य वैष्टिकवरणप्राप्तिः । तत्र कश्चिदाह—अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति । स चापूर्वत्वपक्षे वरणप्राप्तौ सत्यामवकल्प्य(ल्प)ते नान्यथेति । वयं तु ब्रूमः— यद्यप्यपूर्वोऽवभृथस्तथाऽप्याज्यभागयोस्तत्र सद्भावाद्धोतुश्चाङ्गप्रधानार्थत्वात्तद्वरणमप्यङ्गप्रधानार्थम् । न हि दार्शिकं वरणं केवलप्रधानार्थं यज्ञसंयोगाभावात् । अतोऽसत्यप्यतिदेशे होतृवरणस्याऽऽज्यभागार्थतयाऽस्त्येवावभृथे प्राप्तिरिति युक्तः प्रतिषेध इति । तदिदं भाष्यकारीयमधिकरणव्याख्यानमनुपपन्नमिति मत्वा वार्तिककारेण विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ । वाक्यशेषादवभृथलिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः । सिद्धान्तस्त्वग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः । न च वाक्यशेषवशाद्विशेषः । योगोत्पत्तिविधौ वाक्यशेषाभावात्तत्र तावत्सर्वार्थत्वं गम्यते पञ्चसंख्यागुणविधौ वाक्यशेषः श्रुतः । न चासावुत्पत्तिवाक्यावगतं सर्वार्थत्वमलं निवर्तयितुम् । किं च यज्ञशब्दो यागमात्रं ब्रवीति न प्रधानयागमेव । अतो न तद्वशात्केवलप्रधानार्थत्वम् । अवभृथे च होतृवरणप्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव । सौमिकं हि वरणमानत्यर्थं प्राकृतं तु होतृवरणं प्रवृत्ते होतरि क्रियमाणमदृष्टार्थम् । अतस्तत्सर्वासु सौमेष्टिषु कार्यमिति द्वादशे वक्ष्यति । तस्माद्युक्तः प्रतिषेधः । द्वादशाहे च प्रत्यहं योगविमोकदर्शनमस्मिन्नेव पक्षे घटते । विधानार्थं ह्येतद्वचनं नानुवादमात्रम् । आनर्थक्यात् । तेन सर्वादौ सर्वान्ते च सकृदेव योगविमोकयोर्न्यायतः प्राप्तयोर्वचनेनाहरहर्योगविमोकौ विधीयेते । तस्मात्सर्वार्थो योगः सर्वापवर्गे च विमोकः ॥ ७ ॥

एकादश समिष्टयजूंष्यपि जुहोति ॥ ८ ॥
नवाऽऽध्वरिकाणि हुत्वा—इष्टो अग्निराहुतः
स्वाहा कृतः पिपर्तु नः । इष्टꣳ हविः स्वाहेदं
नम इति दशमैकादशे जुहोति ॥ ९ ॥

एकादश समिष्टयजूंषि जुहोतीति वचनादध्वरार्थानि नव हुत्वा धातारातिरिति । इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः स्वाहा । तस्य त इष्टस्य वीतस्य द्रविणे ह भक्षीय स्वाहा । केचिदेकमन्त्रं कुर्वन्ति । तमेव द्विरावर्तयन्ति दशमैकादश समिष्टयजुष इति वैखानसोक्तेः ॥ ८ ॥ ९ ॥

**अनूबन्ध्यावपायाꣳहुतायां यदाऽऽकूता-त्समसुस्रोदित्येतेनानुवाकेन प्रतिमन्त्रमा-कूतीर्जुहोति ॥ १० ॥**

अनूबन्ध्यावपायां हुतायां वपने कृते स्नाते च पात्नीवतः। तस्मिन्समाप्तेऽग्नेर्वि-मोकः। ( औदुम्बरीꣳ स्रुचं घृतस्य पूरयित्वा—इमꣳ स्तनमूर्जस्वन्तं धयापामित्यग्नेर्वि-मोको हूयते। ) ततः पशुपुरोडाशाद्यनूबन्ध्याशेषम्। यदि त्वामिक्षा, तां हुत्वा वपनं स्नानं पात्नीवतं च कृत्वा देविकाहविर्भिः ( प्रचरणादि ) प्रचारादिसक्तुहोमे कृते धूमा-नुमन्त्रणे च। यदाकूतादिति दशाऽऽहुतीरध्वर्युर्जुहोति ॥ १० ॥

**आपं त्वाऽग्ने मनसेति प्रयास्यन्नाग्नी(ष्टि)भिराग्निमुपातिष्ठते ॥ ११ ॥**

यजमान इति बौधायनः। योऽयं मन्त्रः पठितस्तं मन्त्रमुक्तप्रकारेण प्रयाणकाले ब्रूयात्। 'इत्याहैषा वा अग्नेराप्तिस्तयैवैनमाप्नोति' ( ५–५–७ ) इति। एषैव मन्त्रपा-ठानुष्ठितिर्भिः प्रापिका। तस्मात्तयैवाग्निं प्राप्नोतीत्यर्थः ॥ ११ ॥

**येऽग्नयः पुरीष्या इति यत्र स्वीयमग्निं पश्यति तमुपतिष्ठते ॥ १२ ॥**

केचित्तु—प्रत्यवरुह्य चित्यात्पुनर्मन इत्युपतिष्ठते चित्यम्। अयं नो नभसा पुर इत्युपस्थानादि यजमानस्य वृष्टिरसीत्यन्तम्। तत आत्मी(ष्टि)भिरुपस्थानम्। येऽग्नयः पुरीष्या इति। आपं त्वाऽग्ने वशयेति लिङ्गात्। 'अग्निचित्ये वशा नित्या' इति न्यायः। भाष्यकारस्तु विकल्प एवेत्यात्मी(ष्टि)भिरुपस्थानम्। प्राजहितꣳ समारोप्यैवमादिकर्म, इति वैखानसादयः ॥ १२ ॥

**उप त्वाऽग्ने दिवे दिव इति तिसृभिरन्येषामग्नीन्दृष्टा(ष्ट्वा) ॥ १३ ॥**

अन्येषां यजमानानां चितिं दृष्ट्वोपतिष्ठते। प्रयास्यन्नेव यावन्नाध्यवस्यत्युदवसानी-यार्थदेशं यजमानः। केचित्तु—यावज्जीवमन्येषामग्निमु( ग्नीन्दृष्ट्वो )पस्थानं कुर्वन्तीति ॥ १३ ॥

**अग्निं चित्वा सौत्रामण्या यजेत। मैत्रावरुण्या चाऽऽमिक्षया ॥ १४ ॥**

उदवसानीयान्ते च कृतेऽग्निं चित्वाऽग्निगुणकेन क्रतुनेष्ट्वाऽनन्तरं सौत्रामणी मैत्राव-रुणी चाऽऽमिक्षा। विना पर्वणीति भाष्यकृत्। आगामिपर्वणीति न्यायः शक्यते कालं संपादयितुमिति ॥ १४ ॥

**अग्निं चित्वा संवत्सरं न कंचन प्रत्यवरोहेन्न पक्षिणोऽश्नीयात् ॥ १५ ॥ यावज्जीवं वर्षति**

**न धावेन्न रामामुपेयान्न द्वितीयं चित्वाऽन्यस्य स्त्रियमुपेयात् ॥ १६ ॥ न तृतीयं चित्वा कांचनो पेयाद्भार्यां वोपेयात् ॥ १७ ॥**

संवत्सरं कंचिदपि न प्रत्यवरोहेत् । प्रत्युत्थानं न कुर्यात् गुरूणामपि । यदा त्वभिषेकः कृतस्तदा यावज्जीवं संवत्सरमनभिषेकेऽपि । रेतःसिक्त्रतत्वात् । नहीमे कंचन प्रत्यवरोहतस्तदेनयोर्व्रतमिति । रामा यस्य शूद्रा क्रयेणाऽऽनीता सोऽपि यजमानस्तां संवत्सरं नोपगच्छति । पक्षिमांसस्यापि संवत्सरमभक्षणम् । मस्तिष्कं मस्तकमांसं तस्य च । अग्निचिद्वर्षति दैवे न धावेद्यावज्जीवम् । यदि तु कथंचिद्विस्मृतौ धावेद्यस्मात्स्थानाद्धावनं कृतं तदेव स्थानमावर्तेत । द्वितीयमग्निं चित्वाऽन्यस्य वर्णस्य स्त्रियं भार्यामविक्रमे(ये)णाऽऽहृतां नोपगच्छेत्संवत्सरं न यावज्जीवं रामातुल्यत्वात् । तृतीयमग्निं चित्वा कांचिदपि समानवर्णामपि संवत्सरं नोपगच्छेत् । सर्ववर्णानां सवर्णा त्ववश्यं भर्तव्या द्वयोर(व्याऽ)धिकारश्रुतेः । कामतस्तु प्रवृत्तानामसवर्णभार्या न साऽवश्यं भर्तव्या ॥ १५ ॥ १६ ॥ १७ ॥

**अग्निं चित्वा य एतस्मिन्संवत्सरे न विरोचेत । स क्रतुमारभमाण एकचितीकमग्निं चिन्वीत ॥ १८ ॥**

अग्निं चित्वाऽग्निगुणकेन क्रतुनेष्ट्वा य एतस्मिन्संवत्सरे यस्मिंश्चितोऽग्निस्तस्मिंश्चेदस्यावृद्धिर्भवति ह्रासो धनधान्यानामिति । केचित्तु—ऋद्धिमतामप्येतत्कर्मेत्याहुः । एतस्मिन्संवत्सरे यस्मिंश्चितोऽग्निः स क्रतुमाहरमाणोऽभीष्टमेकचितीकमेकप्रस्तारं चिन्वीताग्निम् । पूर्वचितस्याग्नेः समानमिष्टकाभिः षष्ठी चितिरिति श्रुतेः ॥ १८ ॥

**सलिलाय त्वा सर्णीकाय त्वेत्यष्टौ नानामन्त्राः ॥ १९ ॥ यथार्थं लोकंपृणाः । अथ पुरीषम् ॥ २० ॥**

सलिलाय त्वेत्यष्टौ नाना मन्त्रा उत्तरवेद्यामुपधाय पूर्वं त्रिःप्रमाणायां कृतायां पूर्वाग्नितुल्यायां वाऽवान्तरा मध्यमे प्रवर्ग्योपसदां चितिः, प्रकृतिवद् व्याघारणान्तं कृत्वा प्रकृतिवद्विरमणम् । अग्नीषोमीयदिवसे पौर्वाह्णिकीभ्यां प्रचर्य चयनं, षष्ठी चितिरिति श्रुतेः । अवयवत्वादग्निधर्माणामप्रयोजनम् । अग्नेर्ह्येते धर्मा नैकदेशः शक्नोति प्रयोक्तुम् । एकचितीकं चिन्वीतेति पुंलिङ्गनिर्देशात्तेन तुल्यः प्रस्तार एकः । अप्रतिष्ठायां तु निमित्तेऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुत, इति तुल्यत्वादस्यामपि चितिधर्माः क्रियन्ते । न त्वग्निधर्माः कर्षणादयः । प्रचर्य पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्याम् । औपवसथ्ये सुब्रह्मण्यान्ते, अग्रेण

१ घ. न बलात्कारेणोपगच्छेत्संवत्सरं ।

प्राग्वंशमष्टौ नाना मन्त्रा लोकंपृणाश्चैकस्य प्रस्तारस्य सादयतीत्यादि श्वेतमश्वं पुरस्तान्नयन्तीत्येवमन्तं कृत्वा श्वेतस्याऽऽलम्भः। तत वाङ्म आसन्नित्यारोहणं चितेः। ततः सलिलाय त्वेत्यष्टौ नानामन्त्रा उपदधाति । ततो लोकंपृणाभिः [ प्रच्छादयति । ] सोऽयं प्रथमविकारो भवति भरद्वाजमताच्च । उत्तरवेद्यभिमर्शनमात्मन्यग्निग्रहणं स्वयंचित्याऽभिमर्शनं तत्त्वा यामीति [ परिचरणं ] चाग्न्यङ्गत्वान्निवर्तते गायत्र्यभिमर्शनान्तं प्रथमचितिवत्। आपराह्णिकीभ्यां प्रचर्याश्वपरिणयनम् । ततः प्रवर्ग्योद्वासनादि ज्योतिष्टोमवत्। केचित्त्वष्टौ नानामन्त्रा उपधाय लोकंपृणा उपधीयन्ते। ततः पुरीषम्, इति यावदुक्तं कुर्वन्ति तस्मिन्नेव तु काले ॥ १९ ॥ २० ॥

**अग्निं चित्वा य एतस्मिन्संवत्सरे न प्रतिष्ठेत्स क्रतुमारभमाण एकचितीकमग्निं चिन्वीत संयच्च प्रचेताश्चेति पञ्च नानामन्त्राः । यथार्थं लोकंपृणाः। अथ पुरीषम् ॥ २१ ॥**

एतस्मिन्नेव संवत्सरे स्थानाद्वा प्रच्यवते वृद्धिर्वाऽस्य न भवति स क्रतुमभीष्टमाहरमाणस्तेन यज्ञक्रतुना क्रियेत, इत्येकचितीकमेव पूर्वाग्निप्रस्तारतुल्यं चिन्वीत। पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुत इति श्रुतेर्विप्रतिषेधात्। पूर्वाचितिभिः समानसंख्यत्वान्न ह्यग्निपूपरिष्टाच्चीयते षष्ठी चितिः। चयनविधिः सर्वं च । एतयोस्तु कामविपर्यासमेके प्रतिष्ठायां निमित्ते सलिलाय त्वेति। अथ यां नञ्नुयादिति द्वितीयः संयच्च प्रचेताश्चेत्येवं विपरीतौ कामावेके शाखिनः परिपठन्ति ॥ २१ ॥

**पुनश्चितिं व्याख्यास्यामः । सा त्रिष्वर्थेषु श्रूयते अ( तेऽस्र )वणार्थे वा समृद्ध्यर्थे वा संतानार्थे वा ॥ २२ ॥ अ( अस्र )वणार्थां व्याख्यास्यामः । यदीष्ट्या यदि पशुना यदि सोमेन यजेत ॥ २३ ॥ यत्रैवास्य पूर्वोऽग्निश्चितः स्यात्तदपरमन्ववसाय यजेत ॥ २४ ॥ अपिवा येनर्षय इत्यष्टौ नानामन्त्रा अष्टौ च लोकंपृणाः। अथ पुरीषम् ॥ २५ ॥**

पुनश्चितिरिति श्रूयतेऽश्र(स्र)वणार्थे—यां वा एषोऽनिष्टक आहुतिं जुहोति स्रवति वै सा । पुनश्चितौ चीयमानायामग्निचितिर्वीर्यवत्यस्यामाहुतयो भवन्ति, इत्यश्र( स्र ) वणार्थे । समृद्ध्यर्थेऽपि पुनश्चितयः—पुनश्चितिं चिनुत ऋद्ध्या, इत्यृद्धिकामस्य।

संतानार्थे—आ तृतीयात्पुरुपादन्नमत्ति, इति । संततिश्चाविच्छिन्ना । अन्नं चाऽऽतृतीय.त्पुरुषाद् भवति । यः संतानार्थे पुनश्चितिं चिनुते ।

तत्रास्रवणार्थो चितिरुच्यते—यदीष्ट्या यदि सोमेन यजेत योऽस्य चितः पूर्वोऽग्निस्तमन्ववसाय तस्मिन्नाहवनीयः पूर्वचिते त्वग्नौ स्थाप्यते । दर्शपूर्णमासाद्या इष्टयस्तासामग्न्यन्वाधाने पूर्वचितस्याग्नेः समीपं गच्छति । पूर्वचितेऽग्नावाहवनीयं स्थापयति । वेदिदेशे स्थापयित्वा गार्हपत्यदक्षिणाग्नी । समाप्तायामिष्टौ प्रविशति । एवं नित्यकाम्यनैमित्तिकानां विधिः । पशोस्त्वग्नेस्तृतीयो भागः परस्य चारत्निस्थानीया चितिरेव चोत्तरवेदिस्थानीया । प्रणयनकाले तु व्याघारणप्रभृति संभारनिवपनान्तं क्रियते । यथाप्रकृत्युत्तरतो यूपस्यान्यो यूपः, समानमन्यत् । सोमेऽपि यथाऽऽसीदाग्निकी पूर्वा वेदिस्तथा लक्षणे चोत्तरवेदिस्थानीया साग्निचिज्ज्योतिष्टोमवदन्यत्सर्वं यूपम( पाद्य )पूर्वम् । नित्यनैमित्तिककाम्येषु सोमेष्वेवं विधिः । एषोऽश्र( स्र )वणार्थः ।

अपि वा नान्ववसाय पूर्वचितमग्निं यागः । अग्निहोत्रमिष्टिं च गृह एव करोति । जातायामुत्तरवेद्यां पशौ सोमे च, पशौ शम्यामात्रायां दशपदायां सोमे व्याघारणान्तायां कृतायामुत्तरवेदिपरिमाणा दश्भा इष्टका आनीय प्रणयनाद्यारोहणान्तं कृत्वा पूर्ववत्—'येनर्षय' इत्यष्टावुपधाय लोकंपृणाश्च चितिक्लृप्त्याद्यश्वपरिणयनान्तं कृत्वा प्रथमा चितिस्तत्कृत्वाऽग्निप्रणयनादि परिधयः संभाराश्चोपर्यग्नौ धार्यमाणे, ऊर्णावन्तमित्यभिज्ञाय पश्चात्सर्वं पशुबन्धवत् । सोमे तु मध्यमायामुपसदि प्रोक्षणान्तं कृत्वोत्तरवेदिं प्रकृतिवद्विरम्य ( हृत्य )श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य व्याघारणमिष्टकाप्रणयनादि पूर्ववदारोहणान्तं कृत्वा चयनमुत्तरवेदिपरिमाणाभिरिष्टकाभिः पूर्ववदश्वावभितास्तिष्ठेताम् । येनर्षय इत्यष्टौ नानामन्त्रा लोकं पृणेति लोकंपृणास्तनश्चितिक्लृप्त्यादि गायत्र्याभिमर्शनान्तं कृत्वा प्रथमचितिवत् ; तत आपराह्णिक्यौ, अश्वपरिणयनं प्रवर्ग्योद्वासनादि ज्योतिष्टोमवत् । प्रणयने चोपर्यग्नौ धार्यमाण ऊर्णावन्तमित्यभिज्ञाय परिधयः संभाराः, सर्वं ज्योतिष्टोमवत् । द्वितीयो विधिरश्र( स्र )वणार्थायाः ।

अपि वोत्तरवेद्यामुपर्यग्नौ धार्यमाणे पशौ सोमे च प्रजापतिस्त्वेत्युत्तरवेदिमभिमृशति । ततो व्याघारणप्रभृति संभारनिवपनान्तं कृत्वेत्येवमादि प्रक्षिपति । तृतीयो विधिः । चतुर्थ्य(र्थोऽ)पिवा तिस्रः स्वयमातृण्णास्तासामुपधानकल्प उत्तरवेद्यां कृतायां सोमे पशौ वा पूर्ववत्प्रणयनाद्यारोहणे कृते स्वयमातृण्णां प्रकृतिवत्सामान्तां कृत्वा पृष्ठो दिवीति पुरीषक्षेपः । स्वयमातृण्णायामेवं विहितायां तेनैव प्रकारेण सा द्वितीयसामान्ता द्वितीया । ततः पुरु(री)षविधानेन तृतीया । तस्याः पुरीषं चितिक्लृप्त्याद्यश्वपरिणयनान्तं पुरीषवर्जं पञ्चमो विधिः ।

अपि वा तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिषस्तासामुपधानविधिः । पूर्ववत्सर्वं कृत्वा स्वयमातृण्णायां सामान्तायां कृतायां पुरीषमथ विश्वज्योतिः प्रथमेन मन्त्रेण । अथ स्वयमातृण्णा द्वितीयाऽपि, सामान्तां स्वयमातृण्णां कृत्वा पुरीषम् । विश्वज्योतिर्द्वितीयेन मन्त्रेण तृतीयस्यां स्वयमातृण्णायामुपधीयमानायां विश्वज्योतिः प्रथमा तृतीयेन मन्त्रेण । अथ स्वयमातृण्णा तृतीया सामान्ता । अथ पुरीषम् । ततश्चितिक्लृप्त्याद्यादि पुरीषवर्जमश्वपरिणयनान्तं कृत्वा प्रथमाचितिवत् । एवं पशौ । सोमे तु विधिः पूर्वोक्तः । चयने त्वष्टौ लोकंपृणा उत्तरवेदिपरिमाणा उपधीयन्ते । प्रणयनादि पूर्ववत्कुर्यात् । ततः पुरीषं–पृष्टो दिवीति । तत एकादश लोकंपृणा उत्तरवेदिपरिमाणाः पुरीषं च । ततो द्वादश लोकंपृणा उत्तरवेदिपरिमाणाः पुरीषं च । ततश्चितिक्लृप्त्यादिचित्यन्तं पुरीषवर्जमश्वपरिणयनान्तं प्रथमचितिवत् । अश्र(स्र)वणार्थायां सोमे क्रियमाणायां लोकंपृणाविधिमेवेच्छन्त्यन्ये । नान्यम् । इतरो विधिः पशावेवेति । अनग्निचित्यात्पुनश्चितित्वसामान्यात् । प्रथम(मा)विकारत्वात् । भाष्यकारस्तु य उक्तो विधिः सर्वत्र न प्रथम(मा)विकारत्वमिति षष्ठो विधिरश्र(स्र) वणार्थायाम् । समृद्ध्यर्थायां द्वितीयमग्निं चिन्वानो द्वितीयस्यां चितौ षोडशेष्टका अवशिष्टा येनर्षय इत्यष्टौ नानामन्त्रा अष्टौ च लोकंपृणा अथ पुरीषम् । ततश्चितिक्लृप्त्यादिचित्यन्तं पुरीषवर्जं द्वितीयचितिवत् ॥ २९ ॥

श्वोभूतेऽष्टौ नानामन्त्रा एकादश लोकंपृणाः । अथ पुरीषम् । श्वोभूते एता नानामन्त्रा द्वादश च लोकंपृणाः । अथ पुरीषम् । अथ समृद्ध्यर्थां व्याख्यास्यामः । अग्निं चित्वा य एतस्मिन्संवत्सरे नर्ध्नोति । स क्रतुमारभमाणस्त्रिचितीकमग्निं चिन्वीत । सलिलाय त्वा सर्णीकाय त्वेत्यष्टौ नानामन्त्रा एकादश च लोकंपृणाः । अथ पुरीषम् । श्वोभूत एताश्च नानामन्त्रा द्वादश च लोकंपृणाः । अथ पुरीषम् । श्वोभूत एताश्च नानामन्त्रास्त्रयोदश च लोकंपृणाः । अथ पुरीषम् । संतानार्थायां तु तृतीयमग्निं चिन्वानस्तृतीयस्यां चितौ येनर्षय इत्यष्टौ च नानामन्त्रा अपरिमिताश्च लोकंपृणाः । अथ पुरीषम् ॥(ख० १९)॥२६॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्ने सप्तमः पटलः ।

ततः श्वोभूत एकोनविंशतिरिष्टका अवशिष्टा येनर्षय इत्यष्टौ नानामन्त्रा एकादश लोकंपृणाः पुरीषान्तम् । ततश्चितिक्लृप्त्यादिचित्यन्तं पुरीषवर्जं तृतीयचितिवत् । ततः श्वोभूते च विंशतिरिष्टका अवशिष्टा येनर्षय इत्यष्टौ नानामन्त्रा द्वादश च लोकंपृणाः पुरीषमुपधाय चितिक्लृप्त्यादिचित्यन्तं चतुर्थीतुल्यः पुरीषवर्जमेष समृद्ध्यर्थायाः । संतानार्थायास्तु चितिरुच्यते । तृतीयमग्निं चिन्वानस्तृतीयस्यां चितौ नानामन्त्रा उपधाय येनर्षय इत्यष्टावुपदधाति । उत्तरवेद्यामग्नावेव नान्यत्रेति उत्तरवेदिग्रहणं क्रियते पुनः पुनः । ततो यथार्थं लोकंपृणाः पुरीषं, चित्यन्तं च पुरीषं तृतीयचितिवदेषा संतानार्थायाः ।

अथो खल्वाहुर्ब्रह्मवादिनो न चेतव्या पुनश्चितिः, इति सूत्रान्तरे च समृद्ध्यर्थायाः सांतानार्थायाश्च काम्यत्वादेवानित्यत्वं बोध्यम् । अश्र(स्र)वणार्था तु नित्या प्राप्ता । सर्वा ह्याहुतीः सवीर्या इच्छन्ति तस्याः प्रतिषेधो विकल्पार्थः । तामपि चिनोति विकल्पेन । एष रुद्रः सर्वाग्निचित्यायाः । यथा व्याघ्रः सुप्तो बोध्यते तथेयं (थाऽयम्) स्रवणार्थायां क्रियमाणायां बोध्यते । अतो न चेतव्या । अन्ये त्वाहुश्चेतव्येति । यथा ब्राह्मणः श्रेयान्धनं प्रयच्छन्तं बोधयति सुप्तमपि तथाऽत्रापि रुद्रस्येज्या क्रियते ॥

(नन्वग्निचिद्व्रतानि 'वर्षति न धावेत्' ( जै०सू०९–२–१० ) इत्यादीनि चयनानन्तरमेव भवन्ति क्रत्वन्ते वेति संशये

धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् ।
व्रतान्यतः प्रवर्तेरन्नाऽऽहिताग्निव्रतादिवत् ॥

नैवम् ।

भावनाया निमित्तत्वं धातुस्तदुपसर्जनम् ।
तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते ॥

न ह्यत्र चयनस्वरूपनिर्वृत्तिर्निमित्तं तत्करणिका त्वाग्निकार्मिका भावना भूता निमित्तं तस्याश्चाग्न्युपकारो भाव्यः । सोऽपि च क्रतु साध्यतोऽग्नेर्धारणं तच्चाऽऽ क्रतुसमाप्तेर्विततं न ततः प्राङ्निवृत्तं भवति तन्निवृत्त्या च विना न भावनानिर्वृत्तिः फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निगतमदृष्टं भाव्यम् । तच्चानन्तरमेव निर्वृत्तमिति विशेषः ) ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्ने सप्तमः पटलः ॥

१ ( ) धनुश्चिह्नान्तर्गतग्रन्थः ( १६–७– ) सूत्रव्याख्यानान्ते योजनीयः ।

अथ द्वादशप्रश्नेऽष्टमः पटलः ॥

अथ कानिचित्काम्यचयनानि दर्शयति-

काम्यानग्नीन्व्याख्यास्यामः । तेषामाकृतिविकारा ब्राह्मणव्याख्याताः ॥ १ ॥

तान्व्यक्तं वक्ष्याम इत्यर्थः ॥ १ ॥

अर्थसंयोगश्चानियमश्च तत्प्रयोगे छन्दश्चितं चिन्वीत पशुकाम इति । यानि प्रकृतौ छन्दांसि तैरग्निं चिन्वीत । अष्टौ गायत्रीः । मूर्धन्वतीः पुरस्तादुपदधाति ॥ २ ॥

अग्निर्मूर्धा दिवः ककुदित्यनुवाकोक्ता नानाछन्दोयुक्ता मन्त्रास्तैरेव चितो न तु यजुर्भिरिति च्छन्दश्चितस्तादृशमग्निं पशुकामश्चिनुयात् ।

अथ वा— छन्दश्चितमिति काम्या गुणविकारास्ते शुल्बेऽनुक्रान्ता इह प्रथम इत्युपदिशन्ति (सूत्रकाराः) । छन्दश्चित्सर्वैश्छन्दोभिः सर्वाणि च्छन्दांसि यजुष्मतीनां स्थाने गायत्र्यादिभिः प्रकृतौ छन्दोभिश्चीयते यजुष्मत्यो न क्रियन्ते । एवं यजुष्मतीनां स्थानेऽन्यानि च्छन्दांसि भवन्ति ॥ २ ॥

श्येनचितं चिन्वीत सुवर्गकाम इति । वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति ॥ ३ ॥

स्वर्गकामार्थो यजमानः श्येनाकृतिं चिनोति । 'श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति' (तै० सं ५. ४-११) इति । वयसां मध्ये श्येनोऽतिशीघ्रं पतितुं समर्थः । श्येन एव श्येनवच्छीघ्रगाम्येव ॥ ३ ॥

कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामिति । कङ्काकृतिर्निरायतग्रीवः शीर्षण्वान्भवति ॥ ४ ॥

कङ्क इव चीयत इति श्येनभेद एव । अयं पक्षी वर्षायामी पक्षौ पुच्छाद्वक्रौ सन्नं पुच्छं दीर्घ आत्मा मण्डलशिरश्च । शीर्षण्वानिति । प्रशस्तशिरस्कः । प्रभूतत्वेनोच्छ्रितत्वं शिरसः प्रशस्तत्वम् ॥ ४ ॥

अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकाम इति चतस्रश्चतस्रः सीताः संहिताः कृषति ॥ ५ ॥

अलजो नाम भासाख्यः कङ्कसमानाकृतिः पक्षिविशेषः । स इव चीयत इति क्विप् । चतुःसीतमिति द्वादशत्वस्य प्रत्याम्नानाच्चतुष्ट्वम्, निम्नाणां स्थान एकैका॥५॥

प्रउगचितं चिन्वीत भ्रातृव्यवानिति शकटाकृति- भर्वति ॥ ६ ॥

प्रउगमनोमुखम् । यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं चतुरश्रां कृत्वा पूर्वस्याः करण्या अर्वाच्छ्रोणी प्रत्यालिखेत् । लेखयोरन्तः प्रउगाकारो दृश्यते । तद्दिव चीयत इति ॥ ६ ॥

उभयतःप्रउगं चिन्वीत यः कामयत प्रजातान्भ्रा- तृव्यान्नुदेय प्रतिजनिष्यमाणानित्युभयतः शक- टाकृतिर्भवति । यथा विमुखे शकटे ॥ ७ ॥

प्राक्पश्चाच्च शकटमुखसदृशमुभयतः प्रउगम् । तेनोत्पन्नान्भ्रातृव्यान्विनाशयति । उत्प- त्स्यमानानामुत्पत्तिं प्रतिबध्नाति ॥ ७ ॥

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति परिमण्डलो भवति ॥ ८ ॥

रथचक्रवद्वर्तुलत्वेन चीयत इति रथचक्रचित् । यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वेत्यापस्तम्बबौधायनौ ॥ ८ ॥

द्रोणचितं चिन्वीतान्नकाम इति द्वयानि तु खलु द्रोणानि चतुरश्राणि परिमण्डलानि च तत्र याथा- कामी ॥ ९ ॥

द्रोणे हि धान्यं भरन्त्यतो धान्यस्थानसहितमन्नं प्राप्नोति ॥ ९ ॥

पश्चात्त्सरुर्भवत्यनुरूपत्वायेति ॥ १० ॥

विज्ञायत इति शेषः ॥ १० ॥

समूह्यं चिन्वीत पशुकाम इति समूहन्निवेष्टका उपदधाति ॥ ११ ॥ दिक्षु चात्वालात्खात्वा तेभ्यः पुरीषमभ्यूहतीत्येकेषाम् ॥ १२ ॥

समूहमर्हतीति समूह्यः ॥ ११ ॥ १२ ॥

परिचाय्यं चिन्वीत ग्रामकाम इति मध्यमा१ स्त्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति

१ घ. चतुरश्रं ।

॥ १३ ॥ सपरिचाय्योपचाय्यं चिन्वीत ग्रामकाम इति परिचाय्येनोक्तः ॥ १४ ॥

मध्यमां स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति स परिचाय्य इत्यापस्तम्बोक्तम् । परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवतीति श्रुतेः । उपचाय्यं ग्रामकामस्य मध्यमायां चितौ मध्यमां स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति । नात्र दिश्याः क्रियन्ते ॥ १३ । १४ ॥

श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति चतुरश्रः परिमण्डलो वा । यथा महापैतृकी वेदिरित्येकेषाम् । त्र्यश्रिरित्येकेषाम् ॥(ख०२०)॥१५॥

श्मशानमिव चीयत इति श्मशानचित् श्मशानं शवदहनम् । यः कामयेत पितृलोके भूतिः स्यादिति । पितरो बर्हिषदादयस्तेषां स्थाने भूतिरस्य भवतीति । स तु मण्डलश्चतुरश्रो वा । व्याख्याता चातुर्मास्येषु महापैतृकी वेदिः । अन्यत्स्पष्टम् । तदेवं काम्यचयनानि समापितानि ॥ १५ ॥

तापश्चितं व्याख्यास्यामः ॥ १६ ॥

व्यक्तं वक्ष्याम इत्यर्थः ॥ १६ ॥

संवत्सरं दीक्षितो भवति ॥ १७ ॥

द्रोणचितस्तु भवतीति सर्वस्या अस्या भूमेर्देशे तपश्चिन्वन्तीति तपश्चितः कक्षीवदादयस्तैर्दृष्टस्तापश्चितः, तस्मिन्नग्नौ संवत्सरदीक्षा नियमेन भवतीति ॥ १७ ॥

संवत्सरे पर्यागते राजानं क्रीणाति ॥ १८ ॥

प्रायणीयप्रभृतिकर्म प्रतिपद्यत इत्यर्थः ॥ १८ ॥

पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं संवत्सरमुपसदोऽनुपसदमग्निं चिनोति ॥ १९ ॥

उपसदोऽपि न प्रवर्ग्याः । यच्चतुर्विंशतिकृत्वः प्रवर्ग्यं प्रवृणक्ति परत्वश्रुतेर्भरद्वाजमताच्च । भाष्यकारस्तु—प्रवर्ग्योऽपि संवत्सरमेवेति पुरस्तादुपसदां मदन्तीभिर्मार्जने कृते पञ्चहविष्कमाग्नेय ऐन्द्रो वैश्वदेवो बार्हस्पत्यश्चरुर्वैष्णवस्त्रिकपाल इति । तस्यास्तदेव प्रस्तरपरिधिभिस्तीर्णपक्षे याः कृत इ(मि)तिवचनात् । अस्तीर्णपक्षेऽन्यच्चतुरश्चतुरो मासानेकैकेनोपसन्मन्त्रेण हूयते । उपसदमुपसदं कृत्वाऽग्निचयनं यथासंभवमिष्टकाः ॥ १९ ॥

प्रवर्ग्येण प्रचर्योपसदा चरन्तीत्येष विधिरुच्यते—

द्वौ द्वौ मासावेकैका चितिश्चतुर उत्तमा त्रीन्मासाश्चतुस्तनानि व्रतानि भवन्ति । एवं त्रिस्तनानि द्विस्तनानि एकस्तनानि ॥ २० ॥

द्वौ द्वौ मासावेकैका चितिरुपधीयते, यथासंभवन्तीष्टकाः, चतुरस्तु मासानुत्तमा चितिः । पञ्चमी चतुस्तनेन त्रीन्मासानेवं त्रिस्तनादीनि ॥ २० ॥

यदृषीणामाग्नेयं सूक्तं तेन संवत्सरं चिन्वीत ॥२१॥ यानि दशतयीष्वाग्नेयानि सूक्तानि तेषामेकैकेन सूक्तेनैकैकामिष्टकामुपदधाति ॥ २२ ॥ सूक्तपरिमाणा नानामन्त्राः । यथार्थं लोकंपृणाः ॥२३॥

ऋषीणामाग्नेयेन संवत्सरमुपधानं कुर्वन्नान्ते श्रुतिरेवं निर्णयं करोति—यदृषीणामार्षेयेषु । आग्नेयमग्निदेवत्यं, यद्येषा याज्ञि(ज्ञ)सेनी चितिरिति चितित्वसामान्यात् । चितेश्चितेर्नानामन्त्राणां स्थाने पूर्वोक्तेन न्यायेन भवन्ति लोकंपृणाश्च । लोकंपृणानां स्थाने यथार्थमिति । अथ पुरीषमिति प्रकृतिक्रमेणैव पञ्चस्वपि चितिषु ॥ २१ ॥ २२ ॥ २३ ॥

आवृत्तासूपसत्सु तृतीये संवत्सरेऽभिजिता विश्वजिता वा यजेत । सहस्रदक्षिणाः सर्ववेदसं व्याख्यास्यामः । परिवासं परिवासम् ॥ ॥ (ख० २१) ॥ २४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्नेऽष्टमः पटलः

इति सत्याषाढहिरण्यकेशिसूत्रे द्वादशप्रश्नः ॥

---

तृतीये तु संवत्सरे जाते, अभिजिद्विश्वजिद्वा । पर्वाणि (यजेत) श्रुत्यन्तरात्सर्ववेदसं विश्वजित्संयोगेनेति न्यायः । तत्र सर्ववेदसमुपरिष्टां नाभिजितिवत्संच्छ(दि) विप्रभृति च विश्वजिद्धर्माः । सर्ववेदसदक्षिणाऽस्येति च्छन्दोगब्राह्मणम् । अभिजिद्विश्वजितोः सर्ववेदसधर्मा इति भाष्यकृत् । अभ्यासः प्रश्नसमाप्त्यर्थः ॥ २४ ॥

संक्षिप्य नानाविधयाऽल्पशब्दगैः सूत्रैः समर्थैरतिगूहिताशयैः ।
न्यायाननेकांस्तु वितन्वता जडोऽप्यहं स्वसूत्रार्थविवेचकः कृतः ।
तस्मै नमोऽस्तु हिरण्यकेशिने दुर्ग्राह्यवेदाम्बुधिपारदृश्वने ।
स मे स्वसूत्रार्थगतिं कृपाम्बुधिर्दिशत्वजस्रं जडतां प्रणोदयन् ।

प्रयोगवैजन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
न्यायसूत्रस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्ट्यऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यत्ततः कृतम् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां द्वादशप्रश्नेऽष्टमः पटलः ॥

इति द्वादशप्रश्नव्याख्या समाप्ता ।

अथ त्रयोदशप्रश्नप्रारम्भः ।

---

तत्र प्रथमः पटलः ।

---

विनेययुक्ताखिलसिद्धवर्यलसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥
गुरुं गणपतिं नौमि जन्मज्ञानप्रदौ तथा ।
सह गौर्या महेशानं नौमि विष्णुं च पद्मया ॥
एकादशद्वादशयोर्व्याख्यातश्चयनक्रतुः ।
वाजपेयराजसूयौ वक्ष्येते तु त्रयोदशे ॥

एवं तावत्सर्वैज्योतिष्टोमः ( स० श्रौ० १-१ ) इति सूत्रकृन्न्यायसूत्रे प्रदर्शितः ' सर्वकामोऽग्निष्टोमः ' ( स० श्रौ० ७-१ ) इत्यादिना सूत्रकारेणाग्निष्टोमशब्देन वक्ष्यमाणसर्वैकाहाहीनसत्रमूलप्रकृतिभूताग्निष्टोमसंस्थां व्याख्यायोक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः ( स० श्रौ० ७-१८ ) पञ्च संस्थाश्च व्याख्याताः । अथेदानीं षोडशिगुणविकारभूतामवशिष्टामेकां वाजपेयसंस्थां व्याख्यातुं शिष्यावधानाय प्रतिजानीते—

**शरदि वाजपेयेन यजेत ॥ १ ॥**

वाजो देवान्नरूपः सोमः पेयो यस्मिन्यागे स वाजपेय इत्येकं निर्वचनम् । यस्मादेतेन यज्ञेन देवा वाजं फलरूपमन्नमाप्तुमैच्छंस्तस्मादन्नरूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरं निर्वचनम् । वाजपेय इति कर्मनामधेयम् । न हि द्रव्ये गुणे वा प्रसिद्धिरस्य । स च शरदि भवति । शरदि वाजपेयेन यजेत, इति सूत्रान्तरेऽपि वचनात् ।

अत्र संभारानाह बौधायनः—'वाजपेयेन यक्ष्यमाणो भवति । स उपकल्पयते कृष्णाजिनꣳ सु( सौ )वर्णर( रा ) जतौ च रुक्मौ बस्ताजिनꣳ शतमानꣳ हिरण्यꣳ सप्तदश सुवर्णानि कृष्णलानि हिरण्यपात्रं मधोः पूर्णमौदुम्बरीꣳ रथचक्रꣳ सप्तदशारꣳ सप्तदशफलकां च श्रितिं यूपं च तूपरं चतुरश्रिꣳ सप्तदशारत्निं गोधूमकलापीमुष्णीषं नैवारꣳ सप्तदशशरावꣳ सप्तदशोपपुटान्सप्तदश वायव्यानि सप्तदश पृथुबुध्नानुपयामान्रुतं च वालं च सप्तदश निष्कान्सप्तदश वसनानि सप्तदश वासोभारान्सप्तदश रथान्सप्तदश दुन्दुभीन्सप्तदश हस्तिनः सप्तदश दास्यः सप्तदशानाꣳसि युक्तानि सप्तदश गवाꣳ शतानि वयसो वयसो वा सप्तदश सहस्रं वा । तस्मिन् हि सर्वाणि वयाꣳसि भवन्ति । चतुर्विꣳशतिं पशूनेकपञ्चाशतमश्वान्खादिरीं वितृण्णीं वध्रैर्व्यूताम् । प्रज्ञाता आग्निष्टोमिकाः संभाराः । स ग्रीष्मस्य जघन्यꣳ ह्यहस्सु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षते' ( बौ० श्रौ० ११–१ ) इति । वाजपेयौ द्विप्रकारौ, आप्तवाजपेयः कुरुवाजपेयश्च । अस्मिन्क्रतौ नाग्निचयनम् । चिन्वीत वाजपेयेऽग्निमिति बौधायनः । न चिन्वीतेति शालीकिः ( बौ० द्वै० सू० २२–१२ ) इति प्रतिषेधवचनात् । केचिदत्रापीच्छन्तीति च्छन्दोगमताच्चयनं कार्यमिति । ज्योतिष्टोमसंस्थाभूतोऽपि वाजपेय इति वैखानसोक्तेः । आपस्तम्बेन तु क्रत्वन्तरत्वेन वाजपेय उक्तः । क्रत्वन्तरत्वं वाजपेयस्य द्विप्रकारत्वं च । तत्राऽऽप्तवाजपेयः प्रथम उच्यते ॥ १ ॥

तत्र वाजपेयेऽधिकारविधिमुन्नयति—

**ब्राह्मणो राजन्यो वा ॥ २ ॥**

यतो बृहस्पतिनाऽनुष्ठितः, यतो देवानां मध्ये बृहस्पतिर्ब्राह्मणजात्यभिमानी । ब्राह्मणबृहस्पत्योर्ब्रह्मसंबन्धादैकरूप्यम् । ब्रह्मास्तीति वेदो वा ब्राह्मणः इति व्युत्पत्तेः । इन्द्रेणाप्यनुष्ठितः । यतो देवानां मध्य इन्द्रः क्षत्रियजात्यभिमानी । इन्द्रराजन्ययोः क्षत्रसंबन्धादैकरूप्यम् । क्षत्रं नाम बलं तत्सद्भावादुभयोः ; अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारो नतु वैश्यस्य । अत एवाऽऽपस्तम्ब आह—'शरदि वाजपेयेन यजेत । ब्राह्मणो राजन्यो वार्द्धिकामः' ( आप० श्रौ० १८–१ ) इति ॥ २ ॥

**तस्य षोडशिना कल्पो व्याख्यातः ॥ ३ ॥**

तस्य वाजपेयस्य षोडशिवत्कल्पो विधिः । षोडशिनो विद्यमानत्वात् । प्रयोजनं सोमविक्रयकाले— शुण्ठ्याऽश्लीलोवकर्ण्या सोमं क्रीणाति, इति । अथवा—सप्तदशदीक्षापक्षे शरदि दशम्यामुपक्रमः । त्रयोदशदीक्षापक्षे चतुर्दश्यामुपक्रमः । उभयोः पर्वणोः

१ क. श्रुतिमिति पाठः

सुत्या भवति । अथ प्रातरग्निहोत्रᳪं हुत्वाऽऽस्तेन वाजपेयेन यक्ष्य इत्युक्त्वा प्रजापतिमवाप्नवानीत्युक्त्वा फलनिर्देशः । ऋद्ध्यर्थमिति वा । नित्यो वा नित्यवदेके समामनन्ति, इति वचनात् । नित्ये च नित्यवत्फलनिर्देशः । अन्नार्थमिति वा । विद्युदसि सोमप्रवाकवरणादि षोडशिवत् । सोमक्रयणकाले शुण्ठ्या क्रयणम् । एषेति निर्देशः, तस्या आत्मा भूयो वाऽतः, इति सोमविक्रयिणोक्तेः । एकोनशतेन ते क्रीणानीति विशेषः । अस्मे ज्योतिरित्यादि ॥ ३ ॥

**सप्तदशः सर्वो भवति ॥ ४ ॥**

सर्वस्तोमानि सप्तदशस्तोमानि भवन्ति ॥ ४ ॥

अथवा फलसंयोगश्रुतेर्वा कल्प्यं फलमाह—

**प्रजापतिमाप्नोति ॥ ५ ॥**

प्रजापतिमाप्नोतीति । प्रजापतिस्थानमाप्नोति । प्रजापतिर्वा भवति ॥ ५ ॥

**सप्तदश दीक्षाः । तिस्र उपसदः । एकविंशतिं(शीं) प्रसुतः ॥ ६ ॥**

सोमो भवतीति प्रतिपद्यारम्भः । एकविंशतिरात्रं प्रत्यभिषुतः सोमो भवतीति त्रित्वविधानाच्चोपसदां नाग्निचित्येत्यर्थः । छन्दोगमतात्तस्मिन्पक्ष एकविंशीमित्यनुवादो ब्राह्मणपाठात् । तस्य त्रयोदश दीक्षास्तिस्र उपसदः सप्तदश्यां प्रसुतः । अपि वा सप्तदश दीक्षास्तिस्र उपसद एकविंशत्यां प्रसुतः । अपि वा तिस्र एव दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः ( बौ० श्रौ० ११-१ ) इति बौधायनसूत्रम् । एकविंशीमिति वा कल्पान्तरम् । तथा चतुर्दश दीक्षाः षडुपसद एकविंशीं प्रसुतो नाग्निचयनमेव ॥ ६ ॥

**सप्तदशारत्निर्यूपो बैल्वश्चतुरश्रः खादिरः पालाशो वा गोधूमपिष्टचषालोऽपि वा तूपरः ॥ ७ ॥**

सप्तदशारत्निर्बैल्वो यूपः कार्यः । खादिरो वा पालाशो वा विकल्पः । औदुम्बरश्चषालोऽपि चतुरश्रो नाष्टाश्रिः । प्रतिदिशं चतस्रोऽश्रयः । गोधूमं चषालमिति चोभयथा श्रुत्यर्थोपपत्तेर्विकल्पः । गोधूमपिष्टचषाले तु बहुप्राकृतं लभ्यतेऽश्रियादिकम् । अथवा—प्रवर्ग्येण प्रचर्योपसदा चरन्तीत्यादि यूपकाले खादिरं यूपं करोति, बैल्वं वा सप्तदशारत्निर्भवति चतुरश्रिः, गोधूमपिष्टेन चषालः । नास्त्यतिरिक्तं तूपर इति श्रुतेः । यूपस्य स्वरवस्त्रयोविंशतिः । एक एव यूपः । केचित्क्रतुपशूनामेकमेव स्वरुं कुर्वन्ति । तदैकविंशतिरेव । यदा प्रतिपशु तदा त्रयोविंशतिः ॥ ७ ॥

**यत्प्रागुपसद्भ्यस्तस्मिन्कृते प्रतिप्रस्थाता सुरायाः कल्पेन परिस्रुतᳪं सुराᳪं संदधाति ॥ ८ ॥**

---

१ ख. सोमक्रयकाले ।

या ते अग्ने रुद्रिया तनूरिति मार्जनान्ते कृते प्रतिप्रस्थाता सुरां संदधाति, यज्ञार्थे सुरां कल्पयतीत्यर्थः । लौकिकी वा पयोग्रहा वा सौत्रामणीवत् । कलौ मद्यपाननिषेधात् । सौत्रामणीवदैष्टिकी वा सौमिकी वा । ऐष्टिकी सौत्रामण्यां प्रपञ्चिता तद्वदिह सौमिकी क्रि(क्र)यादिधर्मयुक्ता । ऐष्टिकी सोमे(सीसे)न क्लीबादि त्यादि तदानीमेव कृत्वा सुरेष्ट्या-दिसंधानान्तम् । अत्र प्रजापतये त्वा जुष्टं निर्वपामीति क्षौमादि सौत्रामणीवत् । लौकिकी वा । सौमिकीपक्षे क्रयादिधर्मा नार्थलुप्ता भवन्ति । सुराप्रकृतिर्द्रष्टव्या (तित्वाद्धि शष्प)दौ सोमग्रहैकवाक्यत्वात्सोमग्रहाश्च सुराग्रहाश्चेति श्रुतेः । वेदिमानकाले द्विपदप्रक्रमेण वेदिमानम् । सदो विमानकाल ऐन्द्रमसीति पञ्च च्छदींषि, विश्वजनस्य च्छायेति पञ्च, इन्द्रस्य सदोऽसीति सप्त, वैष्णवं खनामीत्येकवदुपरवमन्त्राः । खनने कृते तेन(तरे)न पांसुभिः प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्याधस्तात्पश्चादक्षं सुराग्रहार्थं द्वितीयं चतुरश्रं खरं करोति । चात्वालाद्धिष्णियानुपवपतीत्यादि ॥ ८ ॥

**रशनाकाले सप्तदशभिर्वासोभिर्यूपं परिवेष्टयति ॥ ९ ॥**

अग्नीषोमीयस्य पशोः काल आगते, अणिमतः स्थविमतः प्रवीयेति कृत्वा सप्त-दशवासोभिर्यूपं परिवेष्टयति । प्रसारयतीत्यर्थः । अग्निष्ठस्य द्वाभ्यां रशनाभ्यां परिव्य-यणमिति केचित् ॥ ९ ॥

**अग्नीषोमीयस्य पशुपुरोडाशं निरुप्य देवसुवा-हवींष्यनुनिर्वपति–अग्नये गृहपतय इति यथा-समाम्नातम् । पशुपुरोडाशस्य देवसुवां च हवि-षाः समानः स्विष्टकृदिडम् ॥ १० ॥**

एतत्तन्त्रं भवत्येव ॥ १० ॥

अथ कर्मादौ सावित्रहोममाह—

**देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति सवनादौ सवनादौ जुहोति ॥ ११ ॥**

वीप्सया सर्वकर्मादौ कर्तव्यत्वमभिधीयते । येषां कर्मणामादौ सावित्रहोमः कर्तव्य-स्तानि कर्माणि ब्राह्मणेन संगृहीतानि–'सवने सवने जुहोति' ( तै० ब्रा० १–३–९ ) इति । तत्तत्कर्मादौ बौधायनेनोदाहृतम्–'दीक्षणीयां निर्वप्स्यन्सावित्रं जुहोति । दीक्षा-हुतीर्होष्यन्सावित्रं जुहोति । प्रायणीयां निर्वप्स्यन्सावित्रं जुहोति' ( बौ० श्रौ० ११–२ ) इति । स्वदाति नः स्वाहेत्यन्तः । सविता देवता ॥ ११ ॥

**हिरण्यमालिन ऋत्विजः सुत्येऽहनि प्रचरन्ति ॥ १२ ॥**

महारात्रे बुद्ध्वाऽऽरभ्य सुत्यस्यर्त्विजो हिरण्यमालिनो भवन्ति । यजमानोऽपि

हिरण्यमालीति केचित् । केचित्सदस्यस्य नेच्छन्ति । सदस्यो नित्यः । सदस्यः सप्तदशः पृथग्वृणीतेति च्छन्दोगवचनात् ॥ १२ ॥

पात्रसꣳसादनकाले यथार्थं पात्राणि प्रयुनक्ति । ऐन्द्रस्यातिग्राह्यपात्रस्य स्थाने पञ्चैन्द्राण्यतिग्राह्यपात्राणि प्रयुनक्ति ॥ १३ ॥ ( तेषां पूर्वेण ) तेषामैन्द्रेणातिग्राह्यपात्रेण कल्पो व्याख्यातः ॥ १४ ॥ षोडशिपात्रं प्रयुज्य सप्तदश प्राजापत्यानि सोमग्रहपात्राणि प्रयुनक्ति ॥ १५ ॥ तेषाꣳ षोडशिपात्रेण कल्पो व्याख्यातः । पश्चादक्षं प्रतिप्रस्थातोपयामानि सप्तदश सुराग्रहपात्राणि क्रतुकरणो यथाऽतिरात्रे सोमग्रहकाल उपयामगृहीतोऽसि नृषदं त्वेति पञ्चभिरैन्द्रस्यातिग्राह्यस्य स्थाने पञ्चैन्द्रानतिग्राह्यान्गृह्णीयात् ॥ १६ ॥ तेषामैन्द्रेणातिग्राह्येण कल्पो व्याख्यातः । षोडशिनं गृहीत्वा सप्तदश प्राजापत्यान्सोमग्रहान्गृह्णाति ॥ १७ ॥ तेषाꣳ षोडशिना कल्पो व्याख्यातः । कुविदङ्गेति सर्वेषामेका पुरोरुगया विष्ठा जनयन्कर्वराणीति ॥ (ख० १) ॥ उपयामैः प्रतिप्रस्थाता सप्तदश सुराग्रहान् । विपरीते ग्रहण्यात्रेके समामनन्ति ॥ १८ ॥ व्यतिषङ्गं गृह्णीतः पूर्वोऽध्वर्युरपरः प्रतिप्रस्थाता । पुरोक्षꣳ सोमग्रहान्सादयाति । पश्चादक्षꣳ सुराग्रहान् ॥ १९ ॥

पात्रसंसादनकाले प्राप्ते, ऐन्द्रातिग्राह्यपात्रं पात्रप्रयोगात् । ऐन्द्रं प्रयुता(ज्य) तस्योत्तरतः पञ्च पात्राणि प्रयुनक्ति । तेषां कल्पो व्याख्यातो वृक्षस्थानादिः सौर्यातिग्राह्यपात्रप्रयोगादिः । षोडशिपात्रं प्रयुज्य प्रजापतिदेवत्यानीति संकल्प्य, हो(सो)मग्रहार्थानि प्रयुनक्ति[1] । तेषां मतकल्पे वृक्षनियमश्चतुरश्रता च । अपरस्मिन्खरे सुराग्रहार्थे प्रयुनक्ति सप्तदशोपयामान्यूर्ध्वपात्राकृतीनि शुल्वकोशाकृतीनि तेजन्तरकृतीनि वा प्रयुनक्ति । ग्रहं गृह्णाति परिप्लवया प्रयोगादि ऐन्द्रातिग्राह्यातिग्रहणात्कृत्वा—उपयामादीनि गृह्णाम्यन्तराणि त्रीणि यजूंषि ग्रहणार्थानि । ये ग्रहा अपाꣳ रसमुद्वयसामिति द्वे उपरिष्टादुपयामया, उप-

१ क. तेषां मतं°। ख. तेषामत्र क°।

यामगृहीतोऽसीत्येवमन्ते एवमपञ्चभिर्मन्त्रैः पञ्चातिग्राह्यान् गृह्णाति । एष ते योनिरिलाय त्वेति गृहीत्वोपसादयति । तेषां कल्पोग्रहावकाशादि(र्ग्र)ऐन्द्रवत् । षोडशिनं गृह्णाति अया विष्ठा इति गृह्णामीत्यन्तया । (एवं) सप्तदशापि गृह्णाति । एष ते योनिः प्रजापतये त्वेति सादयति । सोमग्रहा इति ते नाम तेषां कल्पे सानुमन्त्रणादि षोडशिवत् । कुवि-दङ्गेति गृह्णाति । अपरस्मिन्सुराग्रहार्थे खरे उपयामैः पूर्वैश्च(वैश्च) तैः पात्रैः सुराग्रहा-न्गृह्णाति । कुविदङ्गेत्यनुपयामया । ओषधिविकारत्वेऽपूर्वत्वे च । सोमविकारत्वे सोप-यामया विपरीतेनाऽऽमनन्ति । कुविदङ्गेति सोमग्रहणात् । अया विष्ठा इति सुराग्रहाणा-मुपयामसादने सोमग्रहेष्वेव । नौषधिविकारत्वेऽपूर्वत्वे च सुराग्रहाणां सोमविकारत्वं तूपयामसादनं च तन्मन्त्रवद्भवति व्यतिषङ्गः । गृह्णात्यध्वर्युः सोमग्रहान्प्रतिप्रस्थाता सुराग्रहान् सप्तदशापि पूर्वोऽध्वर्युः पश्चात्प्रतिप्रस्थाता । एवं नियमः परोक्षं सोमग्रहा नित्यानुवादः । यथायतनं ब्राह्मणपठितत्वात् ॥ १३॥ १४॥ १५॥ १६॥ १७॥ १८॥ १९॥

**पशुकाले त्रीन्क्रतुपशूनुपाकरोति । मारुतीं पृश्निं वशामुपाकरोति । सारस्वतीं च । मेषीमपन्नद-तीम् । मेषमित्येकेषाम् । सारस्वतीं च मेषम् ॥ २० ॥**

पशुकाले प्राप्ते त्रीन्क्रतुपशूनुपाकृत्य, आग्नेयमैन्द्राग्नमैन्द्रं वृष्णिमुपाकृत्य समुच्चय-दर्शनान्नाऽऽग्नेयं पशुमिति सूत्रान्तरे । मारुती वशा वन्ध्या गौः । सरस्वतीदेवता च मेषी ' वाग्वै सरस्वती ' ( तै० ब्रा० १–३–४ ) इति वाक्यशेषात् । अपन्नदतीमप-नितदन्ताम् । प्राग्वा मारुत्याः सारस्वती मेषी ' सारस्वत्याऽतिरात्रम् ' ( तै० ब्रा० १–३–४ ) इति । सारस्वतं चैकरूपं सरस्वान्देवता शाखान्तरे वाक्यशेषात् । तानं-तान्पशुविधीन्बौधायन उदाहरति—आश्विनं गृहीत्वा षड्रशना आदाय यूपमभ्यैति स्ववन्तं यूपमुत्सृज्याथैनान्पशूनुपाकरोति—आग्नेयमैन्द्राग्नमैन्द्रं मारुतीं वशामिति । आपस्तम्बस्त्वाग्नेयादीनां चोदकप्राप्तानामनुवादं मत्वा मेषीमारुत्योर्विधिमुदाहरति—'पशु-काले त्रीन्क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति । सारस्वतीं च मेषीम्' ( आप० श्रौ० १८–२–१२ ) इति ॥ २० ॥

**सप्तदश प्राजापत्यान्पशूनुपाकरोति ॥ २१ ॥**

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते तत्रोपाकरणनियोजनादयः संनिपातिनः प्रतिपश्वावर्तनीयास्तेषां चाऽऽवृत्तिर्नै(र्नै)कस्य पशोः कार्त्स्न्येन कृत्वाऽपरस्यापि तथैव क्रियत इत्येवम् । किं तर्हि सर्वेषां यतः कुतश्चित्पशोरारभ्य कृत्वा ततो नियोजनमिति वक्ष्यामः । तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य यत्र क्वचित्समाप्यते । नियोजनादौ

तु संदेहः किं तत्राप्यानियम उत येन क्रमेणोपाकरणं प्रवृत्तं स एवोत्तरत्रापीति नियामकाभावात्प्रथमवद्द्वितीयादावप्यनियमः ।

प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात् ।
अन्यथा व्यवधानं स्यादननुज्ञाताधिकैरपि ॥

एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्तव्याः । वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वचनावगतपश्वन्तरसाहित्यबलादन्यदीयैः षोडशिभिः पदार्थैर्व्यवधिमनुजानाति नाधिकैः । प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवत्यन्यथाऽधिकैरपि स्यात् । तस्मात् प्रवृत्त्या नियमः ॥

'वाजपेये प्राजापत्याः पशवः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इत्येकस्मिन्काले विहिताः सह प्रयोक्तव्याः । तेषामारादुपकारकाणां तन्त्रं द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रतिपशु भेदेन कर्तव्याः । ते किमेकैकस्य कात्स्न्येन कृत्वा ततोऽपरस्य कर्तव्याः किंवोपाकरणं सर्वेषां कृत्वा ततो नियोजनमिति ।

तत्र—

एकैको हि पशुः स्वाङ्गान्यव्यपेतान्यपेक्षते ।
चोदकोऽप्येवमेवातः काण्डानुसमयो भवेत् ॥

प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्तव्याः प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतमिहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते । अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्तव्यम् । वाचनिकं तु साहित्यमारादुपकारकतन्त्रत्वादप्युपपन्नम् ।

उच्यते—

वचनेनैककालत्वं पशूनामिह चोदितम् ।
न तत्प्रयोगवचनाच्चोदकाद्वाऽपि बाध्यते ॥

काल्पनिकं प्रयोगवचननिबन्धनं साहित्यं चोदकं चानुमानम् । प्रत्यक्षवचनेन तु वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति, इत्येककालप्रयोगः पशूनामवगम्यते । यस्मिन्नेव क्षण एकस्योपाकरणं कर्तव्यमापतति तस्मिन्नेवापरस्योपाकरणं कर्तव्यं सदशक्यतया केवलं न क्रियते । द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पश्वन्तरं नोपाक्रियेतातः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्तव्यः । एवं दर्शपूर्णमासादिष्वनेकप्रधानसमवाये पदार्थानुसमय एव न्यायो न तु काण्डानुसमय इति स्थितम् । यत्र तु प्रधानविरोधो भवति पदार्थानुसमये तत्र काण्डानुसमय एवेति । यथाऽश्वप्रतिग्रहेष्टौ शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामभिश्रपणं कृत्वाऽऽद्यस्योद्वासनं क्रियेत ततः स दह्येत । तस्मात्तत्र प्रधानविरोधेन न पदार्थानुसमयः । (९-२-२१) ॥२१॥

तेषु पशुषु गुणद्वयं वाक्यभेदमङ्गीकृत्य विधत्ते—

श्यामास्तूपरा एकरूपा इव भवन्ति ॥ २२ ॥

पशूनामेकरूपत्वं नामैकविधशृङ्गपुच्छादिभिर्युक्तत्वम् । एवमिव हि प्रजापतिः समृद्धचै (तै० ब्रा० १-३-४) इति शेषात् । प्रजापतिशब्देनात्रेश्वरस्य हिरण्यगर्भशरीराद्यभिव्यक्तेः प्रागवस्था विवक्ष्यते । सा चावस्था श्यामेव भवति । 'तम आसीत्तमसा गूढम्' इति श्रुतेः । जगद्रूपस्य नानात्वस्यानुत्पत्तेरेकरूपत्वम् । 'एकमेवाद्वितीयम्' इति श्रुतेः । पशूनां जगदीश्वरेण साम्ये सति समृद्धिर्भवति ॥ २२ ॥

पर्यग्निकृतानाग्नेयसारस्वत्यन्तान्पूर्वानालभन्ते ।
सारस्वतप्रभृतीनुत्तरान्धारयन्ति ॥ २३ ॥ सर्वेषां
प्रतिपशु बर्हींषि वपाश्रपण्यः कुम्भ्यो हृदयशूलाः प्लक्षशाखाश्च तन्त्रमग्नेर्हरणमध्रिगुरुत्तमप्रयाजस्तथा पूर्वः परिवप्योऽतन्त्रः संज्ञप्तहोमो रशनामुदसनमुत्तरः परिवप्यः । वपाश्रपणीनामनुप्रहरणमभिहोमो मार्जनं वरदानं च ॥ २४ ॥

पर्यग्निकृतानामाग्नेयमैन्द्राग्नमैन्द्रं मारुतसारस्वत्यन्तान्पशून्पूर्वानालभन्ते । त्रिवृता यूपरशना परिवीयेत्येवमादिपाठ्यमानहोमेषु कृतेषु प्रतिनिवृत्ते चाऽऽग्नीध्रे । सारस्वत्यन्तानां ये बध्यमानमित्येवमादिसारस्वतादीनष्टादश धारयन्ति यूपदेशस्थान एव धारयन्ति । अध्रिगु प्रतिपशोः, तयेति लिङ्गात् । प्रतिपश्वध्रिगिति सूत्रान्तरात् । क्रतुपश्वर्थ आरम्भः, अनैकादशिनप्रकृतत्वात् ।

अत्रेयं पद्धतिः—अग्नीदग्नीन्विहर प्रतिप्रस्थाता पशुभिरेहि इति आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीय दिवः सूनवः स्थेति स्वरूणां सहाऽऽदाय तन्त्रेण गूहनं सर्वस्वरूणाम् । अन्तरिक्षस्य सानाववगूहामीत्यवगूहनम् । अथ स्नपनं पशूनाम् । आग्नेयमुपाकृत्य बर्हिषि प्रज्ञाते निदधाति । सैव प्लक्षशाखा सर्वत्र । अन्ये बर्हिषी । ऐन्द्राग्नम्, ऐन्द्राग्नपशुमुपाकृत्य, ऐन्द्रं वृष्णिमुपाकृत्य वशा वन्ध्या गौश्छागी वा मरुद्भ्यस्त्वा जुष्टमुपाकरोमीति गोप्रतिनिधित्वेन च्छागवन्ध्या तदभावे प्रसूता उस्रा छागा मेषी इत्यन्योन्यस्य प्रतिनिधय इति बौधायनः । ( गोप्रतिनिधित्वेन च्छागवन्ध्या ) गोशब्देनोस्राशब्देन वा निगमाः । आश्वलायनसूत्राच्च । मेषी अपन्नदती, सरस्वत्यै त्वा जुष्टमुपाकरोमि ( मेषं वा सरस्वतयै त्वा जुष्टमुपाकरोमीति । ) प्राजापत्याः शृङ्गहीनाः श्यामवर्णास्तान् । प्रजापतये त्वा जुष्टमुपाकरोमि, इति क्रमेण सप्तदशानां प्रागेवोपाकर-

---

१ ख एव

णताप्लवपत्रे(णात्पत्रे)षु आग्नेयैन्द्राग्न इत्यादि प्राजापत्यानां प्रथमो द्वितीयतृतीय इत्यादि चिह्नानि कृत्वा पादबद्धयो(द्धेषु बद्ध्वो)पाकरणम् । एवं कुम्भीशूलवपाश्रपणीनां चिह्नं च । उपाकृत्य पञ्च जुहोति । प्रजानन्तः सुवर्गं याहि पथिभिः, ओषधीषु प्रतितिष्ठ शरीरैः, येषामीशे, निष्कर्ता—इमे यज्ञियं भागमेतु ये बध्यमानमनुबध्यमाना, य आरण्याः प्रमुञ्चमाना उपाकृताञ्छशमाना यदस्थाज्जीवन्देवानामपि यन्तु पाथः । अग्नेर्जनित्रमसीत्यभिहोमान्तम् । सावित्रेण रशनामादायेत्यादि अग्नये त्वा जुष्टं नियुनज्मि, इन्द्राग्निभ्यां त्वा, इन्द्राय त्वा जुष्टं नियुनज्मीति त्रयाणामुत्तरतो नियोजनम् । दक्षिणत इतरेषाम् । मरुद्भ्यस्त्वा जुष्टं नियुनज्मि सरस्वत्यै त्वा ( सरस्वते त्वा जुष्टं ) प्रजापतये त्वा जुष्टं नियुनज्मीति सप्तदशानां नियोजनं क्रमेण, सर्वत्र धर्षा मानुषात् । (न) (धर्मानुष्ठानम् । ) अद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यग्नये त्वा जुष्टं प्रोक्षामीत्यादि । इन्द्राग्निभ्यां त्वा, इन्द्राय त्वा मरुद्भ्यस्त्वा सरस्वत्यै त्वा ( सरस्वते त्वा ) प्रजापतये त्वा जुष्टं प्रोक्षामीति सप्तदशानाम् । एवं क्रमेण पेरुरसि स्वात्तमिति च । एवं क्रमेण स्वात्तं चित्सदेव१ हव्य१ स्वदितैनमिति वशाभ्यः । अयं वेद इत्यादिस्रुच्यमाघार्य प्रत्याक्रम्य सं ते प्राणः, संयजत्रैः सं यज्ञपतिराशिषेति पदार्थचतुष्टयं क्रमेणैकैकस्य कृत्वा सर्वमुत्तरेषां ध्रुवासमञ्जनादि, दश प्रयाजानिष्ट्वा प्रयाजशेषेण स्वरुं स्वधितिनाऽनक्ति । सर्वपशूनां क्रमेणाञ्जनम् । अग्नीषोमीयस्वरुणाऽग्रेग्रमनक्ति । स्वरुमुपगृह्य पुनः स्वधित्यञ्जनम् । ततः (पुनः) कंचित्स्वरुमादाय द्वितीयमनक्ति । पुनरुपगृह्य न स्वधित्यञ्जनम् । अन्यमादाय तृतीयमनक्ति उपगूहनान्तम् । एवं सर्वाननक्ति । पर्यग्निकरणं तन्त्रेण प्रत्यपिसृज्य, प्रजानन्त इति पूर्ववदूहः पशुपतेः पशवः । तेषां यान्वव्रिरे देवा१ स्वराडनुमन्यताम् । तन्त्रेण विमोकः, विमुच्यमाने ये बध्यमानाः, ऊहेन रेवतीर्यज्ञपतिमित्यादि तं दक्षिणेन प्रत्यञ्चमित्यन्तमेकैकस्य कृत्वा क्रमेणेतरेषां ता(स्वा)भ्यां वपाश्रपणीभ्यामन्वारम्भः । आश्राव्य प्रत्याश्राविते, उपप्रेष्य होतरजैदग्निरित्यध्रिगुः, उल्मुकाहरणं शामित्रार्थम्। ओवध्यगोहं खननानां कृ(प्र)तिपादावेवाऽऽवर्तते प्रमुञ्चमाना नयनभेदान्नानाप्राण इत्यूहेन। केचिदावृत्तिः सर्वेषां पशूनां दर्भास्तरणं क्रमेण, पृथिव्याः संपृच इति। आमायून्कृण्वन्तु सं ज्ञपयत इत्युक्त्वा पराङ्ङावर्ततेऽध्वर्युः स्वर्विदः स्थ स्वर्वित्त्वा स्वारिता लोकविदः स्थ लोकवित् गातुविद स्थ गातुवित् नाथविदः स्थ नाथवित्। न वा उ वेताँ म्रियध्वे न रिष्यथ देवाँ इदेति पशुभिः । तत्र वो देवः सविता दधातु आशानां वाऽशापालेभ्यः । विश्वा आशा नोहः । अध्वर्युः, नानाप्राणो यजमानस्य पशुभिः । आपे यन्तु पाथः । यासां मूध इत्यस्य नोहः । इन्द्रस्य भागः, यो नो द्वेष्य( ष्ट्य ) नु त१ रभध्वं, रवस्वेत्येकस्य रवेथामिति द्वयोः । यदस्य पारे वासिद्वं न्यषदत वेपिद्वं पलायिद्वं समज्ञाध्वं निमेहध्वं शकृत्कुरुताभयं कुरुत सर्वाभ्यो मृडत नमो रुद्राय

मीढुषे इति बहुषु । वासिषाथां न्यपादाथां वेपिषाथां पलायिषाथां समज्ञासाथां निमेहथां शक्रुत्कुरुतमभयं कुरुतं सर्वाभ्यो मृडतामिति द्वयोः । एकस्य यथाप्रकृति । बहुषु निषण्णेषु क्रमेणोत्थापनम् यथाजाति उच्छ एतिष्ठा उन्मे प्रतिष्ठा उद्वशात्तिष्ठा यत्पशतो मायुनक्रुतो रोसि वा पद्भिराघ्नते । अग्निर्मादिषु नोहः । निष्टप्त इति सर्ववपाश्रपणीनां तापः प्लक्षशाखया सह, शमितार उपेतन पाशेभ्यः पशून्मुञ्चत । अदितिः पाश इति क्रमेण विमोकः । ग्रीवासु निहितेषु पाशेषु मुख्यैकशूलया तन्त्रेण व्युद्वास्य ततः प्रतिप्रस्थाता पत्नीमुदानयति नमस्त आताना अनर्वा प्रेहीत्यावृत्तिः । पत्नीबहुत्वे—आपो देवीः शुद्धायवः, इति कृत्वा वाक्त आप्यायतामिति कृत्वा शुद्धाश्चरित्रा इत्यन्तमेकस्य कृत्वा क्रमेणेतरेषाम् । शमोषधीभ्य इत्यन्ते पशौ तन्त्रेण निनयनम् । ओषधे त्रायस्वैनमित्याद्युत्क्रन्तामीत्यस्यैकस्य कृत्वा क्रमेणेतरेषाम् । ओषधे त्रायस्वैनं स्वधिते मैनꣳ हिꣳसी[ रि ]त्यन्तं स्त्रीपशौ ( शोः ) । उभयतो लोहितेनाङ्क्तेत्यन्तमेकैकस्य कृत्वा संज्ञप्ते पशौ रक्षसां भागः स्थ इति लोहितं न तन्त्रेण निरसनं, इषे त्वेत्यादि अच्छिन्न अग्नये त्वा जुष्टमुत्क्रन्तामि इन्द्राग्निभ्यां त्वा इन्द्राय त्वा मरुद्भ्यस्त्वा सरस्वत्यै त्वा ( सरस्वते त्वा ) प्रजापतये त्वा जुष्टमुत्क्रन्तामीति सर्वत्र वपोद्धरणं शमिता मुष्टिना पिधानं करोति क्रमेण । तन्त्रेण प्रत्युष्ट क्रमेण समन्वारम्भो यजमानस्य निदग्धामिति तन्त्रेण प्रतिप्रस्थात्रे प्रदानं च । वायो वीहि स्तोकानामित्यावृत्त्या तस्य दर्भाग्रस्य वपाया उपासनं लङ्गनम् । अधःप्रासनं यैव आत्मनः पशुषु प्रविष्टा देवानां विष्ठा मुनयो वितस्थिरे । आत्मन्वान्त्सोम घृतवान्हि भूत्वा देवान्गच्छयत सुविद् यजमानाय मह्यमिति तन्त्रेणाभिधारणम् । दृꣳह गा दृꣳहत गोपतिं मा वो यज्ञपती रिषत् । केचिद्यस्त आत्मेत्यविकारेण, ( इति ) । दृꣳह गा तन्त्रेणोद्वास्य, सुपिप्पला ओषधीः कृणुतेति तन्त्रेण प्लक्षशाखायां सादयति । प्रयुता द्वेषाꣳसीति पर्यायेण प्रकृतिवदासन्नाभिमर्शनम् । इमानीन्द्रियाण्यमृतानि वीर्याण्यभिरिन्द्रियं पशवो चिकित्सन् । तामित देवा अवतोपमां शृतानि मयि श्रयताम् , इति । केचित्-- इदमिन्द्रियमिति नोह इति । घृतवति शब्द इत्यादि स्वाहा देवेभ्य इति हुत्वा जुह्वामुपस्तीर्येत्यादि प्रदानान्तं सर्वेषां पशूनां कुर्यात् क्रमेण । अग्नये छागस्य वपाया मेदसोऽनुब्रूहीत्येवं प्रेष्य जातवेदः । द्वितीयस्य, इन्द्राग्निभ्यां छागस्य वपाया मेदस एवं प्रेष्य जातवेदः । तृतीयस्य, इन्द्राय वृष्णेर्वपाया मेदसो एवं प्रेष्य जातवेदः । चतुर्थस्य मरुद्भ्यो वशाया वपाया मेदसो, एवं प्रेष्य जातवेदः । सरस्वत्यै मेष्याया वपाया मेदसो, एवं प्रेष्य जातवेदः । सरस्वत्यै मेषस्य वपाया मेदसः, एवं प्रेष्य जातवेदः । पञ्चमः । अथ षष्ठस्य हिरण्यशकलानि निधाय सर्वत्र प्रजापतय इत्युपाꣳशूक्त्वा छागानां वपानां मेदसामनुब्रूꣳहीत्युच्चैः । एवं प्रेष्य जातवेदो वपाभिर्गच्छ देवानित्यूहः । केचिन्नोह इति वदन्ति । आख्यानुवादा-

तन्त्रेण होमः । सर्वेषां सांनाय्यवदनुमन्त्रणम् । सरस्वत्या वाचमन्नाद्यं पुषेय-मित्यनुमन्त्रणम् । देवेभ्यः स्वाहेति तन्त्रेण परिवप्यहोमः । क्रमेण वपोद्धरणाभिघा-रणं, स्वाहोर्ध्वनभसं मारुतामिति तन्त्रेण वपाश्रपणीनां प्रहरणम् । संस्त्रावहोमस्तन्त्रेण (प्रजापतये स्वाहा) प्राजापत्यप्रचारस्य चोपांशूच्चैरथापिवा इति । अत्र नोह इति सूत्रकार-वचनात् । समुत्क्रम्य वपामार्जनं कृत्वा प्रातःसवनाय प्रसर्पन्तीत्यन्तमित्यादि ततस्ता-भ्यामित्यृतुपात्रे प्रतीक्ष्य तेजसो मे ग्रहावकाशकाले ग्रहणमुपस्थानं वीर्याय मे वर्चोदा वर्चसे पवध्वमिति तन्त्रेण विष्णोर्जठरमसीत्यादि निःसर्पणान्तं सौमिकम् ।

माध्यंदिनस्य कर्म—देव सवितः-स्वदाति नः स्वाहा । सविता देवता । कलशोद्वर्तनं होतृचमसेन वसतीवरीभ्य इत्यादि ग्राव्णामनुमोदनान्ते प्रतिप्रस्थाता सवनीयान्निर्वपेत् । उक्तेन प्रतिप्रस्थाता पशुपुरोडाशैः सह सवनीयानां निर्वपति पुरोडाशा नित्याः, पुनर-नुक्रमात् तस्य कर्म ।

सप्तसप्ततिः कपालानि द्वे भर्जनार्थे कपाले स्थाली शूर्पत्रयं (द्वंद्वशरावमपि) प्रयु-नक्ति । कृष्णाजिनादानादि सर्वं पूर्ववत् । (ग्रहैकत्रियुगलादि) अथ वा पात्र्यस्तिस्रः पात्राणि संमृश्य वा न प्रस्थ(स्तर) मृत्तिकास्थौदक्षायवमित्यग्निहोत्रहवणी शरावं चेति युगपदादत्ते । वेषायव इति शूर्पत्रयं शूर्पे पवित्रे निधाय—अग्नये जुष्टं निर्वपामि । इन्द्राग्निभ्यां जुष्टं० इन्द्राय जुष्टं० मरुद्भ्यो जुष्टं० सरस्वत्यै जुष्टमिति व्रीहयः (सरस्वते वा) अन्यस्मिञ्शूर्पे पवित्रे निधाय यवाः - इन्द्राय हरिवते जुष्टं० इन्द्राय पूषण्वते जुष्टं० अथ वा पूर्वस्मिन्निरुप्तव्रीहिषु पवित्रे निधाय सरस्वत्यै भारत्यै जुष्टं० पुनर्यवनिरुप्ते शूर्पे पवित्रे निधाय इन्द्राय जुष्टं पुनर्व्रीहिषु निधाय सरस्वते जुष्टं० अन्यस्मिञ्शूर्पे पवित्रे निधाय बृहस्पतये जुष्टमिति नीवाराञ्शरावेण निर्वपति । द्वादश मन्त्रेण, तूष्णीं पञ्च, अथान्वावापोऽष्टादश । इदं देवानामित्यादि नानाबीजवत् अग्ने हव्यꣳ रक्षस्वेन्द्राग्नी हव्यꣳ रक्षेथामिन्द्र हव्यꣳ रक्षस्व मरुतो हव्यꣳ रक्षध्वं सरस्वति (त) हव्यꣳ रक्षस्वेन्द्र हरिवन्हव्यꣳ रक्षस्वेन्द्र पूषण्वन् हव्यꣳ रक्षस्व सरस्वति भारति हव्यꣳ रक्षस्वेन्द्र हव्यꣳ रक्षस्व सरस्वन्हव्यꣳ रक्षस्व बृहस्पते हव्यꣳ रक्षस्वेत्युपसा-दनम् । एवं प्रोक्षणम्—अग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यां वो जुष्टं प्रोक्षामीन्द्राय वो मरुद्भ्यो वो सरस्वत्यै (ते) वो इन्द्राय हरिवते वो इन्द्राय पूषण्वते वा सरस्वत्यै भार-त्यै वो इन्द्राय वो सरस्वते वो बृहस्पतये वो जुष्टं प्रोक्षामीति प्रोक्षणम् । शुन्ध-ध्वमित्यादि, उलूखलप्रतिष्ठापने कृते व्रीहीणां यथाभागं व्यावर्तध्वमिति विभागः । वर्षि-ष्ठमेकभागं षड्विपर्यासं सप्तममेकमणिष्ठभागम् । एवं विभज्य, इदमग्नेरिन्द्राग्न्योरिन्द्रस्य मरुताꣳ सरस्वत्या (सरस्वत)इति वर्षिष्ठभागं, सरस्वत्या भारत्या इत्यणिष्ठभागं अणी-

यांसं परिहाप्य भूयिष्ठोऽवहन्यते । हविरावपनादि तण्डुलप्रस्कन्दनान्तं कृत्वा यवानामपि प्रस्कन्दनान्तं कृत्वा हविरावपनादि तण्डुलप्रस्कन्दनान्तं कृत्वा नीवारानोप्य हविष्कृता वाग्विसर्गः । गुदं मा निर्ल्लेपीर्वनिष्ठुं मा निर्ल्लेषीरिति सर्वेषां पशूनां विशसनम् । अग्निं त्रयोविꣳशतिधा कृत्वा सह शूलादिभिः सर्वकुम्भीनां निष्टपनं क्रमेणोपवेषादानादि भृगूणामित्यन्तमेकस्य कृत्वेतरेषाम् । पवित्राभ्यां धानादि हृद-यश्रपणान्तमेकस्य कृत्वा, इतरेषां क्रमेण । अवहननादिकर्म–नीवाराणां प्रस्कन्दनान्तं कृत्वा व्रीहियवनीवाराणां च क्रमेण च त्रिष्फलीकरणं सर्वान्पृथक्प्रक्षाल्य तन्त्रेण निनयनं व्रीहितण्डुलानामधिवापः । अग्नये जुष्टमधिवपामीन्द्राग्निभ्यां जुष्टमधिवपामी-न्द्राय जुष्टं॰ मरुद्भ्यो जुष्टं॰ [ सरस्वते जुष्टं॰ ] सरस्वत्यै जुष्टं अधिवपामि धान्यमसि । अथ यवतण्डुलानां प्रकृतिवद्विभागं कृत्वा इन्द्राय जुष्टमधिवपामि (इति) अणूनि कुरुता-दित्यन्तं कृत्वा धृष्टयादानादि । आग्नेयमुपधायैन्द्राग्नमुपधायैन्द्रमुपधाय मारुतानुपधाय सर-स्वता(तीं)मुपधाय [ सरस्वन्तमुपधाय ] इति क्रमेण कपालान्युपधाय द्वे भर्जनार्थे कपाले उपधाय, ऐन्द्रमुपधाय, सरस्वन्तमु॰ बार्हस्पत्यचरुस्थालीमुपदधाति । सर्वेषामेका-दश कपालानि । आग्नेयविकाराणामुपधाने चतुर्थस्य द्विरावृत्तिः । अष्टमस्य त्रिरावृत्तिः । मदन्तीरधिश्रयतीत्यादि । अग्नये जुष्टꣳ संवपामीन्द्राग्निभ्यां जुष्टꣳ संवपामीन्द्राय जुष्टं॰ मरुद्भ्यो जुष्टं॰ सरस्वत्यै जुष्टं॰ [ सरस्वते जुष्टं॰ ] । अन्यस्यां पात्र्यां पवित्रे निधाय– इन्द्राय जुष्टꣳ संवपामीति यवपिष्टꣳ संवपति । पिष्टान्युत्पूय तण्डुलानुत्पुनाति व्रीहींश्च । पिण्डं कृत्वा यथाभागं व्यावर्तध्वमिति चतुष्कृत्वा(त्व आ)वर्तते । व्यावर्तेथामित्युत्तमौ । तयोरेव निर्देशः । इदꣳ सरस्वत्या [ इदं सरस्वत ] इति । आग्नेयादिसरस्वत्यन्तानधि-श्रित्य भर्जनार्थे धाना आवपति घर्माः स्थ विश्वायुष इति । ततो व्रीहीनावपति अन्यस्मि-न्कपाले लाजार्थान् । अथैन्द्रमधिश्रित्य सारस्वतमधिश्रित्य यजुरुत्पूते पयसि बार्हस्पत्ये नीवारतण्डुलानावपति घर्मोऽसीति । पृ(प्र)थनादिपुरोडाशानामन्तरितं सर्वेषाम् । आप्यलेपं निनीय ( निनयनादि ) पशुपुरोडाशवत् । घृतागेहीति । उद्वासनकाले अग्नये जुष्टमभिघारयामि, इति । अथ त्रयाणां तूष्णीं सरस्वत्यै जुष्टं, धानार्थांस्तूष्णीं सरस्वत्यै भारत्यै जुष्टं, अथ तूष्णीमैन्द्रं सरस्वते जुष्टं बृहस्पते जुष्टं सारस्वतान्तानुद्वास्य प्रकृति-वत्सवनीयानुद्वास्य सारस्वतनैवारयोरुद्वासनं क्रमेण । अलंकरणं काले ग्रहणादि । दधि-घर्मभक्षणान्तं कृत्वा सवनीयानासादयति पशुपुरोडाशांश्च सारस्वतनैवारयोर्नाऽऽसादनं तौ प्रज्ञातौ विधाय यज्ञोऽसीत्याग्नेयसारस्वतौ लाजांश्च । अयं यज्ञ इति । क्रमेण यो नः कनीयः, अपतमिन्द्राग्नी भुवनान्नुदेताम् । पशुपुरोडाशौ । यो नः कनीयः, अपतमिन्द्रो भुवनान्नुदताम् । यो नः कनीयः, अपत्तं मरुतो भुवनान्नुदन्ताम् । यो नः कनीयः, अपतमिन्द्रो भुवनान्नुदताम् । यो नः कनीयः, अपतमिन्द्रः पूषण्वान् भुवनान्नुदताम् । यो नः कनीयः, अपतमिन्द्रो भुवना॰

नुदताम् । ममाग्ने पञ्चहोत्रा ( ता ) । तैरध्वर्युः प्रचरति । अग्नये पुरोडाशस्यानुब्रूहि, इति संप्रैषः । एवमिन्द्राग्निभ्यां पुरोडाशस्येत्येवं संप्रैषः । इन्द्राय पुरोडाशस्येत्येवं संप्रैषः । मरुद्भ्यः पुरोडाशस्यानुब्रूहीति, पशुपुरोडाशानां सारस्वतनैवारवर्ज्यानाम् । माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहीत्यादि । आग्न्ये( ग्ने )यैन्द्राग्न्योः (ग्नयोः) प्रकृतिवदनुमन्त्रणम् । इन्द्रस्याहमन्नादः । मरुतामहमिन्द्रियाव्यन्नादः सरस्वत्या अहं वाचमन्नाद्यम् । सवनीयानां प्रकृतिवत् । समानं तु स्विष्टकृदिडम् । उन्नीयमानेभ्य इत्यादि ॥ २४ ॥

**दाक्षिणौ होमौ हुत्वा । इन्द्रस्य वज्रोऽसि**
**वार्त्रघ्न इति रथमुपावहरति ॥ २५ ॥**

दिवं गच्छ सुवः पतेति हिरण्योद्गृहणान्तम् । इन्द्रस्य वज्रोऽसीति रथवाहनादनसो रथमुपनयति । रथवाहने काष्ठविशेषे स्थापिते गमनाय सज्जीकर्तुं तस्य रथस्य तस्मात्काष्ठादवरोहणं विधत्ते––इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै ( तै० ब्रा० १–३–९ ) इति ॥ २५ ॥

**अप्स्वन्तरमृतमप्सु भेषजमित्यश्वानप्सु स्नापयन्ति ॥ २६ ॥**

अप्स्वन्तरित्यश्वाननुद्धृतास्वप्सु स्नापयन्ति । उपप्लवनं स्नानं प्रत्यश्वं मन्त्रावृत्तिः । वाजिन इति मन्त्रान्तः । अथाश्वान्पल्पूलयतीति बौधायनवैखानसावाहतुः । पल्पूलयति जले प्लावयति शरीरं प्रक्षालयतीत्यर्थः । अप्सु मध्येऽपमृत्युनिवारकं रोगनिवारकं च सारं वर्तते ॥ २६ ॥

**वायुर्वा त्वा मनुर्वा त्वेति प्रष्टिवाहिन१ रथं युनक्ति ॥ २७ ॥**

आदधुरित्यन्तः । प्रष्टिवाहिन१ रथं युनक्ति । प्रत्यश्वं मन्त्रावृत्तिः । प्रष्टिवाही त्रिभिरश्वैर्युक्तः । त्रयोऽश्वा भवन्तीति लिङ्गात् ॥ २७ ॥

**अपांनपादाशुहेमन्नित्यश्वान१ रराटानि प्रतिसंमार्ष्टि ॥ २८ ॥**

सेदित्यन्तः । अथास्य पृष्ठं मर्मृज्यत इति बौधायनोऽप्याह । मर्मृज्यते पुनः पुनः संमार्ष्टि । पृष्ठसंमार्जनेन शोधितत्वाद्यागयोग्यत्वम् । गतमन्यत् ॥ २८ ॥

**तूष्णीमितरान्षोडश रथान्युनक्ति (ख० २) ॥ २९ ॥**

तूष्णीमितरान्षोडश रथान्वाजसृतः स्वं स्वं युनक्ति । केचिदध्वर्युरेव इति ॥ २९ ॥

**दक्षिणाकाले सप्तदश रथान्ददाति ॥ ३० ॥**

दक्षिणाकाले प्राप्ते रूपेण वो रूपमित्यादिना । अभिगम्य रथादीनि चतुर्धा विभज्य तुथो व इति ददाति । रथानेतानेव युक्तान् ददाति । दक्षिणाकाल इति दक्षिणाविभागः । गवां शताना( नि ) दुन्दुभिशताना( नि ) वा ददाति ॥ ३० ॥

**सप्तदश निष्कान् सप्तदशाश्वान् सप्तदश हस्तिनः**

सप्तदश गवाꣳ शतानि सप्तदश गोयुक्तानि सप्तदश यानानि सप्तदश शयनानि सप्तदश महानसानि सप्तदश वासाꣳसि सप्तदश दासान् सप्तदश दासीः सप्तदशाजाः सप्तदशावीर्वयसो वयसꣳ सप्तदशानि ददाति ॥ ३१ ॥

सप्तदशꣳ सप्तदशानि संपादयतीत्येकेषाम् ॥३२॥

अनुदिष्टासु दक्षिणासु यजुर्युक्तꣳ रथमध्वर्यवे ददाति । ३३ ॥ शेषः साधारणः ॥ ३४ ॥

निष्कश्चतुःसौवर्णकः । दुन्दुभयो मुरवाः । अनुदिष्टावज्ञानां निष्क्रयणकृते यजर्युक्तं रथमध्वर्यवे ददाति । प्रष्टिवाहिनमित्यर्थः । अध्वर्योः स्वीयभागो नियम्यते नाधिको भागः । भागादधिक इति भाष्यकृत् । शेषः साधारणः । ऋत्विजां सर्वेषां शेषा दक्षिणा लभ्यते । अध्वर्योर्यावान्भागः प्रदीयतेऽधिको न्यूनो वा प्रकृतिवद्विभज्यते यावदध्वर्यव इति समशो विभागः । सम एव विभाग इत्यर्थः । छन्दोगवचनात्ताः समम्त्विग्भ्यो विभजेदिति न प्रकृतिवद्विभागः । अपि वा समविभागपक्षे सप्तदशः सप्तदश एवोचितो भागो लभ्यते । तस्मात्सप्तदशो(त्सदस्यो) नित्यः । सोऽपि महर्त्विक् । पञ्च महर्त्विजो वृणीतेति भगवता भरद्वाजेनोक्तम् । रथप्रतिग्रहमन्त्र आधान उक्तः । अश्वस्य च देवस्य त्वेति वरुणायाश्वमिति । देवस्य त्वेति देवि दक्षिणे उत्तानायाङ्गीरसायानः, इत्यनसः । देवस्य त्वा देवि दक्षिणे हिमवतो हस्तिनं तेनामृतत्वमिति हस्तिनः । अन्नं दत्त्वा प्रतिग्रहः । अग्नये हिरण्यमिति निष्कस्य । मनवे तल्पमिति दास्याः । प्रियवचनं कृत्वा प्रतिग्रहः । त्वष्ट्रेऽजामित्यजायाः । पूष्णेऽविमित्यवेः । ग्रास्त्वा कृतस्तपसस्त्वा तन्वत वरूत्रयस्त्वा वप(य)न् सोमाय वास इति वाससः।गवां शतस्य रुद्राय गामिति प्रतिग्रहः। अनोयुक्तस्य यथाजाति । सप्तदश दुन्दुभीनामुत्तानस्त्वेति प्रतिग्रहः ।

वाजपेये ‘ सप्तदश रथाः सप्तदश दास्यः ’ इति दक्षिणां विधाय श्रूयते ‘ यजुर्युक्तं रथमध्वर्यवे ददाति ’ इति । तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्तयेन्नेति । तत्र

प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः ।
न त्वयं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥

प्राकाशौ ह्यपूर्वावध्वर्य्वानतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं प्राकृतं बाधत इति । इह तु सप्तदश रथा द्रव्यान्तराणि च वाजपेयस्य दक्षिणात्वेन विहितानि इति । तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं स त्वध्वर्यवेऽन्यस्मै वा कस्मैचिद्दातव्यः सन्न-

ध्वर्यौ नियम्यते । ततश्च नायमर्थः—यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि यजुर्युक्तं यद्ददाति तदध्वर्यव इति । तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति तादृशस्यैव नियमान्न देयान्तरनिवृत्तिः । अध्वर्युभागे तु यथाप्राप्ते यजुर्युक्तो नियम्यते ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

**अग्रेणाऽऽहवनीयं प्राञ्चो रथानवस्थापयन्ति ॥ ३५ ॥**

अग्रेणाऽऽहवनीयं तत्र देशे प्राञ्चः प्राङ्मुखानवस्थापयेयू रथान् ॥ ३५ ॥

**यजुर्युक्तं दक्षिणार्ध्यमग्रेणाऽऽग्नीध्रꣳ राजपुत्रोऽवस्थाय सप्तदश प्रव्याधानिषूनस्यति प्राचीनमुदीचीनं वा ॥ ३६ ॥ यत्र जघन्यो निपतति तल्लक्षणं कुरुते ॥ ३७ ॥**

यजुर्युक्तं रथम् । अग्रेणाऽऽग्नीध्रं राजपुत्रोऽवस्थितो भवति । स इषुं धनुषि संधायास्यति निक्षेपणं करोति । स इषुर्यस्मिन्देशे निपतति तत्र गत्वा पुनरस्यति । एवं सप्तदशकृत्वोऽभ्यस्येत् । यत्र जघन्यं निपतति तत्रौदुम्बरकाष्ठेन लक्षणं मिनोति ॥ ३६ ॥ ३७ ॥

**यत्प्राङ्माहेन्द्रात्तस्मिन्कृते प्रतिप्रस्थाता नैवारꣳ सप्तदशशरावं चतुर्धा विभज्य बृहस्पतये निर्वपति पयसि श्रपयति ॥ ३८ ॥ सर्पिष्मन्तं चात्वालेऽवदधाति ॥ ३९ ॥**

प्राङ्महेन्द्रग्रहणात्पूर्वं नाना(रा)शंसासादनान्तम् । तत्र विशेषः-अग्ने नयेति हुत्वा वनेषु व्यन्तरिक्षं, प्रजापते न त्व० वनेषु व्यन्तरिक्षं वरुणो देवता । शिष्टयोरुक्ते । एवं सादितेषु नाना(रा)शंसेषु नैवारे लौकिकं सर्पिरानीय चात्वाले स्थापयति ।

वाजपेये श्रूयते—बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवति, इति । अस्ति तु प्रकृतौ चतुरो मुष्टीन्निर्वपति, इति चतुःसंख्या मुष्टिद्रव्यं च । तदुभयमिह चोदकेन प्राप्तम् । न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरुः संपादयितुं शक्यते । अतोऽवश्यं बाधितव्ये सति किमुभयं बाधितव्यं शरावद्रव्येण मुष्टिद्रव्यं सप्तदशसंख्यया च चतुःसंख्या किंवाऽन्यतरत् । तत्रापि किमनियमः । अथ वा मुष्ट्यनुग्रहः संख्यालोपो विपरीतं वेति । तत्राविशेषादुभयोर्बाधः । तत्रापि समानकार्यत्वाद्द्रव्यं द्रव्येण संख्या संख्ययेत्येकः पक्षः । सप्तदशसंख्याशरावपरिमाणं च यागद्रव्याङ्गं, चतुःसंख्या मुष्टिश्च निर्वापाङ्गमतो न तावत्साक्षादेकविषयत्वं येनोभयमुभयेन बाध्येत । चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न संपादयितुं शक्यत इत्यर्थाद्बाधः । तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तम् । तस्मादन्यतरबाधः । तत्राविशेषादनियम इति द्वितीयः । संख्याया द्रव्याङ्गत्वात् प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः, संख्यायास्तु बाध इति तृतीयः । न संख्याया

मुष्टचङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसंबन्धबाधेन द्वितीया श्रुत्या निवार्पाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वम् । तत्र मुख्यत्वात् संख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः ॥ ३८ ॥ ३९ ॥

**तꣳ राजपुत्रो गोपायति ॥ ४० ॥**

राजपुत्रो रक्षति । ब्राह्मणो वा ॥ ४० ॥

**चात्वाले रथाक्षाकृति काष्ठं निखनाति ॥ ४१ ॥**

औदुम्बरेण कृतं निखायेति वैखानसः ॥ ४१ ॥

**तस्मिन् रथचक्रमौदुम्बरं सप्तदशारं प्रतिमुञ्चति ॥ ४२ ॥**

तस्मिन्रथाक्षाकृतिकाष्ठ औदुम्बरं रथचक्रं सप्तदशारं प्रतिमुञ्चति । उत्तरस्यां वेदिश्रोण्यां सप्तदश दुन्दुभीन्प्रबध्नातीति वैखानसोक्तेः ॥ ४२ ॥

**विष्णोः क्रमोऽसीति यजुर्युक्तꣳ रथं यजमानोऽभ्येति ॥ ४३ ॥**

रथस्य समीपमभ्यागच्छति यजुर्युक्तस्य । तदेतद्यजमानकर्म ॥ ४३ ॥

**अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति । पक्षसी वा ॥ ४४ ॥**

अभितः स्पृशत्यध्वर्युरित्येके । यजमान इत्यपरे । पारयन्त्वित्यन्तः ॥ ४४ ॥

**देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमिति ॥(ख० ३)॥ ब्रह्मौदुम्बरꣳ रथचक्रमारोहति ॥ ४५ ॥**

रथमातिष्ठतीति बौधायनः । आतिष्ठत्यारोहेदित्यर्थः ॥ ४५ ॥

**देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमिति यजुर्युक्तꣳ रथं यजमानः ॥ ४६ ॥**

आरोहतीत्यनुकर्षः ॥ ४६ ॥

**इन्द्राय वाचं वदतेति दुन्दुभीन्निह्रादयन्ति ॥ ४७ ॥**

दुन्दुभिमुखं ताडयन्ति वाजसृतो नाध्वर्युः । एवमापस्तम्बेऽपि ॥ ४७ ॥

**वाजसृत इतरान् रथानारोहन्ति ॥ ४८ ॥**

वाजसृत इतरे ( रान् ) रथानारोहन्ति तूष्णीम् ॥ ४८ ॥

**वाजिनो वाजजितो वाजꣳ सरिष्यत इति नैवारमश्वौ युग्याववघ्रापयन्ति । सर्वान्वा ॥ ४९ ॥**

जिघ्रतेति मन्त्रान्तः । नैवारं चरुं धुर्यावश्वाववघ्रापयन्ति । यजुर्युक्तस्यैव रथस्य धुर्यौ । सकृन्मन्त्रः ॥ ४९ ॥

**प्रप्रोथेषु च लेपान्निमार्ष्टि विष्णोः क्रमोऽसीति यजुर्युक्तꣳ रथमध्वर्युरारुह्याश्वाजनीत्यश्वाजनिमा-**

दायावाँऽसि सप्तिरसीत्यश्वान्समक्षिणोति ॥५०॥

अप्रोथेषु मुखदेशेषु लेपानवघ्रापणे येऽवशिष्टास्तान्स्पृशन्ति । विष्णोः क्रमोऽसीति यजुर्युक्तं रथमध्वर्युरारोहति । यजुर्युक्तं तूष्णीमधिरोहेत्येके। अश्वाजनि वाजयेति अश्वाजनिं कशामादायाध्वर्युः, अर्वाऽसि सप्तरसि वाजयसीति कशया तानश्वांस्ताडयति ॥ ५० ॥

पश्चादितरे रथा अनभ्यासादयन्तोऽनुयान्ति ॥ ५१ ॥

इतरे राजवैश्यरथकाराश्च स्वं स्वं तूष्णीं ताडयन्ति । यजुर्युक्तस्य पृष्ठतो गच्छन्ति, इतरे रथाः । केचित्तु—क्षत्रियाद्यभावे ब्राह्मणा एव गृह्यन्ते ॥ ५१ ॥

वाजिनो वाजं धावतेति तिसृभिराधावतोऽनुमन्त्रयते । चतसृभिरित्येकेषाम् ॥ ५२ ॥

तिसृभिश्चतसृभिर्वर्गिभर्धावतोऽश्वाननुमन्त्रयते यजमानः । अध्वर्युरित्येके ॥ ५२ ॥

वाजिना॰ साम ब्रह्मौदुम्बरे रथचक्रे त्रिस्त्रिः परिवर्तमाने गायति ॥ ५३ ॥

आरूढे ब्रह्मणि वाजिनां साम गायत्यध्वर्युः संप्रेष्यति । तस्य गानार्थं ( थमा ) वर्तयति । आवर्तमाने चक्रे सामगानं वैकल्पिकं देवस्याहमिति यजुर्वा वदति जपति । रुहेयमित्यन्तः । सामगानशक्तस्य—आविर्मर्या इति गानमन्त्र इति । वाजिना॰ साम गायते ( तै० ब्रा० १–३–६ ) इति ब्राह्मणात् । वाजिनामन्नार्थिनां सबन्धि यत्साम तद्ब्रह्मा गायेत् । अन्नप्रदस्तु सामविशेषः शाखान्तरे द्रष्टव्यः । ब्रह्मण इदं गानमित्यापस्तम्बः स्पष्टयति—औदुम्बर॰ रथचक्रं ब्रह्माऽऽरोहति तमाह वाजिना॰ साम गायेति तस्य चक्रं त्रिः प्रदक्षिणमावर्तयति । 'तत्राऽऽवर्तमाने ब्रह्मा गायति' ( आप० श्रौ० १८–१–४ । ११ ) इति ॥ ५३ ॥

अग्निरेकाक्षरेण वाचमुदजयदित्युज्जितीर्यजमानं धावत्सु वाचयति ॥ ५४ ॥

अग्निरेकाक्षरेणेति धावत्स्वश्वेषु, उज्जितीरिति ध्यात्वा यजमानं वाचयत्यध्वर्युः । स्तोममुदजयदित्यन्तः । सप्तदशेति वैखानसः ॥ ५४ ॥

लक्षणं प्राप्य प्रदक्षिणमावर्तन्ते ॥ ५५ ॥

औदुम्बरं काष्ठमाजिं प्राप्य प्रदक्षिणमावर्तन्ते । य आजिं धावन्ति । उदञ्च आवर्तन्ते ( तै० ब्रा० १–३–६ ) इति हि ब्राह्मणम् ॥ ५५ ॥

ते नो अर्वन्तो हवनश्रुतो हवमिति चतसृभिराधावतोऽनुमन्त्रयते ॥ ५६ ॥

चतसृभिः प्रत्याधावतोऽश्वाननुमन्त्रयतेऽध्वर्युः । तदेवमध्यापकसंप्रदायमनुसृत्य

मन्त्रचतुष्टयं विभक्तम् । बौधायनाचार्यस्तु ते नो अर्वन्त इत्यादिर्वाजिनो हवेष्वित्यन्त एक एव मन्त्र इत्यभिप्रेत्य चतुर्थमेषस्य वाजीत्यादिकामृचं चतुष्टयेऽन्तर्भावयामास । आपस्तम्बस्त्वेवमाह— मितद्रव इति चतसृभिः प्रत्याधावतोऽनुमन्त्रयते इति ॥ ५६ ॥

**तिसृभिरित्येकेषाम् ॥ ५७ ॥**

स्पष्टोऽर्थः ॥ ५७ ॥

**आ मा वाजस्य प्रसवो जगम्यादिति प्रत्यासृतेषु जुहोति ॥ ५८ ॥**

आ मा वाजस्येत्यृचा जुहोति दर्विहोमधर्मेण । द्यावापृथिवी देवता । प्रत्यासृतेषु प्रत्यागतेष्वश्वेषु ॥ ५८ ॥

**इयं वः सा सत्या संधाऽभूदिति दुन्दुभिविमोचनीयामेकामाहुतिं जुहोति ॥ ५९ ॥**

इयं वः सा सत्येत्यनुवाकशेषेण दुन्दुभिविमोचनीयमिति ध्यात्वा जुहोति । इन्द्रो देवता ॥ ५९ ॥

**सर्वान्वोपस्पृशति ॥ ६० ॥**

सर्वान्वोपस्पृशति न होमः ॥ ६० ॥

**वाजिनो वाजजितो वाजꣳ ससृवाꣳस इति नैवारमश्वयुग्यानवघ्रापयति । यथापुरस्तात्प्रमोथेषु च लेपान्निमार्ष्टि । ६१ ॥**

नैवारमश्वयुग्यानवघ्रापयति । मुखे लेपान्निमार्ष्टि यथापुरस्तादित्यर्थः ॥ ६१ ॥

**कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति ॥ ६२ ॥**

कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छतीति वचनादेकस्य वाजसृत एकं कृष्णलं प्रयच्छति । एवं षोडशभ्यो दत्त्वा ॥ ६२ ॥

**तानि प्रत्यादाय ब्रह्मणे ददाति ॥ ६३ ॥**

तानि पुनरादाय ब्रह्मणे दद्यात् ॥ ६३ ॥

**मधोष्ठालं च शतमानस्य कृतम् ॥ ( ख० ४ ) ॥ ६४ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने प्रथमः पटलः ।**

यजमानो मधुना पूर्णं शतगुञ्जाफलपरिमाणं सुवर्णकृतपात्रं ब्रह्मणे ददाति ॥ ६४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने प्रथमः पटलः ॥ १ ॥

अथ त्रयोदशप्रश्ने द्वितीयः पटलः ।

**क्षत्रस्योल्बमसीति तार्प्यं यजमानः परिधत्ते । क्षत्रस्य योनिरसीति दर्भमयं पत्नी ॥ १ ॥**

तार्प्यं घृताक्तं वस्त्रम् । तदेतत्परिधानद्वयं विधत्ते—तार्प्यं यजमानं परिधापयति । यज्ञो वै तार्प्यम् । यज्ञेनैवैनꣳ समर्धयति । दर्भमयं परिधापयति । पवित्रं वै दर्भाः । पुनात्येवैनम् । वाजं वा एषोऽवरुरुत्सते । यो वाजपेयेन यजते । ओषधयः खलु वै वाजः । यद्दर्भमयं परिधापयति । वाजस्यावरुद्ध्यै (तै० ब्रा० १-३-७) इति । तार्प्यस्य यज्ञसाधनत्वाद्यज्ञत्वम् । एवं पत्नीदेहम् । वाजपेययाजिनोऽन्नावरोधकामिन ओषधिरूपदर्भमयेनान्नमवरुद्धं भवतीति तदर्थः ॥ १ ॥

**जाय एहि सुवो रोहावेति पत्नीं यजमान आमन्त्रयते । रोहावहीति पत्नी प्रत्याह ॥ २ ॥**

मन्त्रेण यजमानः पत्नीमामन्त्रयते । रोहावहीति पत्नी प्रत्याह । एवं त्रिः ॥ २ ॥

**अहं नावुभयोः सुवो रोक्ष्यामीति यजमानस्त्वहं नावुभयोः सुवो रोहेति पत्नी ॥ ३ ॥**

यजमानोऽन्ततो वदति । एवं पत्नी ॥ ३ ॥

**आयुर्यज्ञेन कल्पतामिति दशभिः कल्पैः सरजासि निःश्रेण्या यूपमारोहति । उभौ वा ॥ ४ ॥**

आयुर्यज्ञेन कल्पतामिति दशभिः कल्पामिति ध्यात्वा सप्तदशफलकयुक्तया निःश्रेण्या यूपं यजमान आरोहति । एवं पत्नी । अध्वर्युरिति केचित् । तं दशभिः कल्पैरारोहत्यायुर्यज्ञेन कल्पतामिति वैखानसः । तं यूपम् । कल्पैः कल्पशब्दोपेतैः ॥ ४ ॥

**सुवर्देवाꣳ अगन्मेत्यारुह्य जपति ॥ ५ ॥**

सुवर्देवाꣳ अगन्मेति यूपाग्रं प्राप्य जपति यजमानः । अभूमेति मन्त्रान्तः ॥ भाष्ये तु—बाहू उद्गृह्णाति सुवर्देवानिति । उद्गृहीताभ्यां बाहुभ्यां स्वर्गप्राप्तिमभिनयता यजमानेनेदमुच्यत इति ॥ ५ ॥

**वाजश्च प्रसवश्चेति द्वादशाऽऽहुतीर्जुहोति ॥ ६ ॥**

**त्रयोदशेत्येकेषाम् ॥ ७ ॥**

वाजश्च स्वाहा प्रसवश्च स्वाहा, इत्यादिभिर्द्वादशभिस्त्रयोदशभिर्वा वाजप्रसवीयानि ध्यात्वा जुहोति । वाजादयो देवताः । वाजशब्दप्रसवशब्दौ येषु कर्मसु मन्त्रत्वेन

श्रूयेते तानि कर्माणि वाजप्रसवीयानि । विधत्ते—द्वादश वाजप्रसवीयानि जुहोति ( तै० ब्रा० १-३-७ ) इत्यादि ॥ ६ ॥ ७ ॥

**पुरस्ताद्यूपारोहणादेके समामनन्ति ॥ ८ ॥**

एके शाखिनः परिपठन्ति यूपारोहणात्पुरस्ताद्वाजप्रसवीयं जुहुयादित्यर्थः ॥ ८ ॥

**समहमायुषा सं मयाऽऽयुः समहं वर्चसा सं मया वर्चः समहं प्रजया सं मया प्रजा समह्ँ रायस्पोषेण सं मया रायस्पोष इति यूपमारुह्य ग्रहान्प्रत्यवेक्षते ॥ ९ ॥**

पत्नीमिति भाष्यकृत् ॥ ९ ॥

**तमाश्वत्थैरूषपुटैर्दीर्घवꣳशप्रबध्नै(द्धै)रास्यतो महर्त्विजः प्रतिदिशꣳसमर्पयन्ति । शीर्षत इत्येकेषाम् ॥ आसपुटैर्वैश्यमन्नाय त्वेति पुरस्तादध्वर्युः ॥ ( ख० ५ ) ॥ अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा । वाजाय त्वेति पश्चाद्धोता । वाजजित्यायै त्वेत्युत्तरत उद्गाता ॥ १० ॥**

अश्वत्थपत्रेषु कृष्णमृत्तिका ऊषान्वोभयान्वा वंशाग्रे पुटाकृतिं कृत्वा तमारूढयजमानो(नं) घ्नन्ति । अन्नाय त्वेत्यादिभिर्मन्त्रैः । वैखानससूत्रे तु ‘ तमेवमासपुटैर्घ्नन्ति—अन्नाय त्वेति पुरस्तादध्वर्युः । अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा । वाजाय त्वेति पश्चाद्धोता । वाजजित्यायै त्वेत्युत्तरत उद्गाता, इति । ऊपखननपांसव आसास्तानश्वत्थपत्रैः पुटीकृत्य तैरासपुटैर्यूपादवरोहन्तं यजमानं हन्युः । अत एवाऽऽपस्तम्ब आह—‘ तमाश्वत्थैरासपुटैरूषपुटैरुभयैर्वा वैश्याः प्रतिदिशमर्पयन्ति । महर्त्विजो वा दीर्घवंशेषु प्रबध्य ’ ( आप० श्रौ० १८-५-१८ ) इति । यथासूत्रं मुखतो घ्नन्ति, मुखं प्रत्यभिघ्नन्तीत्यर्थः ॥ १० ॥

**होता(हन्ता)रं वितत्य बाहू अभिपर्यावर्तते ॥ ११ ॥**

हन्तारं हन्तारमभिपर्यावर्तते इत्यापस्तम्बः । यजमान इति शेषः ॥ ११ ॥

**इयं ते राण्मित्राय यन्त्रासि यमनो धर्ताऽसि धरुणः कृष्यै क्षेमाय रय्यै पोषायेति प्रत्यवरोहति ॥ १२ ॥**

यूपाग्रं प्र(प्राप्य)त्यवरोहति यजमानः । पत्न्या अप्यारोहणावरोहणे तूष्णीम् ॥ १२ ॥

**अग्रेण यूपं बस्ताजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृ-**

णाति ॥ १३ ॥ तेजोऽसीति तस्मिन्रांजत९
रुक्मं निदधाति ॥ १४ ॥

अथाग्रेण यूपं बस्ताजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिञ्छतमान९ हिरण्यं निदधात्यध्वर्युः ॥ १३ ॥ १४ ॥

अमृतमसीति रुक्मे पादं प्रतिष्ठापयते ॥ १५ ॥

अमृतमसीति यजमानो हिरण्ये दक्षिणं पादमवदधाति ॥ १९ ॥

पुष्टिरसि प्रजननमसीति बस्ताजिने ॥ १६ ॥

बस्ताजिने सव्यं पादं प्रतिष्ठापयते यजमानः ॥ १६ ॥

तस्मादासन्दीमारोहाति ॥ १७ ॥

तस्माच्चर्मणो भूमिमुपस्पृशन्नासन्दीमौदुम्बरीं च दक्षिणायतां प्रागायतां वाऽऽरोहाति ॥ १७ ॥

दिवं प्रोष्ठनी ( ष्ठिनी ) मारोहती ( ता ) मारुह्य
प्रपश्वै ( श्यै ) कराण्मनुष्याणामेधीत्यारोहन्तम-
भिमन्त्रयते ॥ १८ ॥

दिवं प्रोष्ठिनीमारोहतामित्यारोहन्तं यजमानमभिमन्त्रयतेऽध्वर्युः ॥ १८ ॥

माहेन्द्रप्रभृतीनि कर्माणि प्रतिपद्यते ॥ १९ ॥

अस्मिन्काले माहेन्द्रग्रहं गृह्णाति । ततः स्तोत्रोपाकरणम् । असर्जि सार्जि० ॥१९॥

तस्य स्तोत्रमुपाकृत्याभिपिञ्चति यथाऽग्निचित्या-
याम् ॥ २० ॥

तस्य यजमानस्य ॥ २० ॥

रजसि स्तुवते सप्तभिरन्नपूर्वाभिरन्नहोमं जुहोति
ग्राम्यारण्यान९ समवदाय ॥ २१ ॥

सप्तभिः पूर्वैर्मन्त्रैर्ग्राम्या आरण्याश्चौषधीः संसृज्य समवदाय ' वाजस्येमम् ' इति सप्तभिर्मन्त्रैः । सप्त पूर्वानन्नहोमाञ्जुहोति । अग्निर्देवता । वाजस्येममित्यादयः पूर्वमेवोक्ताः । हुत्वा हुत्वा पात्र्या९ संपातमवनयतीत्यादि सूत्रान्तरे द्रष्टव्यम् । परंतु नास्त्यस्मत्सूत्रे संपातावशिष्टावनयनमस्मिन्याग इति गम्यते, क्रमविपर्यासात् ॥ २१ ॥

( माध्यंदिनस्य सवनस्य ) मध्यम उक्थ्यपर्याये
ब्रह्मसाम्न्युपाकृतेऽत्र सारस्वतप्रभृतीनुत्तरानाल-

---

१ क. हिरण्यं ।

भन्ते ॥ २२ ॥ तेषामनभिघारिताभिर्वपाभिः प्रचरति ॥ २३ ॥ सारस्वतस्य वपया प्रचर्य समवदाय प्राजापत्यानां वपाभिः प्रचरति ॥ २४ ॥ नैवारेण प्रचरति हविराहुतिप्रभृतीडान्ता संतिष्ठते ॥ २५ ॥ महर्त्विजो हविरुच्छिष्टाशा भवन्ति ॥ २६ ॥

स्तुतस्य स्तुतमसीत्यादि । अतिग्राह्यहोमकाल इन्द्रौजस्विन्निति षड्भिरभिमन्त्रणं तन्त्रेण भेदेन वा ध्व ( ज्व ) लति वा इत्येतं पक्षमाश्रित्य प्रयोगः । देव सवितरेतत्ते मध्यम उक्थ्यपर्याये ब्रह्मसाम्न्युपाकृते सारस्वतनैवारयोरामादनं प्रियेण० यज्ञोऽसीत्यादि, तयोः प्रचारः । जुह्वामुपस्तीर्येत्यादि सरस्वते पुरोडाशस्यानुब्रूहीत्यादि ( हीति ) सरस्वते प्रेष्य सरस्वन्तं यजेति वा । सरस्वतेऽहमन्नादः । बृहस्पतेऽनुब्रू ३ हीति बृहस्पते ( तये ) प्रेष्य । बृहस्पतिं यजेति वा । बृहस्पतेरहमन्नादः । उभयोः स्विष्टकृतं विरुज्य प्राशित्रमुभयोरिडामार्जनान्ता समाप्यते । महर्त्विजो हविरुच्छिष्टाशा भवेयुः । काले वेत्येवं पक्षमाश्रित्य प्रयोगः । देव सवित० अनुवसीत्यादि सवनाहुत्यन्तं निःसर्पणान्तं च । इति माध्यंदिनं सवनम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

पशुकाले सारस्वत्यन्तानां सर्वेषां दैवतेन प्रचरति ॥ २७ ॥

अथ तृतीयसवनस्य कर्म । देव सवितः० स्वदाति नः स्वाहा । सविता देता । कलशोद्वर्तनम् । तत आदित्यग्रहग्रहणादि । आग्रयणं गृहीत्वोक्थ्यग्रहणम् । ततः षोडशी ( शि ) ग्रहणम् । पृष्टचै म इत्येते स्तुत आर्भवे पवमाने, अग्निदग्नीन्विहर पशुषु संवदस्व, विष्णो त्वं न इत्युपस्थानान्ते प्रतिप्रस्थाता शृतꣳ हवी ( विः ) शमितरित्याद्यनूहेन सं ते मनसा० अग्नये त्वा जुष्टमभिघारयामि, अन्यत्पृषदाज्यमानयति । एवं क्रमेण सर्वेषामभिघारणम् । इन्द्राग्निभ्यां त्वा जुष्टं० इन्द्राय त्वा जुष्टं० मरुद्भ्यस्त्वा जुष्टं० सरस्वत्यै त्वा जुष्टं० ( सरस्वते त्वा जुष्टं० ) प्रजापतये त्वा जुष्टं० एवं क्रमेण सप्तदशानां सर्वत्राभिघारयामीत्यभिघारणम् । यस्त आत्मेत्यध्वर्युः क्रमेण । स्वाहोष्मण इति मन्त्रेण दꣳहेत्युद्वासनं क्रमेण स्वेन स्वेन हृदयशूलेन सह पञ्चहोत्रासादनं क्रमेण । वपावदासन्नाभिमर्शनं क्रमेण सर्वेषाम् । चतसृषूपस्तृणीत इत्यादि । आग्नेयस्येन्द्रः प्राण इति कृत्वाऽऽश्रावयेत्यादि अर्धर्चे वसाहोमः । अन्यत्र शेषमानयति । ततो वषट्कृते होमः । ततो मनोता । ऐन्द्राग्नप्रचारः । अर्धर्चे वसाहोमः । शेषमन्यत्र । पुनर्मनोतादि । इन्द्राय वृष्णेहविषः । एवं प्रेष्य । अर्धर्चे वसाहोमः । शेषमन्यत्र । पुनर्मनोतादि । मरुद्भ्यो गोर्हविषः । ऐन्द्रः प्राणः, देव

त्रायन्तम् । सरस्वत्यै मेष्या हविषः । एवं प्रेष्य, अर्धर्चे वसाहोमः । शेषमन्यत्र । पुनर्मनोतादि । सरस्वत्या ( तो ) मेषस्य हविषो वसाहोमः । शेषमन्यत्र निधाय मनोतादि । प्राजापत्यानां तन्त्रेण मनोता । जुह्वामुपस्तीर्य हिरण्यशकलं प्राजापत्यान्सर्वान्सहावदाय त्र्यङ्गानपि सर्वान् पूर्वत्र्यङ्गैः सहावदाय समवत्तधान्यामिडावदानान्यपि पूर्वैरिडावदानैः सहावदाय प्राजापत्यमेदोभि सर्वैः प्रच्छाद्येडावदानं हिरण्यशकलमुपरिष्टात्कृत्वा द्वयोरप्यभिघारणम् । वसाः सर्वाः एकस्मिन्पात्र आनीय तस्माद्गृह्यते (ह्वाति) । तत ऐन्द्रः प्राणः । सर्वानवदानेऽपि—देवं त्रायतोऽवसे सखायोऽनु वो प्रजापतय इत्युपांशु । छागानां हविषोऽनुब्रू३हि इत्युच्चैः । एवं प्रेष्य । अर्धर्चे वसाहोमः ; उद्रेकान्सर्वान् पूर्वस्थापितान्समवनीय दिग्यागः । वषट्कृते तन्त्रेण प्रक्षेपः । जुह्वा अधस्ताच्च ब्रूयादिति विधानम् । अवदानपर्याप्तं पूर्वमेव करोति । सर्वेषु वपावदनुमन्त्रणम् । तन्त्रेषु मेदरूपाङ्गानि ( णि ) प्रावृणोति न मेदसा । न हिरण्यं क्षिपेत्तत्र न वाऽऽज्येनाभिघारयेत् ।

अर्धर्चे तु वसां हुत्वा दीर्घां च द्वि( दि )गुपस्थितिम् ।
अकृत्ये( त्वै )व वसाशेषं पात्रेऽन्यस्मिन्निषिञ्चति ॥

प्रत्याक्रम्य नारिष्ठादिवनस्पतियागः । उपर्याहवनीये जुह्वामित्यादिस्विष्टकृत्प्रचारः । वैश्वानरे हविरिदं० इडोपाह्वानादि ॥ २७ ॥

**षोडशिचमसानुन्नयन्नेकस्मै चमसगणाय राजानमतिरेचयति । तैः प्रचर्यातिरिक्तस्तोत्राय होतृचमसमुख्याश्चमसानुन्नयति । स्तुतशस्त्रे भवतः । शस्त्रं प्रतिगीर्य प्राजापत्यानां मुख्यं ग्रहमध्वर्युरादत्ते । ऋत्विज इतरान् ॥ २८ ॥**

सवनीयपुरोडाशप्रचरणादि सौमिकं कर्म षोडशिचमसक्षालनान्तम् । अथ होतृचमसमुख्यान्दश चमसानुन्नयति उन्नेता । ततः संप्रैषः । बृहतः स्तोत्रमुपाकरोतीत्यापस्तम्बः । अभिजिदसीति स्तोमभागः । प्रचरणकाले होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यव ऋत्विज इतरान्सोमग्रहान् ॥ २८ ॥

**सुराग्रहाणां मुख्यं प्रतिप्रस्थाता वाजसृत इतरानादत्ते । चमसांश्चमसाध्वर्यवः ॥(ख० ६)..२९॥**

सुराग्रहाणां मुख्यं प्रतिप्रस्थाताऽऽदत्ते । वाजसृत इतरान्सुराग्रहान् ॥ २९ ॥

**संपृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति । संपृचः स्थ सं मा भद्रेण**

पृङ्क्तामिति वा । विपृचः स्थ विपाप्मना पृङ्क्तेति प्रत्यङ्प्रतिप्रस्थाता सुराग्रहैः । विपृचः स्थ वि पाप्मना पृङ्क्तामिति वा ॥ ३० ॥ आहवनीयन्यन्ते सोमग्रहैरवतिष्ठन्ते । मार्जालीयन्यन्ते सुराग्रहैः प्रचरति । सोमग्रहैर्वषट्कारानुवषट्कारौ । सुराग्रहाननुप्रकम्पयन्ति । व्याख्यातः सोमस्य भक्षः ॥ ३१ ॥

संपृचः स्थेत्यध्वर्युः सोमग्रहैः सह प्राङ्मुखो गच्छति । उत्तरवेदिं प्राप्य दक्षिणाऽतिक्रम्योदङ्मुखस्तिष्ठति । ऋत्विजोऽपि सोमग्रहैः सह तिष्ठन्ति । तथैव चमसाध्वर्यवः । असंभवे यथावकाशम् । विपृचः स्थेति प्रतिप्रस्थाता सुराग्रहैः सह प्रत्यङ्मुखो गच्छति अपरया द्वारा निष्क्रम्य सदः प्रविश्यापरया द्वारा सदसो निष्क्रम्य मार्जालीयं गत्वा वैश्येन सहोदङ्मुखस्तिष्ठन् वषट्कृते सोमग्रहाणां सह चमसैः प्रक्षेपः । प्रजापतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु स्वाहा, इति षोडशिमन्त्रेण जुह्वत्यृत्विजोऽध्वर्युश्चमसाध्वर्यवश्च तूष्णीमनुवषट्कारे च होमः सर्वेषां च सुराग्रहान् वषट्कारानुवषट्कारयोरनुप्रकम्पयन्ति । सोमग्रहाणां चमसानां च प्रजापतिर्देवता । सुराग्रहाणां च तथैव । विभ्राडिति सौर्यप्राजापत्यानामपि मन्द्राऽभिभूतिरिति वा ॥ ३० ॥ ३१ ॥

विराट्छन्दस इति भक्षमन्त्रꣳ संनमति ॥ ३२ ॥

विराट्छन्दस इति चमसस्य ॥ ३२ ॥

दक्षिणस्यां वेदिश्रोण्यां वाजसृतो विमाथीकृत्य सुराग्रहान् भक्षयन्ति ॥ ३३ ॥

अत्राऽऽपस्तम्बसूत्रे विशेषः—'मारुत्या आहवनीयानि सोमग्रहाꣳश्चर्त्विग्भ्य उपहरन्ति । अनवदानीयान् सुराग्रहाꣳश्च वाजसृद्भ्यः । तानि दक्षिणस्यां वेदिश्रोण्यां विमाथीकृत्य भक्षयन्ति ' (आप० श्रौ० १८–७–८ ) इति । दक्षिणस्यां वेदिश्रोण्यां विमाथीकृत्याऽऽच्छिद्याऽऽच्छिद्य भक्षणमिष्टिविकारा यदि सुरा इडोपाह्वानवदुपहूय भक्षणं भवति ॥ ३३ ॥

अनुयाजैः प्रचरति ते व्यूढासु स्रुक्षु सारस्वतप्रभृतीनामुत्तरेषां दैवतेन प्रचरति ॥ ३४ ॥ अपि वा यत्रैवेतरेषां पशूनां वपाभिः प्रचरेत् ॥ ३५ ॥ यत्रो हैव हविर्भिस्तद्धविर्भिर्मारुत्या अवदानीयानृत्विग्भ्य उपहरति ॥ ३६ ॥ अनवदानीयान्वाज-

**सृञ्जयस्तानि दक्षिणस्यां वेदिश्रोण्यां वाजसृतो विमार्थीकृत्य भक्षयन्ति ॥ ३७ ॥**

गतम् प्रजापतिश्च सम्राड्वरुणश्च (इति) सोमग्रहणां भक्षणं, सुरा यदि सोमविकारा तदा तु मार्जालीये विहृते इध्माधानपरिस्तरणादि होमश्च । दक्षिणस्यां वेदिश्रोण्यां ( अविभज्य वा ) भक्षयेदिति वैखानसः । मारुतशेषभक्षणं सर्वेषां ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥

**ककुदो राजपुत्रो ध्रुवगोपो नैवारगोपो वा प्राश्नाति । उभौ वा । सर्वे वा ककुदम् ॥ ३८ ॥**

राजपुत्रेण ककुद्भक्षणं सर्वेषामाचमनम् । ( यद्यपि वक्ष्यमाणविधिः पूर्वमेवोक्तः परंतु नास्ति क्रम इत्येके व्याचक्षते । ) अग्नीदौपयजानित्यादि । गुदकाण्डैः सर्वैः सह समुद्रं गच्छत स्वाहा, सर्वत्र गच्छतेति । स्वरुहोमे सर्वान्सह द्यां वो धूमो गच्छत्वन्तरिक्षमार्चिः पृथिवीं भस्मना पृणध्व९ स्वाहा इति । सर्वजाघनीभ्यश्चतुरवदानम् । शूलोद्वासनकाले शुचः स्थ तं पाप्मानमभिशोचत। सुमित्रा न आपः० । यूपोपस्थानकाले यूपवस्त्राण्यादायाध्वर्यवे प्रयच्छति । रशना अध्वर्यव इति च्छन्दोगवचनात् । अथाध्वर्युरुपद्रष्टृ तानि वस्त्राणि ददाति । गोच(गाश्च)तस्रः सोमप्रवाकायेति वचनात् । यस्य यस्य या हिरण्यमालोपयुक्ता तां तां तस्मै तस्मै ददाति ॥ ३८ ॥

**संतिष्ठते वाजपेयः ॥ ३९ ॥**

ब्राह्मणतर्पणान्तं कृत्वा, अग्निं नराद्युदवसानीयान्तं, समाप्यते वाजपेयः ।

अथ कुरुवाजपेयस्य कर्म । पूर्वोक्तकाले कुरुवाजपेयेन यक्ष्य इति संकल्प्य । पूर्वोक्तफलानि सर्वाणि । माध्यंदिने सवने सर्वेषु नाराशंसेषु दाक्षिणौ होमौ हुत्वा हिरण्यमुद्गृह्य रूपेण व इत्यादि हिरण्यं पूर्णपात्रमित्यादीनि दत्त्वा वयसो वयस इत्यादि दानं सप्तदश सप्तदश वयसां सहस्रं चतुःशतं पञ्चचत्वारिंशद्ददाति । एकस्यैकाहायनप्रभृत्या पञ्चहायनेभ्यश्चमसाध्वर्युदानान्तं कृत्वा प्रसर्पकाणां च दत्त्वा, एतत्ते अग्न इति । अग्ने नय (इति) एवं वयसो वयस इत्यादिदानं, दक्षिणाविभाग समश एव न यावदध्वर्यव इति । सदस्यो नित्य इति भाष्यकृत् । एवमशक्तस्य सप्तदशैव गा ददाति, इति च्छन्दोगवचनात् । सप्तदशैव विभागास्ताः सममृत्विग्भ्यो विभजेदिति च्छन्दोगवचनात् । ऋत्विङ्नमस्कारं कृत्वा विषाणप्रासनं यज्ञपतिरित्यादि माहेन्द्रग्रहणात्पूर्वं सर्वं कृत्वा नैवारसर्पिरानीय चात्वालेऽवदधाति । अथ शुक्रपात्रेण माहेन्द्रम् । असर्जि । अप्रस्तुतें

---

१ भक्षयेयुरिति । २ मालामति ।

क्षत्रस्योल्बमसि, इति पूर्ववत् । अत्र नाऽऽजिधावनं रथसंस्कारकत्वात् । रथादीनामभावात्केचित् एकेन रथेनाऽऽजिधावनमिच्छन्ति कुरुवाजपेये । तदा (वैश्यरथकारयोः) राजन्यवैश्ययोश्च नेष्टः । शिष्टं सर्वं पूर्ववदिति । संतिष्ठते कुरुवाजपेयः ॥ ३९ ॥

**वाजपेयेनेष्ट्वा सौत्रामण्या यजेत ॥ ४० ॥**

तेनेष्ट्वा सौत्रामण्या यजेत । मैत्रावरुण्या चाऽऽमिक्षया वा ॥ ४० ॥

**न कंचन प्रत्युत्तिष्ठति ॥ ४१ ॥**

साक्षाद्गुरुर(राव)प्यागते । यावज्जीवं न कंचन प्रत्यवरोहेत्, इत्यापस्तम्बः ॥ ४१ ॥

**श्वेतच्छत्री भवतीति विज्ञायते ॥ (ख०७) ॥ ४२ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने द्वितीयः पटलः ।**

अत्राऽऽपस्तम्बीयेऽप्यधिकमेकं सूत्रयामास—'बृहस्पतिसवेन वा प्रत्यवरोहणीयेन वा यजेत । श्वेतच्छत्री ह भवतीति विज्ञायते' ( आप० श्रौ० १८–७–१८ ) प्रत्यवरोहणं यदि करोति तदा (न) बृहस्पतिसवेन यजेत । यजमानो यावज्जीवं श्वेतच्छत्री भवतीति च्छन्दोगवचनात् ॥ ४२ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने द्वितीयः पटलः ॥ २ ॥

अथ त्रयोदशप्रश्ने तृतीयः पटलः ।

ब्राह्मणक्षत्रियोभयकर्तृकसंस्थारूपो वाजपेय उक्तः । अथैकतरकर्तृको विकृतिभूतो राजसूयो विधास्यते—

**राजा राजसूयेन स्वर्गकामो यजेत ॥ १ ॥**

तत्राकृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारो न तु तेनेष्टवतः । राज्यफलादपि साम्राज्यफलस्यातिशयितत्वेनोत्तमफलसाधनयागानन्तरमवरफलहेतुकक्रतुकरणस्यायुक्तत्वात् । अत एव कात्यायनः 'राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन' ( का० श्रौ० १९ १–१२ ) इति । स चायं राजशब्दः क्षत्रियजातिनिमित्तः प्रदेशान्तरे दृश्यते । तस्य यत्कर्म स्मृतिविहितं तद्राज्यमित्युच्यते । किंच तत्तज्जनपदपुरपरिपालनादि । ननु राज्ययोगाद्राजशब्दप्रयोगः सार्वभौमः । तद्युक्ते ह्यक्षत्रियेऽपि राजशब्दं प्रयुञ्जते जना इति । राज्यं यः करोति स राजेति । एवं च कृत्वा राजसूय एवावेष्ट्यां दर्शनं भवति । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत् । यदि

राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवमिति त्रयाणामपि वर्णानामधिकारं दर्शयति । तत्कथम् । यदि राज्यस्य कर्ता राजा तदैवमुपपद्यते । अत्रोच्यते—न राज्यकर्ता राजेति शक्यते वक्तुम् । न ह्यत्र प्रत्ययलोपः प्रातिपदिकस्य प्रत्यापत्तिर्वा स्मर्यते । राजशब्दात्तु कर्मणि ष्यञ्प्रत्ययो विधीयते । तेन राज्ञः कर्म राज्यमिति शक्यते वक्तुं राज्यस्य कर्ता राजेति । यत्त्ववेष्ट्यां ब्राह्मणादीनां दर्शनमुक्तं तद्राजसूयाद्बहिरन्नाद्यकामस्यावेष्टिर्विहिता तद्विषयमिति । यत्त्वेकदेशे जातौ राजशब्दप्रयोगो योगात्सार्वभौम इत्यत्र ब्रूमः । एकदेशेऽपि शब्दशक्तिमन्तरेण प्रयोगोऽनुपपन्न एव । सार्वभौमस्तु प्रयोगः स उपचारवृत्त्या राज्ञः कर्म कुर्वन् राजेव राजेत्युच्यत इति । तथा च समानचोदनायां दृश्यते—' तस्माद्राष्ट्र्यश्वमेधेन यजेत क्षात्रिययज्ञ उ ( ह ) वा एष यदश्वमेधः ' इति । तथा–तस्माद्ब्राह्मणः क्षात्रियमधस्तादुपास्ते राजसूये यजमानं सन्तमृत्विक्त्वेनेति क्षत्रियस्य राजसूयं दर्शयति ।

राजसूयप्रकरणे ( जै० सू० ४–४–१ ) इष्टिपशुसोमयागा अयागाश्च होमविदेवनादयः सर्वे फलाकाङ्क्षा अपि श्रुता न स्वाराज्येन फलेन संबध्यन्ते भावार्थाधिकरणन्यायेन ( जै० सू० २–१–२ ) यजेरेव फलभावनाकरणत्वादयागानां तदङ्गत्वोपपत्तेः । राजसूयपदस्य यजिसामानाधिकरण्येन तन्मात्रनामत्वाच्च । न च राजा सोमः सूयतेऽभिषूयतेऽस्मिन्निति व्युत्पत्त्या राजसूयशब्दस्य सोमयागमात्रवाचित्वात्तेषामेव फलसंबन्धोऽस्त्विति वाच्यम् । राज्ञा क्षत्रियेण सूयते निष्पाद्यत इति व्युत्पत्त्या सर्वेष्वप्युपपन्नत्वेन यजिसंकोचे प्रमाणाभावात् । अत एव राजा क्षत्रियः सुनोति स्नाति यत्रेति व्युत्पत्त्याऽभिषेचनीयस्यैव तन्माहेन्द्रस्तोत्रकालाभिषेकवत्त्वसंबन्धेन राजसूयपदप्रसिद्धेस्तस्यैव फलसंबन्ध इत्यप्यपास्तम् । उक्तव्युत्पत्त्या सर्वपरत्वसंभवे यजिसंकोचे प्रमाणाभावात् । अतः सर्वे यागा एवं फलप्रयुक्ता इति विदेवनादीनां तद्विकृतावतिदेशः ॥ १ ॥

तैष्याः पौर्णमास्याः पुरस्तात्पञ्चरात्रे मासि दीक्षेत ॥ २ ॥

पौषपौर्णमास्या उपरिष्टात्पक्षे गते यद्यजनीयं तत्र दीक्षा माघप्रतिपदीत्यर्थः । तथा चाऽऽह कात्यायनः—'माघी( घ ) पक्षयजनीये दीक्षा' ( का० श्रौ० १५–१–३ ) इति । सूत्रान्तरे तु वसन्तादौ फाल्गुन्यां पौर्णमास्यां प्रथमायां वा राजा क्षत्रियोऽभिषिक्तो वा इष्टप्रथमयज्ञ आमावास्येन हविषेष्ट्वा पत्नीभिः सह प्राणानायम्य संकल्पं करोति, इति । अत्र संकल्पः—राजसूयेन यक्ष्ये शतसहस्रदक्षिणेन वा स्वर्गं लोकमवाप्नवानीति संकल्पः ॥ २ ॥

यथाऽस्यां परस्मिन्संवत्सरे तैष्यां पौर्णमास्या-

मभिषेचनीयायोक्थ्याय दीक्षा प्रवत्स्यतीति ॥ ३ ॥

स च सोमयागो दीक्षासंबन्धात् ॥ ४ ॥

ज्योतिष्टोमेनाग्निष्टोमेन प्रथमं यजेत ॥ ४ ॥

ततः पवित्रेण यक्ष्ये । विद्युदसि० । ततः सोमप्रवाकवरणमधुपर्कौ । सोमप्रवाकः—बुक्कवर्मणो राजसूयो भविष्यति । तत्र भवताऽऽध्वर्यवं कर्तव्यम् । कच्चिन्नाहीन इति पृष्टे नाहीनो राजसूय इति प्रतिवचनम् । ननु चाहर्गणत्वसामान्यादहीनत्वप्राप्त इदमुच्यते, तत्र द्राह्यायणेन त्रिरात्रप्रभृतिपञ्चाहर्गणादन्यत्र राजसूयचातुर्मास्याभ्यामित्युक्तम् । तस्मान्नाहीनो राजसूय इति प्रतिवचनम् । होतृवरणकाले भार्गवो होता भवति । तं वृणीते । न काण्वकाश्यपादीन् । दशपेये भार्गवो होता भवति ( तै० सं० १–८–२० ) इति ( ब्राह्मणात् ) श्रुतेः । पवित्र ऋत्विजस्त एव कृत्स्नस्य राजसूयस्य । अथ वा—कर्मणि कर्मणि पृथग्वरणम् । दशपेयेऽपि भार्गवमिति बौधायनवचनात् । दशपेय एव भार्गवमिति गम्यते । देवयजनयाञ्चा(च्ञा)पक्षे राजा देवयजनमित्यनेनैव विधिना, समारोपणकाले गार्हपत्यादीन्सर्वानग्नीन्स(दिसर्वाग्नीनां स)मारोपणं संभ्यावसथ्ययोश्च । तौ नियतौ । पङ्क्तिर्वा एषेति श्रुतेः । संभारयजूꣳषि हुत्वा सोममाहृत्य परिवेषणं च । ततो न्यग्रोधस्तिभिनीराहृत्य परिवेषणम् । न्यग्रोधफलानि । सप्तहोतु (होमं हुत्वा) स्वे दक्ष इत्युपस्थानम् ।

अथ दीक्षणीयाया अन्वाधानम्—अजस्रं त्वा० अन्नमावसथीयं० व्रतकाले वायो व्रतपते० अवहननकाले हविष्कृदागहीत्याह्वानम् । पुरोहितप्रवरेण प्रवृ(वर)णम् । अवदानकाले पूर्वप्रथमान्यवद्येद्व्रतश्रीत्वात् । एवं पत्नीसंयाजान्ते दीक्षणीयेष्टिः संतिष्ठते । आवेदनकालेऽदीक्षिष्टायं ब्राह्मणो राजेन्द्रश्चोलवर्मणः पुत्र इति । यवागूव्रतं, प्रायणीया सोमक्रयणकाले दक्षिणे चर्मपक्षे राजानं निवपति । तत्समीपे न्यग्रोधफलानि निदधाति । सोमाभिधायकमन्त्राणां फलेषूहेन प्रयोजनमिच्छन्ति मीमांसकाः । नैमित्तिकमतुल्यत्वाद् समानविधानं स्यादिति न्यायेन । सूत्रकारस्य तु मन्त्राणां निवृत्तिः । तूष्णीकं सम्रृन्मयं चेति वचनात् ।

अत्र सोमक्रयणे विशेषः—अꣳशुना ते अꣳशुरिति सोममभिमन्त्र्य तूष्णीं फलानि अभि त्यं देवमिति मीत्वा सोमम् । तूष्णीं फलानि । प्रजाभ्यस्त्वेत्यादि सोमं ते क्रीणानीति जपित्वा गवा ते तस्या आत्मा० द्वाभ्यां राजसूयस्येति वचनात् । द्वाभ्यां शताभ्यां क्रयः । शतद्वयस्य सप्तसोमानां सप्तधा विभागः । एकैकस्याष्टाविंशतिः, एकैकस्य

द्वाविंशतिर्वा । तस्यान्त्यवृद्धिन्यायेनान्त्ये (न्ते) निवेशः । क्षत्त्राणां भृतौ, अन्यत्राष्टाविंशत्या, एको(कया)गवा ते क्रीणानीत्युक्तम् । तस्याः पांसुग्रहणं, सा द्विरूपा द्विरूपया राजन्यस्येति वचनात् । अत्र सप्तविंशत्या गोभिस्ते क्रीणानीति अस्मे ज्योतिरित्यादि ।

आतिथ्यया प्रचर्य यवाग्वा व्रतं प्रवर्ग्यसंभरणकाल इदमहमामुष्यायणं द्वितीयविभक्त्या बुक्कवर्माणं कर्णाटकविशां पर्यूहामीति सिकताव्यूहनम् । महावीरप्रतिष्ठापनकाले धर्माऽसि सुधर्मा मेऽन्यस्मे क्षत्राणि धारयेत्याप्यायनं फलानामपि । उपसद्व्रतं स्तनकल्प एव । शेषमग्निष्टोमवत् ॥

महारात्रे बुद्ध्वा—ध्रुवं प्रयुज्य षोडशिपात्रं प्रयुनक्ति, अत्यग्निष्टोमवत् । केचिन्नेच्छन्ति । प्रकृतावाग्निष्टोमे षोडशीति द्रोणकलशद्वयं पूतभृद्द्वयमाधवनीयद्वयं च ग्रावचर्मणोरभेद इत्येके । ग्रावचर्मणोरभेद इति बह्वृचवचनात् । वसतीवरीणामपां प्रपा(सा)दनकाले पूर्वया द्वारा गतश्रीत्वात् । अभिषवकाल इन्द्राय त्वा वृत्रघ्न इति कृत्वा प्रत्यवरोह्य फलान्येव कुर्वन्ति । महाभिषवं कृत्वा संभृत्य चर्मग्रावाणावपोह्यापरं चर्म ग्राव्णः प्रोक्ष्याऽऽसाद्यापां क्षयान्तं कृत्वा काले वा सह कृत्वा फलान्यपरे न्युप्य प्रागपागित्यादि । नात्रावीवृधं० । आमास्कानिति द्रप्सश्चस्कन्देति भवतः । केचिन्नेच्छन्ति । एवमभिषुत्य प्रपीड्य लौकिकेन दध्ना संसृज्यान्यस्मिन्नाधवनीयेऽवनयति । ध्रुवं गृहीत्वा षोडशिग्रहणम् । ततो न्यग्रोधकलशं प्रतिष्ठाप्य संमार्जनं कृत्वा तस्मिन् पवित्रं वितत्य फलरसात् किंचिदानयन्ति । एकधनानां यथार्थमिति । सोमस्य कृत्वा पश्चात् फलानां मैत्रावरुणचमसाद्यो उभयत्र । ततः पवमानग्रहादिफलानामपि द्वौ समुद्रौ द्वे द्रधसी भूताः स्थ० विष्णोरिन्द्रस्य विश्वेषां देवानामिति पृथगेव कृत्वा सोम त्वामिति निवृत्तिः । शृताः स्थ ० प्रजापतेरिन्द्रस्य विश्वेषां देवानां शृतस्त्वामिति भवति । यथा व्रीहिमन्त्रस्य यवप्रयोगे निवृत्तिस्तद्वदिति । चमसोन्नयनकाले यजमानचमसमुन्नेता फलरसेनोन्नयति । द्रोणकलशादुपस्तीर्येत्यादि चमसेषु हूयमानेषु मध्यतःकारिणां चमसिनां त्रयाणां हुतेऽन्तःपरिध्यङ्गारं निर्वर्त्य दर्भतरुणेन गृहीत्वाऽहं त्वदस्मि० ( इति ) तस्य चमसाध्वर्युरङ्गारे चमसं ( सेन ) जुहोति । अनुवषट्कृते जुहोति तूष्णीम् । भक्षणकाले भक्षेहीत्यवेक्ष्य नृचक्षसं त्वा० यदत्र शिष्टमिति अहं तदस्मि० इति भक्षयति यजमानः शं न एधीति । अपः ( इति ) बह्वृचवचनात् । सर्वत्र यजमानचमसेष्वेवं प्रयोगः ॥ ४ ॥

पश्चापवर्गो भवति

अपवर्गः परिसमाप्तिः ॥ ५ ॥

**शतसहस्रं सर्वेषु राजसूयिकेषु सोमेषु समशः प्रतिविभज्यान्वहं ददाति ॥ ६ ॥ तथा दक्षिणा नयेत् ॥ ७ ॥ यथाऽस्याहानि स्वकालानि स्युः । शेषमनुदिशेत् ॥ ८ ॥**

दक्षिणाकाले पञ्च सहस्राणि धेनवो ददाति पवित्र इति । शतसहस्रं लक्षं सर्वेषु राजसूयिकेषु सोमेषु पवित्रादिषु सप्तसोमयागेषु च । स्पष्टमन्यत् । दक्षिणानयनकाले यथा प्रधानोत्कर्षो मा भूत्तथा नयनम् । एतदुक्तं भवति–दश वा विंशतिं वा निनीय शिष्टा यत्र कुत्रचित् स्थिता ददाति । तृतीयसवन ऋजीषमभिषुत्य फलऋजीषमभिषुण्वन्ति । विभज्याऽऽशिरावनयनं पूर्वया द्वारा प्रवेशनमाशिरस्याग्निष्टोमचमसैः प्रचर्य षोडशिहोमेन वा । अवभृथे तूष्णीं फलऋजीषप्रोक्षणं तन्त्रेण प्रक्षेपः । केचिच्छेदेन बिन्दुस्पर्शेन फलस्य तूष्णीम् । अनूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति । राज्ञो राज्ञां भक्ष्यस्य वेत्यन्यत्सर्वमग्निष्टोमवत् ॥ ६ ॥ ७ ॥ ८ ॥

**राजसूयेष्टिपशुबन्धानामन्वहं चोदनात् ॥ ९ ॥**

अनुमत्यादय इष्टय, पवित्रादयः सोमाः, मह्लादयश्च पशवः, एते भिन्नतन्त्रा भवन्ति । कुत एतत्–अन्वहं चोदनात् । अन्वहमेकैकम् ॥ ९ ॥

**तेषां दक्षिणापृथक्त्वेनेष्टिपृथक्त्वं प्रतीयात् ॥ १० ॥**

तेषामिष्टिपशुबन्धानां दक्षिणापृथक्त्वेन चोदनादिष्टिपृथक्त्वं जानीयात् । अन्ये त्वेवं चाश्वदाम्यग्रहणं तिस्रोऽनूबन्ध्यास्त्रैधातवी[1] चात्र भवन्ति ॥ १० ॥

**अन्यादिशामवेष्टेः पृथग्दक्षिणानि तान्येकतन्त्राणि भवन्ति ॥ ११ ॥**

उदाहरणार्थमिदम् ॥ ११ ॥

**श्वोभूत आनुमतप्रभृतिभिरन्वहं यजेत ॥ १२ ॥**

पवित्रस्यैका दीक्षा तिस्र उपसदः पञ्चम्यां प्रसुतः श्वोभूते षष्ठीप्रभृत्यनुमतादिभिरष्टाभिरिष्टिभिर्यजेत ॥ १२ ॥

**अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीति यथासमाम्नातम् । पिष्टन्नानुमतं पश्चादुत्तरतश्च ऽवशातयति ॥ १३ ॥**

आरम्भार्था नान्वारम्भणीया षष्ठ्यां प्रातरग्निहोत्रं हुत्वा, इष्ट्या यक्ष्ये । अत एव यत्र राजसूयादाविष्टिपशुरूपाणि प्रधानान्येवान्यप्रधानसंयुक्तानि तत्र सत्यपि

---

१ क. 'वीया चा' ।

तेषां प्राधान्ये तत्तादिष्ट्या यक्ष्ये, इत्यादिसंकल्पस्य ' तत्तदिष्टिर्मे जायताम् ' इत्याकारकेच्छामन्तरेणापि ' राजसूयो मे जायताम् ' इत्याकारकराजसूयत्वप्रकारकेच्छाजन्यप्रवृत्त्याऽप्युत्पत्तिसंभवेन तत्तादिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावान्न ततः पूर्वं तावदारम्भणीया न वा ' राजसूयेन यक्ष्ये ' इति महासंकल्पात्पूर्वं तस्यापि राजसूयत्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेन तत्तादिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात् । नहि राजसूयत्वं दर्शपूर्णमासानिष्ठप्रकृतितानिरूपितविकृतितावच्छेदकं तस्य सोमयागेष्वपि सत्त्वेनातिप्रसक्तत्वात् । अत एव यत्र चातुर्मास्यादावाग्रयणादौ वा नातिप्रसक्तं चातुर्मास्यत्वादि तत्र प्रतियागं भिन्नातिदेशकल्पने सत्यपि तस्योद्देश्यतावच्छेदकत्वे न काचित्क्षतिः ।

वस्तुतस्तु—प्रकृतावपि दर्शपूर्णमासत्वं नोद्देश्यतावच्छेदकमपि त्वाग्नेयत्वादिकमेव कालैक्यात्तु तन्त्रेण करणम् । 'दर्शपूर्णमासाभ्यां यक्ष्ये ' इत्यस्यापि च ' आग्नेयादिभिर्यक्ष्ये ' इत्येवार्थः । ततश्च विकृतावपि चातुर्मास्यादौ तत्तद्यागत्वमेवोद्देश्यतावच्छेदकं कालैक्याच्च तन्त्रेण करणम् ' चातुर्मास्यैर्यक्ष्ये ' इत्यस्य च ' तत्तद्यागैर्यक्ष्ये ' इत्येवार्थ इति न कश्चिद्विरोधः । अतस्तत्र भवत्येव तदारम्भेऽन्वारम्भणीया ।

प्रकृते तु सत्यपि तत्तादिष्टित्वादेरुद्देश्यतावच्छेदकत्वे तत्तत्सोमत्वादेरप्युद्देश्यतावच्छेदकत्वान्नान्वारम्भणीया । प्रकृतौ हि दर्शपूर्णमासावारप्स्यमान, इत्यनेन दर्शपूर्णमासयोर्विशेषणत्वनिर्देशादपूर्वसाधनत्वलक्षणवेलायां प्रकृतापूर्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नत्वे सति निरुक्तकारणतानवच्छेदकानवच्छिन्नत्वमुद्देश्यताविशेषणं विवक्षणीयम् । अतश्च राजसूये तादृशोद्देश्यताभावान्नान्वारम्भणीया । अत एव प्रकृतौ—'अग्निहोत्रं दर्शपूर्णमासौ च मे जायताम्' इत्याकारकेच्छाऽपि नोद्देश्यताघटिका । अन्यथाऽग्निहोत्रीयप्रथमप्रयोगीयाद्यपदार्थस्यापि तादृशोद्देश्यताकप्रवृत्तिविषयत्वात् तत्राप्यन्वारम्भणीयापत्तेः । अतस्तादृगिच्छोत्तरं ' दर्शपूर्णमासौ जायेताम् ' इत्याकारिकेच्छा जायते सैवोद्देश्यताघटिकेति ध्येयम् ।

विद्युद्वृष्टी कर्मणि कर्मण्यादावन्ते च भवतः । अन्वाधानादि अद्य यज्ञाय० इमामूर्जं षष्ठीं० ऐष्टं९ हविः० पौर्णमासतन्त्रं, पात्रप्रयोगकालेऽष्टौ कपालानि वर्षिष्ठमेककपालं स्फ्यश्च द्वंद्वमवशिष्टानि प्रकृतिवत् । अन्वाहार्यस्थालीवर्जं च । चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिदेवताऽनुमतिः ' अमावास्या सिनीवाली पौर्णमास्यनुमतिः ' इति श्रुतेः । ' कलाहीने साऽनुमतिः पूर्णे राका निशाकरे ' इत्यभिधानात् । सा चानुमतिरत्र देवता पुरोडाशो द्रव्यमित्येतदेकं कर्म । दक्षिणाभिधानेन वक्ष्यमाणेभ्यः कर्मभ्यो भिन्नाधिकारावगमात् । निर्वपणकाले देवस्य त्वा० अनुमत्यै जुष्टं निर्वपामीति निर्वपति ।

अनुमते हव्य॰ रक्षस्वेत्यधिवापनान्तं कृत्वा पिष्टानामनुमन्त्रणं शम्यापश्चादुत्तरतश्च व्यवशातयति निपातयति तण्डुलान् ॥ १३ ॥

ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालं कुर्यात् ॥ १४ ॥

अस्मिन्कर्मणि पुरोडाशार्थं तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याधातुमधः स्थापितायाः शम्यायाः पश्चाद्ये तण्डुलपिष्टलेशा अवशीयन्तेऽधः पतन्ति तल्लेशजातं द्रव्यं निर्ऋतिदेवताकं, तदिदमपरं कर्म पृथग्दक्षिणाभिधानात् । आनुमतं पिष्ट्वा नैर्ऋतं पेषणं भवति ॥ १४ ॥

उपधायाऽऽनुमतस्य कपालानि नैर्ऋतस्य कपालमुपदधाति ॥ १५ ॥

अनुमतेरष्टावुपधाय नैर्ऋतस्यैककपालं तूष्णीं वेत्येके । प्रथममन्त्रेणोपदधातीत्यपरे । अनुमत्यै संवापः, नैर्ऋतं तूष्णीम् । अन्यस्यां पात्र्यां नैर्ऋतस्य तूष्णीमुपचारः । पुरोडाशद्वयमुद्वास्योत्तिधा(सं धा)रयति ॥ १५ ॥

आसाद्या(द्याऽऽ)नुमतं नैर्ऋतेन प्रचराति ॥ १६ ॥

प्रियेणेत्यासादनम( मा )नुमतस्य, यज्ञोऽसि॰ अयं यज्ञः॰ ममाग्ने॰ चतुर्होता॰ इत्यासन्नाभिमर्शनम् ॥ १६ ॥

वीहि स्वाहाऽऽहुतिं जुषाण इति स्रुवेण गार्हपत्ये जुहोति ॥ १७ ॥

अध्वर्युयजमानयोरार्तिनिवारणाय जुहुयादित्यर्थः । गृहपतिर्देवता ॥ १७ ॥

दक्षिणाग्नेरेकोल्मुकं धूपयाति ॥ १८ ॥

दक्षिणाग्नेरुल्मकनयनं विधत्ते—' एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम् ' ( तै॰ ब्रा॰ १–६–१ ) इति । उल्मुकेन युक्ता इत्यध्याहारः । निर्ऋतेरेकोल्मुकप्रियत्वमर्थवादान्तरगतं हिशब्देन सूच्यते ॥ १८ ॥

पराचीनं दक्षिणापरमवान्तरदेशं हृत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय जुषाणा निर्ऋतिर्वेतु स्वाहेति ॥ ( ख॰ ८ ) ॥ विस्रंसिकायाः काण्डाभ्या॰सर्वहुतं नैर्ऋतं जुहोति ॥ १९ ॥

दक्षिणपश्चिमयोरवान्तरदेशमङ्गुलिनिर्देशेन विधत्ते—इमां दिशं नयन्ति । एषा वै निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतं निरवदयते, ( तै॰ ब्रा॰ १–६–१ ) इति । इरिणमूषरक्षेत्रं, तच्च स्वकृतं स्वतः सिद्धं न तु यतः कुतश्चिदादायोषाः प्रक्षिप्ताः । प्रदरः स्वतः सिद्धं भूच्छिद्रम् । (तस्मिन्) तत्रोपसमाधाय नैर्ऋत॰ सर्वहुतं जुहोति ॥ १९ ॥

अङ्गुष्ठाभ्यामेष ते निर्ऋते भाग इति वा ॥ २० ॥

मुञ्चेमम१ंहस इत्यन्तेनाङ्गुष्ठाभ्यां विस्रंसिकाकाण्डाभ्यां वा प्रदेशिनीभ्यामित्यर्थः । यद्वा-चोदकप्राप्तं जुह्वा होममपवदितुं विधत्ते—अङ्गुष्ठाभ्यां जुहोतीति ॥ २० ॥

वासोऽभिन्नान्तं दक्षिणा कृष्णं वासः कृष्णदशम् ॥ २१ ॥

कृष्णं वासः कृष्णदशमध्वर्यवे ददाति । मुख्यब्राह्मणे विहितां दक्षिणां प्रशंसति— कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निर्ऋत्यै रूपम् । रूपेणैव निर्ऋतिं निरव-दयते (तै०ब्रा० १–१–१) इति राक्षसजातेः पापरूपाया निर्ऋतेर्देहः कृष्णवर्णः ॥२१॥

अपः परिषिच्याप्रतीक्षमायन्ति ॥ २२ ॥

तूष्णीं परिषेचनं कृत्वा होमदेशमनवेक्षमाणा आयन्ति । पृष्ठभागदर्शनरहितं प्रत्या-गमनं विधत्ते—अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै (तै० ब्रा० १–६–१)अदर्शना-येत्यर्थः ॥ २२ ॥

स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति ॥ २३ ॥

अथ हस्तपादान्प्रक्षाल्यैतेनैव पथा यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेति । न स्वाहाकारस्तं पू(स्तत्पू)र्वहोमीयमिति ॥ २३ ॥

अ(आ)नुमतेन प्रचरति य उदञ्चोऽवशीयन्ते तानुदक्परेत्य शुक्त्या वल्मीकवपामुद्धत्ये-दमहममुष्याऽऽमुष्यायणस्य क्षेत्रियमवयज इति शुक्त्या वल्मीकवपायां जुहोति । तामपिदधा-तीदमहममुष्याऽऽमुष्यायणस्य क्षेत्रियमपिदध इति शुक्त्या वल्मीकवपया वा ॥ २४ ॥

अयं वेद इत्यादि अनुमत्या अनुब्रूहीति अनुमतिं यज । अनुमत्याऽहमन्नादः० धेनु-र्दक्षिणा । चातुर्मास्यपर्जन्यवदूहो यज्ञ शं च म वर्जं ब्राह्मणभोजनान्तम् । शम्याया उत्तरतः पतिता ये तण्डुलास्तानादाय शुक्तिकायां च गृहीत्वोत्तरतो गत्वा वल्मीकवपा-यामेकशृङ्गमुद्धत्य, अप उपस्पृश्य इदमहममुष्याऽऽमुष्यायण इति राज्ञो नामग्रहणमा-मुष्यायणस्येति युवप्रत्ययान्तं पितुर्नाम च षष्ठ्यन्तमेव गृह्णाति । एवमत्र प्रयोगः—इदमह१ राजेन्द्रवर्मणो राजेन्द्रचोळायनस्य हेतिमवयजे स्वाहा इति शुक्त्या जुहोति । वल्मी-कवपायां शुक्तिकया मन्त्रेण पूर्ववन्नाम गृहीत्वा तस्यैव शुक्त्याऽपि दधाति । केचित्तु— पेषणकाले पिष्ट्वोत्तरतः पतितांस्तांस्तण्डुलानादायोदक्परेत्येत्यादिशुक्त्योपधानान्तं कृत्वा कपालोपधानादिकं च कुर्वन्ति, इति ॥ २४ ॥

आदित्यं चरुं निर्वपतीति तदुत्तरास्वासामुत्तमा ॥ २५ ॥

श्वो भूतेऽग्निहोत्रꣳ हुत्वा, इष्ट्या यक्ष्ये, इत्यादि । आदित्यं चरुं चातुर्मास्यादित्यवत् । श्वोभूते संकल्पादि आग्नावैष्णवमेकादशकपालं, वामनो वही दक्षिणा वही भारवाही बलीवर्दः । रुद्राय गामिति प्रतिग्रहः । श्वोभूते संकल्पादि । अग्नीषोमीयमेकादशकपालं हिरण्यं दक्षिणा । अग्नये हिरण्यमिति प्रतिग्रहः । श्वोभूते पूर्ववत्संकल्पादि, ऐन्द्रमेकादशकपालं ऋषभो वही दक्षिणा । ऋषभः सेचनसमर्थः साण्डः । समाप्याग्नीन्परित्यज्य तदानीमेव संकल्पादि, द्विहविष्कावन्वाधाय शाखाहरणं, इन्द्राय देवभागं, अमावास्यातन्त्रं० वेदं कृत्वा वेदिकरणं यवाग्वा सायंहोमः, निशायां दोहनं इन्द्राय हविरिन्द्रियं बहुदुग्धीन्द्राय देवेभ्यः, इन्द्राय दधि प्रागुदयादुपक्रमः । पात्रासादनकालेऽष्टौ कपालानि प्रकृतिवत्सर्वाणि पात्राणि प्रातर्दोहपात्राणि । अन्वाहार्यस्थालीवर्जम् । अग्नये जुष्टं निर्वपामीत्यादि, न प्रातर्दोहः । शेषं सर्वं प्रकृतिवत् । ऋषभो दक्षिणा वरुणप्रघासवदूहः ॥ २५ ॥

आग्रयणेष्टिस्तयेष्ट्वा श्वोभूते सरस्वत्यै चरुं निर्वपति । सरस्वते चरुं मिथुनौ गावौ दक्षिणा ॥ २६ ॥

श्वोभूते त्रिहविष्कं, पूर्ववत्संकल्पादि, पुराणानेव व्रीहिश्यामाकान्द्यावापृथिविवर्जमाग्रयणवत्सर्वम् । ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा । सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा । ऐन्द्राग्नवैश्वदेवसौम्यैस्त्रिभिर्हविर्भिर्युक्त आग्रयणरूप एक एव यागः । श्वोभूते सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा, इति । सरस्वतीसरस्वद्देवताभ्यां हविर्भ्यां युक्तो याग एकः । तदेवमादित्यादयः सप्त संपद्यन्ते ॥ २६ ॥

श्वोभूते चातुर्मास्यान्यालभते । तैः संवत्सरं यजते ॥ २७ ॥ न शुनासीरीयं प्रतिसमस्यति ॥ २८ ॥

श्वोभूते चातुर्मास्यान्यालभते । चातुर्मास्यैर्यक्ष्य इति संकल्पादि । न पञ्चहोता नान्वारम्भणीया । वैश्वदेवेन यक्ष्य इत्यादि । एतेषां वैश्वदेवादीनां चातुर्मास्यानामानुमताद्यनन्तरभावित्वं पाठप्राप्तमापस्तम्बो विशदयति—एताभिरन्वहमिष्ट्वा चातुर्मास्यान्यारभते तैः संवत्सरं यजेत इति । तेषु चातुर्मास्येषु प्रथमपर्वणो वैश्वदेवस्य देशकालौ सूत्रकारेण व्याख्यातौ—'प्राचीनप्रवणे वैश्वदेवेन यजते' इति । 'फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते' इति च । शेषं पूर्ववत् । न शुनासीरीयं प्रतिसमस्यति । द्व्यहादयो मासान्ता विकल्पा न भवन्ति । चतुर्षु चतुर्षु मासेष्वेव नियमः । आनुमितान्

फाल्गुन्यां पौर्णमास्यां शुनासीरीयेणेष्ट्वा ततः पौर्णमासेनेष्ट्वा वपनं कृत्वा चातुर्मास्याङ्गव्रतानि समापयेत् ॥ २७ ॥ २८ ॥

**श्वोभूत इन्द्रतुरीयप्रभृतिभिरन्वहं यजते ॥ २९ ॥**

तस्मिन्नेवाहनि श्वो वा पाक्षिकत्वं सूत्रान्तरमतात् । इन्द्र एव तुरीयो यस्मिन्कर्मणि तत्कर्मेन्द्रतुरीयम् । अन्यदीयरूपापेक्षया तुरीयत्वमनुष्ठाने तु पाठक्रमेण वरुणस्तुरीयः ॥ २९ ॥

अथेन्द्रतुरीयस्य हवींषि विधत्ते—

**आग्नेयमष्टाकपालं निर्वपतीति यथासमाम्नातम् ।**
**चतुर्हविरिन्द्रतुरीयम् । तत्संग्रामे निर्वपेत् ॥३०॥**

इन्द्रतुरीयस्य कर्म—ऐन्द्रतुरीयꣳ हविः० शाखाहरणम् । वत्सापाकरणं प्रकृतिवन्निगमा अमावास्यातन्त्रम् । तदानीमेव सायंदोहः । तण्डुलैरातञ्चनं विष्णो हव्यमिति च कृत्वा न वत्सापाकरणम् । पात्रप्रयोगे शूर्पत्रयं पात्रीत्रयं, शेषं प्रकृतिवत् । शूर्पे पवित्रे निधाय, अग्नये जुष्टं निर्वपामीति व्रीहीन् । अन्यस्मिञ्शूर्पे गावीधुकान् । रुद्राय जुष्टं० पुनरन्यस्मिञ्शूर्पे यवान्वरुणाय जुष्टं० एवमेवेष्टितन्त्रं ब्राह्मणभोजनान्तम्॥ ३० ॥

**एतस्या एव रात्रेर्निशायां पञ्चेध्मीयेन यजेत ॥ ३१ ॥**

इन्द्रतुरीयकर्म यस्मिन्नहनि क्रियते तस्यां रात्रौ सायमग्निहोत्रꣳ हुत्वा पञ्चेध्मीयेन यक्ष्य इत्युक्त्वा ॥ ३१ ॥

**निशायामपामार्गहोमेन चरन्ति ॥ ३२ ॥ सायꣳ हुतेऽग्निहोत्रेऽपां न्ययनादपामार्गानाहृत्य तान्सक्तून्कृत्वा दक्षिणाग्नेरेकोल्मुकं धूपयति ॥ ३३ ॥ पराचीनमुत्तरापरमवान्तरदेशꣳ हृत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय ॥(ख०९)॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि स्वाहेति पर्णमयेनार्कमयेण वा स्रुवेणापामार्गसक्तूञ्जुहोति । इन्द्रस्य त्वौजसे जुहोमि स्वाहेति वा । हतꣳ रक्ष इति स्रुवमनुप्रहृत्यावधिष्म रक्ष इति हुत्वोपतिष्ठते ॥ ३४ ॥ वरो दक्षिणा । यद्धस्ते तद्दक्षिणा ॥ ३५ ॥**

व्युष्टायां पुराऽग्निहोत्रादपामार्गहोमेन चरन्ति ( आप० श्रौ० १८-९-१५ ) इत्यापस्तम्बः । व्युष्टायां संध्याकालेऽपां न्ययनादपां समीपादपामार्गमाहृत्याध्वर्युरेव

सक्तून्कृत्वा दक्षिणाग्नेरेकोल्मुकं ज्वलन्तमग्निं धूपयति । उत्तरापरमवान्तरं मध्यदेशमाहृत्य स्वकृत इरिणे प्रदरे वा संस्थापयति । पालाशेन स्रुवेणापामार्गसक्तुभिर्जुहोति—देवस्य त्वा० इन्द्रस्य त्वा० इति विकल्पो मन्त्रस्य होमे । हत९ रक्ष इति स्रुवस्याग्नौ प्रक्षेपः । अवधिष्म रक्ष इत्युपस्थाय होमकाले यद्वस्त्रमाच्छादयति तस्य दानं वा । गौर्वै वर इति सूत्रकारेणोदाहृतत्वाद्वरो गौः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

एतेनैव यजेत यः पाप्मनो विभीयात्पञ्चेध्मीयेन चराति । चतुर्धाऽऽहवनीयं प्रतिदिशं व्यूहति । मध्ये पञ्चमम् । पृथगिध्मानुपसमाधाय ये देवाः पुरःसद इति प्रदक्षिणमनुपरिक्रामन्प्रतिदिशं चतस्र आहुतीर्जुहोति । मध्ये पञ्चमीम् । समूढ९ रक्ष इति मध्य इध्मानभिसमुह्याग्नये रक्षोघ्ने स्वाहेति पञ्चगृहीतेन पञ्चोत्तरा रथः पञ्चवाही दक्षिणा । प्रष्टिवाही वा ॥ ३६ ॥

चतुरो भागानाहवनीये ( यस्य ) कृत्वा प्रतिदिशमुद्धरेत् । मध्यमं पञ्चमम् । आहवनीयस्य धिष्णिय एव । पञ्च भागान्समिद्भिर्बलवतः कृत्वा जुह्वां पञ्च गृहीतं गृहीत्वा ये देवाः पुरः सदोऽग्निनेत्रा० इति प्राच्यादिषु यथालिङ्गं मध्यमेन पञ्चमेन । देवा देवता । सर्वानाहवनीयभागान्समूढ९ रक्ष इति मध्य एकीकृत्य समिद्भिः प्रज्वाल्यापरं चतुर्गृहीतं गृहीत्वा—अग्नये रक्षोघ्ने स्वाहा । यमाय रक्षोघ्ने स्वाहा । सवित्रे रक्षोघ्ने स्वाहा । वरुणाय रक्षोघ्ने स्वाहा । बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा । इति यथालिङ्गं त्यागः । त्रिपादाधारवदश्वत्रयेणोह्यमानः प्राष्टिवाही । प्राष्टिवाही रथो दक्षिणा ( तै० सं० १–८–७ ) इति मन्त्रवर्णात् ॥ ३६ ॥

तेनैव यजेत यो रक्षोभ्यो बिभीयात्पिशाचेभ्यो वा । तं च यत्कामयते तद्दद्यात् ॥ ३७ ॥

यो रक्षोभ्य इत्ययज्ञसंयुक्तः कल्पः । शेषं स्पष्टम् ॥ ३७ ॥

श्वोभूते देविकाहविर्भिर्यजेत ॥ ३८ ॥

प्रातरग्निहोत्र९ हुत्वा देविकाहविर्भिर्यजेत ॥ ३८ ॥

धात्रे पुरोडाशं द्वादशकपालं निर्वपतीति यथासमाम्नातम् । मिथुनौ गावौ दक्षिणा वत्सतरी वा ॥ ३९ ॥

देविकाहविर्भिर्यक्ष्य इत्यादि । देविकाहविषा९ हविरिदं० । केचिदिष्ट्या यक्ष्य इत्युक्त्वा, ऐष्ट९ हविः० धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरु९ राकायै चरु९ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणा । ब्राह्मणभोजनान्तं समाप्यते ॥ ३९ ॥

**प्रवीता प्रवीयमाणेत्येकेषाम् ॥ ४० ॥**

नवप्रसूता गर्भिणी वा गौः ॥ ४० ॥

**ताभिः प्रजाकामः पशुकामो वा यजेत ॥ ४१ ॥**

ताभिर्देविकाहविर्भिः ॥ ४१ ॥

**आमयाविनं याजयेद्वा धातारं मध्यतः कृत्वा प्रजाकामः पुत्रैर्धातारमुत्तमं कृत्वाऽऽमयावी पशुना यजते ॥ ४२ ॥**

समाप्ते धातृपशुः, पशुबन्धेन यक्ष्य इत्यादि । केचिन्नेच्छन्ति । षड्ढोत्रा, ( उदवसानीय ) उदवसाय पश्विष्टिः, धात्रे त्वा जुष्टमुपाकरोमीत्येव निगमः । उत्तराणि त्रीणि हवींषि अग्निर्वैश्वानरवारुणौ च, समाप्ते पशौ च तस्मिन्नहन्येव । स च विधिरग्रे वक्ष्यति सूत्रकारः ॥ ४२ ॥

**श्वोभूते त्रिषंयुक्तैरन्वहं यजते ॥ ४३ ॥**

पशोरभावे देविकानन्तरे । अथवा पश्वाप्यन्वहं पाक्षिकं सूत्रकारमतात् ॥ ४३ ॥

**आग्नावैष्णवमेकादशकपालं निर्वपतीति यथासमाम्नातं प्रथमं त्रिषंयुक्तं तेन यज्ञकामो यजेत । अग्नीषोमीयमेकादशकपालं निर्वपतीति यथासमाम्नातं मध्यमं त्रिषंयुक्तं वीरजन९ समामनन्ति । सोमापौष्णं चरुं निर्वपतीति यथासमाम्नातमुत्तमं त्रिषंयुक्तं तेन पशुकामो यजेत । वैश्वानरं द्वादशकपालं निर्वपतीति तेन ग्रामकामो यजेत । वारुणं यवमयं चरुमिति सर्वतः प्रादेशमात्रो वारुणश्चरुर्भवति । योग्योऽश्वो व्युप्तवहो वा दक्षिणा । समानतन्त्रौ वैश्वानरवारुणावेके समामनन्ति । (ख० १०)॥४४॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने तृतीयः पटलः ॥**

तासामिष्टीनां कर्म—इष्ट्या यक्ष्य इत्यादि । पौर्णमासतन्त्रम् । अग्नाविष्णुभ्यां जुष्टं० इन्द्राविष्णुभ्यां जुष्टं विष्णवे जुष्टं० । वामन ऋषभो दक्षिणा । पूर्ववत्संकल्पादि । ऐष्ट९

हविः० । पौर्णमासतन्त्रम् । अग्नीषोमाभ्यां० इन्द्राग्नोमाभ्यां० सोमाय जुष्टं० श्यामाकच-रुर्बभ्रुर्दक्षिणा । कपिला गौः । तदानीमेव पूर्ववत्संकल्पादि । सोमापूषभ्यां जुष्टं० इन्द्रापूषभ्यां जुष्टं० पूष्णे जुष्टं० उत्करे त्रिर्निनीय यथाभागं व्यावर्तध्वं पूष्णे जुष्टमधिवपामि संवपामि चरुद्वय( त्रय )मधिश्रित्य पौष्णं पिण्डं स्थाल्यां क्षिपति । श्यामो गौर्दक्षिणा । तदानीमेव संकल्पादि, अग्निर्वैश्वानरेण यक्ष्ये, अग्नये वैश्वानराय जुष्टं० हिरण्यं दक्षिणा । तदानीमेव संकल्प्य वरुणेष्ट्या यक्ष्ये वरुणाय जुष्टं० प्रादेशप्रमाणा स्थाली ऊर्ध्वत्वे तिर्यक्त्वे च, अश्वो दक्षिणा, प्रतिग्रहमन्त्रे वरुणायाश्वमित्याम्नातत्वादश्वस्य वारुणत्वं वारुणो हि देवतयाऽश्वः समृद्धचै ( तै० ब्रा० १–७–२ ) इत्यत्र द्रष्टव्यम् ।

ननु सर्वत्रैकफलसाधनानामनेकेषां कर्मणां फले साहित्यावगमेऽपि देशकालकर्तृभेदे प्रयोगभेदादङ्गावृत्तिरित्युक्तम् । तदिह यत्र देशभेदो नाऽऽम्नातो दक्षिणाभेदमात्रं श्रुतं यथा राजसूये—आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा, इत्यादौ । तत्र किं दक्षिणाभेदात्कर्तृभेदस्ततश्च प्रयोगभेदादावृत्तिः किंवा नेति चिन्तायाम् ।

सत्यपि दक्षिणाभेदे कर्तृभेदे प्रमाणाभावः । न ह्यत्राधिष्ठानभेदस्तत्वापीष्टः, तदैक्यस्योत्तराधिकरणे ( जै० सू० ११–४–२ ) स्थापयिष्यमाणत्वात् । कर्तृभेदस्तु[1] न दक्षिणाभेदव्यापकः, प्रमाणाभावात् । दर्शपूर्णमासे चान्वाहार्यदक्षिणावृत्तावपि कर्तृभेदाभावाच्च । दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्यनेन षण्णां सहितानामेको व्यापकः कर्तृप्रयोगः समे दर्शपूर्णमासाभ्यां यजेत इत्यत्र दार्शिकप्रयोग इव विधीयते । अतश्च सत्यपि कालिकप्रयोगभेदे कर्तृप्रयोगस्यैकत्वात्कर्तृत्वैक्यावगमः ।

वस्तुतस्तु—नात्र दक्षिणाभेदोऽपि द्वादशाहवदेकफलसाधनत्वेनैकप्रयोगत्वावगमे वामनश्यामयोर्मिलितयोरेव दक्षिणात्वात् । अत एव ' अन्वहं द्वादशशतं ददाति ' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेद इत्युक्तम् ।

अतश्च तत्तत्प्रधानाङ्गत्वेन व्यवस्थितयोरपि वामनश्यामयोरेकप्रयोगत्वान्मिलितयोरेव दक्षिणात्वम् । आवश्यकश्चायं न्यायो ब्राह्मणकर्तृकावेष्टिप्रयोगे व्रीहिश्यामाकाग्रयणयोः समानतन्त्रत्वे चेति प्राप्ते—

दक्षिणायाः कर्तृसंस्कारकतया तद्वदेव प्रयोगान्वयित्वाद्युक्तं तद्भेदाक्षेपकत्वम् । न ह्यन्यथा तत्तत्प्रधानानां व्यवस्थितदक्षिणाम्नानं कथमपि संगच्छते । न चात्र द्वादशाहवन्मिलितयोर्दक्षिणात्वं प्रत्येकं दक्षिणापदश्रवणेन भेदावगतेः । द्वादशाहे तु प्रत्येकदक्षिणापदाश्रवणात् तदैक्यमिति विशेषः । न च दर्शे पूर्णमासे च दक्षिणाभेदसत्त्वेऽपि

---

१ कर्तृत्वभेदस्तु ।

कर्तृत्वभेदाभावः। आध्वर्यवादिसमाख्यया तेषां तेषां कर्तॄणां प्रतियागं भेदेनैव विहिततया 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इत्यस्य 'सोमे सप्तदशर्त्विजः' इत्येतद्विध्यन्तरैकवाक्यतया तदर्थवादत्वेन कर्तृप्रयोगविधायकत्वाभावात्। अत एव दर्शे पूर्णमासे च पृथग्वरणानुष्ठानं याज्ञिकानाम्।

एवं च दक्षिणायाः कर्तृत्वभेदद्वारा प्रयोगभेदावश्यकत्वे राजसूयान्तर्गतावेष्ट्यादौ प्रयोगभेदिकाया अपि तस्या अन्नाद्यफलकब्राह्मणादिकर्तृकावेष्ट्यादिप्रयोगे दक्षिणापेक्षायां सति संभवे तत्तत्प्रधानाङ्गत्वेनावगतायास्तस्या एवोपस्थितत्वादाग्नेयीन्यायेन ग्रहणं न त्वन्तःक्रतुप्रयोगे बाधिताया अन्वाहार्यदक्षिणाया इति वक्ष्यते अस्तु वा तत्रापि सा। सर्वथा दक्षिणाभेदे प्रयोगभेद इति सिद्धम्॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने तृतीयः पटलः॥ ३॥

=====

अथ त्रयोदशप्रश्ने चतुर्थः पटलः।

अथ रत्निनां हवींष्यनुदिनं क्रमेण कर्तव्यान्युच्यन्ते। तत्र त्रयोदश हवींषि विधत्ते-

**श्वोभूते त्रयोदश रत्निनाँ हवीꣳषि॥ १॥**

रत्नान्येषां सन्तीति रत्निनः। ब्राह्मणराजन्यवैश्यमहिष्यादयो रत्निनः। तदभिमानिदेवानां प्रियाण्येतानि हवींषि। अतस्तद्गृहेष्वेव गत्वा निर्वपेत्॥ १॥

**यजमानस्याऽऽप्तानां गृहेष्वन्वहं निर्वपति॥ २॥**

आप्तानां ब्रह्मादीनां गृहेष्वन्वहं पृथक्पृथङ्निर्वपेदित्यर्थः॥ २॥

**यस्य यस्य गृहे निर्वपति तस्य तस्य गृहादिष्टिपरिवेषणं दक्षिणा च॥ ३॥**

इष्टिपृथक्त्वाद्दक्षिणाऽपि पृथक्॥ ३॥

**बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे। शितिपृष्ठो दक्षिणेति यथासमाम्नातम्। पुरोहितस्यैकेषाम्॥ ४॥**

रत्निनां हविर्भिर्यक्ष्य इत्यादि, रत्निनां हविषि वरणानन्तरं संकल्पः। अग्नीन्पृथक्पृथक्समारोप्य ब्रह्मणो महर्त्विजो गृहं गत्वा दार्शिकीं वेदिं कृत्वाऽग्निं मथित्वा

स्वस्वायतनेषु निधायोपावरोह्य(हणम्) । एतासामिष्टीनां यस्मिन्गृहे निर्वापस्तस्मादाज्य-पुरोडाशादिदक्षिणाब्राह्मणभोजनार्थानीति आहर्तव्यानि । पौर्णमासतन्त्रं बृहस्पतये जुष्टं० चरुं निर्वपतीत्यादि । शितिपृष्ठः श्वेतपृष्ठः । एवं सर्वत्र यागो द्रष्टव्यः । श्वोभूतेऽग्निहो-त्रं हुत्वा संकल्पादि पूर्ववत् । राजन्यस्य गृहं गत्वा—ऐन्द्रमेकादशकपालम्, ऋषभो दक्षिणा । श्वोभूते संकल्पादि । महिषी प्रथमोढा तस्या गृह आदित्यं चरुं० धेनु-र्दक्षिणा ॥ ४ ॥

**भगाय चरुं वा वातायै गृहे विचित्तगर्भा पष्ठौही दक्षिणा ॥ ५ ॥**

श्वोभूते संकल्पः । ऊढवो ( दासु ) प्रियतमा वावाता । भगाय चरुं० विचित्त-गर्भा व्यक्तगर्भा पष्ठौही दक्षिणा भवतीत्यर्थः ॥ ५ ॥

**नैर्ऋतं चरुमिति सर्वतोऽङ्गुष्ठमात्रो नैर्ऋतश्चरुर्भवति ॥ ६ ॥**

श्वोभूते संकल्पादि । अपुत्रा राजपत्नी केवलं भोगार्था परिवृक्तिः । पुत्रादिभिः परित्यक्ता वेत्येके । तस्या गृहे कर्तव्यं नैर्ऋतं हविः । हविषो द्रव्यं विदधच्चोदक-प्राप्तमवघातं निषेधति—स कृष्णानामिति । नखैर्निर्भिन्नानां कृष्णव्रीहीणां तण्डुलैर्नै-र्ऋतं चरुं निर्वपेत् । स च सर्वतोऽङ्गुष्ठमात्रो नैर्ऋतश्चरुर्भवति नाधिक इत्यर्थः ॥ ६ ॥

**अङ्गुष्ठपर्वमात्रो वा सर्वहुतं नैर्ऋतं जुहोति ॥ ७ ॥**

पर्वसंधिः, न पुरोडाशधर्मः । जुहोतिचोदितत्वात्स्वाहाकारप्रदानत्वाच्चायं होमो दर्विहोमः । कात्यायनेन तु पक्षान्तरं सूत्रितम्—'दर्विहोम एष ते निर्ऋत इति जुहोति । वषट्कृते वा' ( का० श्रौ० १५–३–१४।१५ ) इति । कूटा भग्नशृङ्गा गौर्दक्षिणा । अत्राप्याहाऽऽपस्तम्बः—नैर्ऋतः सर्वतोऽङ्गुष्ठपर्वमात्रश्चरुरित्येके ( आप० श्रौ० १८–१०–१६ ) इति ॥ ७ ॥

**तक्षरथकारावेकस्मिन्गृहे समवनीयाऽऽग्नेयमष्टाक-पालं निर्वपति सर्वायसानि दक्षिणा गोविकर्त्रक्षा-वापावेकस्मिन्गृहे समवनीय वैष्णवं त्रिकपाल-मिति वत्सः श्वेतशबलो दक्षिणा । वैष्णवं त्रिक-पालं त्रयोदशं तक्षरथकारयोर्गृहे । सर्वायसानि दक्षिणा । तक्ष्णो रथकारस्य वेत्येके ॥ ८ ॥**

श्वोभूते संकल्पादि वैष्णवेष्ट्या यक्ष्य इत्यादि । तक्षा वर्धको रथकारः करिष्यां

---

१ तेना° ।

माहिष्याज्जातः ' वर्षासु रथकारस्येत्युदाहृतम् । तयोः साधारणमेकस्य गृहं गत्वा वैष्णवं त्रिकपालं० सर्वायसानि सर्वलोहमयानि पात्राणि दक्षिणा ददाति ॥ ८ ॥

**सेनान्यो गृहे समवनीयाऽऽग्नेयमष्टाकपालं निर्वपतीति हिरण्यं दक्षिणा ॥ ९ ॥**

श्वोभूते सेनान्यो गृहे गत्वाऽऽग्नेयमष्टाकपालं० हिरण्यं दक्षिणा श्वोभूते संकल्पादि सूतः सारथिः, ब्राह्मण्यां क्षत्रियाज्जात इति । तस्य गृहे वारुणं दशकपालं० महानिरष्टः पीडितवृषणो दक्षिणा । श्वोभूते ग्रामण्यो गृहे ग्रामं नयतीति ग्रामणीः । वैश्यानां महत्तरस्तस्य गृहे संकल्पादि। मारुतेष्ट्या यक्ष्ये मारुतं सप्तकपालं० पृश्निः शुक्रः । अल्पतनुरित्यन्ये । श्वोभूते पूर्ववत्संकल्पादि । क्षत्ता नाम यष्टिहस्तोऽन्तःपुराध्यक्षः सर्वेषां नियन्ता प्रतिहारापरपर्यायः । मन्त्री (न्त्रि)दूतो वा । क्षत्रियायां शूद्राज्जातः क्षत्ता, इत्यादि तस्य गृहे सावित्रं द्वादशकपालं० संकीर्णवर्ण उपध्वस्तो दक्षिणा । श्वोभूते संकल्पादि। संग्रहीता नाम रथयोजयिता । संग्रहीता धनसंग्रहकर्ता कोशाध्यक्षो वेति । तस्य गृह आश्विनेष्ट्या यक्ष्ये । आश्विनं द्विकपालं० सवात्यौ समानमातरौ वत्सावेकोदराविस्यर्थः । श्वोभूते संकल्पादि । पौष्ण्येष्ट्या यक्ष्ये । यो राज्ञः प्राप्त षष्ठं भागं प्रजाभ्यो गृह्णाति स भागदुघः । तस्य गृहे पौष्णं चरुं० श्यामा गौर्दक्षिणा ॥ ९ ॥

**रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणा । अर्वापाराव(सिर्वालाद्र)तः केसरपाशा वा गोव्युच्छती(नी)रज्जुः ॥ १० ॥**

श्वोभूते संकल्पादि । अक्षावापो द्यूतकारस्तस्य गृहे गावीधुकोऽरण्यगोधूमनिष्पन्नः । रौद्रं गावीधुकं चरुं० । शबलश्चित्रवर्णः । उद्वारो दीर्घपुच्छः । गोविकर्तस्य वा(र्तुर्वा) । केसरपाशाभिधानी दक्षिणा। कृपणो वालाभिवीतः शबलो वा । त्रिवत्स इति विज्ञायते। असिर्वालावृतो वार्ध्री वालप्रतिग्रथिता गोव्युच्छनी(बरासी)दामतूषा शबलो वा वत्सतरः। अश्वः शोणकर्ण इत्येक इत्यापस्तम्बीये दक्षिणाविशेषा विहिताः । केचित्तु—अक्षावापो नामाक्षाणां क्षेप्ता, अक्षगोप्ता वा द्यूतकारः । गोव्युच्छनी रज्जुर्मृगयासहायभूता । गोहिंसको व्याधः । तयोरुभयोर्गृहेभ्यो गवीधुका आ(ना)रण्यगोधूमान्संभृत्य तै रुद्रदेवत्यं चरुं यजमानस्य गृहे निर्वपेत्, इति व्याचक्षते ॥ १० ॥

अथ दूतगृहे कर्तव्यमाज्यहोमरूपं रत्निहविर्विधत्ते—

**अध्वने स्वाहेति पालाकलस्य गृहे जुहोति ॥ ११ ॥**

**अनृतदूतं ब्रुवते । धनर्वेत्रवीतं दक्षिणा ॥ १२ ॥**

त्र्यश्चर्ममया बाणवन्तो दक्षिणा ॥ १३ ॥

पालाग ( क ) लो नाम दूतः । तथैव कात्यायनः पालाग ( क ) लस्थाने दूतशब्दं प्रयुक्तवान् ' चतुर्गृहीतं जुपाणोऽध्वाऽऽज्यस्य वेत्विति दूतस्य ' ( का० श्रौ० १९–३–१३ ) इति । आपस्तम्बेन तु यूपविशेषपरत्वेन व्याख्यातः । अध्वने स्वाहा, इति पालाग ( क ) लस्य गृहे जुहोत्यनृतदूतं ब्रुवते ( आप० श्रौ० १८–१०- २९ ) इति । पालाग ( क ) लमनृतवादिनं दूतमिति ब्रुवत आचार्या इत्यर्थः । त्र्यश्चर्ममया इषुधयो बाणवन्तो धनुर्वा वेत्रवेष्टितमित्यापस्तम्बः ॥ ११ ॥ १२ ॥ १३ ॥

ऐन्द्रमुत्तमं यजमानस्य गृहे निर्वपति । अन्वहमेके ब्रुवते । इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं ( प्रति ) निर्वपति । इन्द्रायाऽंहोमुचे । यन्नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादिति सूक्तवाकस्याऽऽशीःपु होताऽनुवर्तयति ॥ १४ ॥

होमे कृते समारोप्याग्नीन्स्वगृहं गत्वा— ऐन्द्रकर्म, मथित्वाऽऽयतने निधाय, इष्ट्या यक्ष्ये । अमावास्यातन्त्रम् । इन्द्राय सुत्राम्णे जुष्टं० इन्द्रायांऽहोमुचे जुष्टं० । सूक्तवाके होताऽनुवर्तयत्ययं नो राजेति । इदं याजुषं हौत्रम् । सूत्रान्तरे तु नारिष्ठान्हुत्वाऽयं नो राजेत्यध्वर्युर्जपतीति ऋषभो दक्षिणा । निष्कः कवचमित्येके ॥ १४ ॥

स्वयमवपन्नाया अश्वत्थशाखायै मैत्रं पात्रं चतुःस्रक्ति करोति ॥ १५ ॥ श्वेतां श्वेतवत्सामाम्रस्य दृतौ दुहन्ति । तत्स्वयंमूर्तं संयोगेन परिवहति ॥ १६ ॥ तत्स्वयं मथितमातपे विषजन्ति ॥ १७ ॥ तत्स्वयं विलीनमाज्यं भवति ॥ १८ ॥

ऐन्द्रकर्मणि समाप्ते स्वयमवपन्नाया अश्वत्थशाखायाः स्वयंभग्नाया अश्वत्थशाखायाः स्थविष्ठमेकं मैत्रस्य चरोः पात्रं करोति । चतुःस्रक्ति चमसाकृति । आम्रस्त्ये ( स्य ) दृतौ दुहन्ति गाम् । अमथितपूर्वे दृतौ, आम्रे वा दृतौ । श्वेतवत्सयुक्ता श्वेता गौः । तत्स्वयंमूर्तं संयोगेन परिवहति प्रापयति । तत्स्वयंमथितमातपे विषजन्ति । तत्स्वयं विलीनमाज्यं भवति । इति । तदिदमापस्तम्बेन स्पष्टीकृतम्— 'श्वेतां श्वेतवत्सां गामाम्रस्य दृतौ दुहन्ति तत्स्वयंमूर्तं संयोगेन परिवहति तत्स्वयंमथितमातपे विषजन्ति

तत्स्वयं विलीनमाज्यं भवति' ( आप० श्रौ० १८–११–६ ) इति । आम्रेण फल्पुष्परसेन लेपितायां ( ते ) दृतौ यत्पय आतञ्चनमन्तरेणैव मूर्तं दधि भवति तच्च बदरादिफलसंयोगेन परिवहति तक्रवत्परितः क्षरति । तदिदं स्वयंमथितम् । नात्र मृद्भाण्डे पाकः किंत्वाश्वत्थे पात्रे चतुःस्रक्तौ न तु वर्तुले । तच्च पात्रं यया कया च्छिन्नशाखया न कर्तव्यं किंतु वाय्वाद्यभिघातेन स्वयमेव पतितया निष्पादनीयमिति । एवं कृत्वा वसोर्दित्येके ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

तैष्यां पौर्णमास्यामभिषेचनीयायोक्थ्याय दीक्षाः प्रवर्तयन्ति ॥ १९ ॥

तदिदमापस्तम्बेन स्पष्टीकृतम्— श्वोभूतेऽभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रक्रमयाति, ( आप० श्रौ० १८–११–७ ) इति । श्वोभूतेऽग्निहोत्रꣳ हुत्वाऽभिषेचनीयेन यक्ष्य इत्युक्त्वा विद्युत् । केचिदिहापि वृतानामपि वरणमिच्छन्ति । तन्त्रपक्षे तु कर्माणि कर्माणि पक्षेऽस्मिन्वरुणदेवतोपस्थानान्तं, न समारोपणम्, आज्यं पशव इत्यादि संभारयजूꣳषि हुत्वा सोमपरिवेषणं फलानामपि पवित्रवत्फलचमसप्रयोगः । अभिषेचनीयदशपेययोः पर्याप्तमाहरति । न सप्तहोता । केचिदिच्छन्ति । दीक्षार्थत्वात् । स्वे दक्ष इत्युपस्थानम् ॥ १९ ॥

मैत्राबार्हस्पत्यं दीक्षणीयं भवति ॥ २० ॥

मैत्राबार्हस्पत्या दीक्षणीया सा पत्नीसंयाजान्ता समाप्यते ॥ २० ॥

पात्रसꣳसादनकाले यथार्थं पात्राणि प्रयुनक्ति स्थालीं कपालानाꣳ स्थाने प्रयुनक्ति ॥ (ख० ११) ॥ २१ ॥

अन्वाधानादि पौर्णमासतन्त्रं स्वयंदिनं बर्हिः । अस्यादिना न छिनत्ति । स्वयंच्छिन्नानाहरति । स्वयंकृतश्चेध्मश्च तथैव । तयोः सह संनहनादयः क्रियन्ते । शुल्बास्तरणादि बर्हिस्तथैवेध्मस्य पात्रसंसादनकाले बार्हस्पत्यचरुपात्रं मैत्रं दारुपात्रं स्फ्यश्च द्वंद्वं प्रकृतिवदन्यानि ॥ २१ ॥

मैत्रं चरुं निर्वपणकाले बृहस्पतये निरुप्य मित्राय निर्वपतीति । यथा वा त्रिष्फलीकृतेषु विभागमन्त्रेण कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विविचन्ति । क्षोदिष्ठाꣳश्च स्थविष्ठाꣳश्चेत्येकेषाम् ॥ २२ ॥ ये कर्णाः स पयसि बार्हस्पत्यः । येऽकर्णाः स आज्ये

मैत्रः स यदा शृतः स्यादथ तं मैत्रपात्रमुपरिष्टादवदधाति ॥ २३ ॥ तस्मिन्पवित्रेऽव धाय स्वयंविलीनमासिञ्चति ॥ २४ ॥ तस्मिन्पवित्रवत्याज्ये स्थवीयस्तण्डुलानावपति ॥ २५ ॥ तावुत्तराधरौ सह शृतौ करोति ॥ २६ ॥ धर्ममात्रं श्रपणमर्धं स्वयंदिनं बर्हिः स्वयंकृत इध्मो निम्नमध्यवस्यति । सा स्वयंकृता वेदिर्भवति । वेद्याः करोति । अर्धं स्वयंकृतं भवति । अर्धं बर्हिषो दाति । अर्धं स्वयंदिनमुपसंनह्यति । अर्धमिध्मं करोति ॥ २७ ॥ अपि वा स्वयंकृता वेदिर्भवति । संलोभ्य (प्यं) बर्हिः संचार्य(र्ये)ध्मः ॥ २८ ॥ प्रचरणकाले बार्हस्पत्येन प्रचर्य मैत्रेण प्रचरति ॥ २९ ॥ इतरथा वा । शितिपृष्ठो बार्हस्पत्यस्य दक्षिणा । अश्वो मैत्रस्य । व्युष्टवहो वा । सा चैव श्वेता श्वेतवत्सा दक्षिणा ॥(ख० १२)॥ ३० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने चतुर्थः पटलः ।

निर्वपणकाले बृहस्पतये जुष्टं० मित्राय जुष्टं० निष्फलीकृतांस्तण्डुलान्यथाभागं व्यावर्तेथामिति विभागः । विविनक्ति कर्णाञ्छिन्नानकर्णानच्छिन्नान्क्षोदिष्ठान्क्षुद्रतरान्स्थविष्ठान्स्थूलतरान् । एवं विविच्य पृथक् पृथक् पात्रे निधाय धृष्टयादानादि, ध्रुवोऽसीति बार्हस्पत्यमुपधाय मैत्रमुपदधाति । श्वेतायै श्वेतवत्सायै पय आनयति, ऊहेनोत्पूय घर्मोऽसीति बार्हस्पत्य चरुमधिश्रयति स्थाल्यां पयसि क्षिपतीत्यर्थः । ईषद्यदा श्रितस्तदा मन्त्रेण दारुपात्रेणापिदधाति । ऊहेन स्वयंविलीनमाज्यमुत्पूय मैत्रपात्रेऽवनयेदेकपात्रेणोदकमप्यानीयं तस्मिन्काले घर्मोऽसीतीतरानावपत्यकर्णांस्तावुत्तराधरौ करोति बार्हस्पत्यमधस्तान्मैत्रमुपरिष्टाद्रज्जुभिः संवेष्ट्य मृदा प्रलिप्योत्तराधरकरणमेवं सह शृतौ भवतः । अन्तरितं० अविदहन्त० बार्हस्पत्यमासाद्य मैत्रमासादयति । अयं यज्ञो० ममाग्ने० पञ्चहोता० इत्याद्येवं प्रचरति । प्रधानयागः । दक्षिणाकाले श्वेतपृष्ठं गामश्वं वाऽन्तर्वेदि स्थापयित्वा सहस्रधारावुत्सावक्षीयमाणौ ते दध्नः पृथिवीमन्तरिक्षं दिवं च तैः शितिपृष्ठगवाश्वश्वेतगौ(गवी)श्वेतवत्सैरतितराणि मृत्युमिति । केचिद्द्विवचनेनोहमिच्छन्ति ।

अस्मिन्पक्षे च ब्रह्मा द्विवचनेन, इतरे बहुवचनेनोहः शितिपृष्ठगवाश्वश्वेतगोश्वेतवत्सा इति। रुद्राय गां वरुणायाश्वं० अन्यतरस्य च न बार्हस्पत्यस्य वा विस्मरणे पृथगिज्यायां पुनः श्वेता धेनुः श्वेतवत्सा दीयते। पत्नीसंयाजान्ता धारयति ध्रौवमाज्यमित्यादि, उत्तरेण बर्हिः प्राग्वंशमित्यादि सनीहारप्रस्थापनान्तामिति ॥ २२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

## अथ त्रयोदशप्रश्ने पञ्चमः पटलः

अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते। तत्राभिषेचनीयस्य चोदकप्राप्तां दीक्षामाह—

**तथा दीक्षाः प्रवर्धयन्ति(न्त्य) अभिषेचनीयस्य। यथा दशरात्रे शिष्टे संवत्सरस्य दशपेयो भविष्यति ॥ १ ॥**

तत्कालः कात्यायनसूत्रे दर्शितः—फाल्गुनीपक्षे यजनीयेऽभिषेचनीयाय दीक्षते, ( का० श्रौ० १५-३-४९ ) इति। फाल्गुनी(न)पौर्णमासी(स्या) ह्युपरिष्टादमावास्यायामभिषेचनीयस्य दीक्षा। ततःप्रभृत्यागामिन्याः फाल्गुन्याः पौर्णमास्या उपरिष्टाद्द्वितीयायामभिषेचनीयस्य प्रायणीया यथा स्यादेवं दीक्षावृद्धिः। भाष्यकारस्तु—तैष्यां पौर्णमास्यामभिषेचनीयस्य दीक्षाः संवत्सरमागामिमाघशुक्ले प्रायणीया स्यादेवं दीक्षावृद्धिरिति व्याचष्टे। प्रथमरात्रिवर्जमन्यासु रात्रिषु अग्ने त्वꣳ सुजागृहीत्यादिदीक्षितधर्माः प्रवर्तन्ते। सर्वत्र यवाग(गू)व्रतं पयसि वा श्रपयेत् ॥ १ ॥

**सह सोमौ क्रीणाति। अभिषेचनीयाय दशपेयाय चार्धं राज्ञः पुरोहितस्य ब्रह्मणो वा दशपेयार्थं निदधाति ॥२॥**

उक्तकाले प्रायणीयया प्रचर्याभिषेचनीयस्य दशपेयेन सह सोमक्रयः। पदपांसुग्रहणमुभयार्थं, तत्संग्रहेषु निदधाति इहाधीक्षाञ्जनम्। अर्धेन दशपेय उभयार्थं सोमफलमाहत्यानूहेन प्रयोगः— सोमं क्रीत्वा फलान्यपि तथैव सोमं ते क्रीणामि, गवा ते क्रीणामि, तस्या आत्मा० भूयो वा अतः० पञ्चाविकेन पञ्चशतगोभिस्ते क्रीणानीति अस्मे ज्योतिः, द्वे ऊर्णास्तुके एकाभिषेचनीयस्यैका दशपेयस्याग्रेण प्राग्वंशं स्थापयति। अच्छिद्रपत्रः प्रजा इत्युपावहृत्य विभज्यार्धं सोमस्य फलानां च बद्ध्वा पुरोहितस्य

गृहे दशपेयार्थं निदधाति। न प्रवृञ्जनं, उक्थ्यत्वात्। पञ्चदश च्छदींषि। वपायागादि वसतीवरीग्रहणान्तं पूर्ववत्सर्वं कर्तव्यम् ॥ २ ॥

देवसुवां हवींषि विधित्सुस्तेषामग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तुमाह—

अग्नीषोमीयपशुपुरोडाशं निरुप्य देवसुवाँ हवीꣳष्य-
नुनिर्वपत्यग्नये गृहपतय इति यथासमाम्नातम्।
पशुपुरोडाशस्य देवसुवां च हविषाꣳ समानꣳ
स्विष्टकृदिडम् ॥ ३ ॥

अग्नीषोमीयपशुपुरोडाशयागे तां(गान्तं) निरुप्याष्टौ देवसुवां हवींष्यनुनिर्वपति समानं तु स्विष्टकृदिडम्। अथवा—स उपवसथ इति वाजसनेयश्रुतेः। उपवसथः सुत्यादिवसात्पूर्वमहः। अग्नीषोमीयं पशुपुरोडाशं निरुप्य तदनु 'देवसुवां हवींषि निर्वपेत्। सुवन्त्यनुजानन्तीति सुवो देवाश्च ते सुवश्चेति देवसुवस्तेषाम्, देवस्वाम्। 'ओः सुपि' (पा० सू० ६-४-८३) इति यणादेशः। प्रसवितृत्वं चैषामाम्नायते--'देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तो वै देवानाꣳ सवाः। त एवास्मै सवान्प्रयच्छन्ति। त एनꣳ सुवन्ते' (तै० ब्रा० १-७-४) इति ॥ ३ ॥

पुरस्तात्स्विष्टकृतः सविता त्वा प्रसवानाꣳ सुव-
तामिति यजमानस्य हस्तं वेदयत्येष वः कुरवो
राजेति। यदि कौरव्यः। एष वः पञ्चाला
राजेति यद्यु वै पाञ्चालः। एष वो भरता
राजेति वा कुरुपञ्चालानेष ते जनता राजे-
त्यन्यान्राज्ञः। सोमोऽस्माकं ब्राह्मणानाꣳ
राजेत्युक्तः ॥ ४ ॥

पशुपुरोडाशस्विष्टकृतः पुरस्तात्सविता त्वा प्रसवानाꣳ सुवतां महते जानराज्यायेति ब्रह्मा यजमानस्य हस्तं गृह्णाति। अध्वर्यू रत्निभ्यो जानपदेभ्यः प्रकाशयति एष वो भरता राजेत्यनेन तेभ्यो जनपदेभ्यः, तेषां चेद्राजा राजसूययाजी, इति। एष वः कुरवो राजेति यदि कौरव्यः, कुरुभ्यो जानपदेभ्यस्तेषां चेद्राजा। एष वः पञ्चाला राजेति पाञ्चालेभ्यो जानपदेभ्यः। एष वः कुरुपाञ्चाला राजेति कुरुपाञ्चालेभ्यः। उभयेषां चेद्राजा। शबरादन्यतरेण कुरुवर्गतया (वर्गेण) पञ्चाला इति। उक्तेभ्योऽन्येषामेष वो भरता राजेत्यापस्तम्बः। सोमोऽस्माकं ब्राह्मणानाꣳ राजेति ब्रह्मा जपति ॥ ४ ॥

प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां
यजमानो मुखं विमृष्टे ॥ ५ ॥

आनडिति मन्त्रान्तः । मुखमार्जनं तु द्वाभ्यां विमृष्टे ( तै० ब्रा० १-७-४ ) इति ॥ ५ ॥

विष्णोः क्रमोऽसीति त्रीन्विष्णुक्रमान्प्राचः क्रामति ।' ६ ॥

वाजपेये रथसमीपगमने व्याख्यातम् ॥ ६ ॥

यत्प्राङ्माहेन्द्रात्तस्मिन्कृते प्रतिप्रस्थाता मारुतमेकविंशतिकपालं निर्वपति ॥ ७ ॥ गणैः कपालान्युपदधाति ॥ ८ ॥ आरण्ये [ना]नुवाक्येन गणेन मध्य उपधायाऽऽमिक्षायाः कल्पेन मैत्रावरुणीमामिक्षां करोति ॥ ९ ॥

पुरोडाशस्विष्टकृदादि, यजमानस्य प्रैषे दधिधर्मस्य लोपः । महारात्रे बुद्ध्वा, इत्यादि । पात्रासादनकालेऽतिग्राह्याणामप्रयोगः । न षोडशिपात्रं, प्राङ्माहेन्द्रात्कृत्वा मारुतमेकविंशतिकपालं निर्वपति । वैश्वदेवी चाऽऽमिक्षा । तस्याश्च कर्म- एकविंशतिः कपालानि स्फ्यश्च द्वंद्वं, इत्यादि । सवनीयानामुत्कर्षपक्षे सवनीयानां (न) शाखा स्यात्, शाखा, इतरथा शाखाहरणादि मरुद्भ्यो जुष्टं० कपालोपधानकाले ईदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितासश्च संमितासश्च सभरा इति सप्तकपालानि ध्वनिश्च ध्वान्तश्च ध्वनयश्च ध्वनयंश्च निलिम्पश्च विलिम्पश्च विक्षिप इति सप्त। ध्रुवमसीत्यादि सप्त । एवमेकविंशतिमुपधाय वैश्वदेव्या दोहनम् । पुरोडाशमधिश्रित्य लौकिकदध्यानयनम् । अन्तरितं० सं ब्रह्मणा० इत्यादि ॥ ७ ॥ ८ ॥ ९ ॥

अभिवासितैर्वायव्यैरपां ग्रहान्गृह्णाति ॥ १० ॥ देवीरापो अपांनपद्राष्ट्रदास्थ राष्ट्रं दत्त स्वाहेति सारस्वतीष्वप्सु हुत्वैतेनैव गृह्णाति ॥ ११ ॥ अर्थेतः स्थेति वा । एवमितरासु येन येन जुहोति तेन तेन गृह्णाति ॥ १२ ॥ राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहेति होमार्थेऽनुषजति । राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्तेति गृह्णाति।।१३॥पुरुषे पशौ वाऽभ्यवेतेऽपां पतिरसीति ॥(ख०)१३॥समुद्रियाः सैन्धवीनां प्रतीपमन्य ऊर्मिः पताति । अन्वीपमन्यो वृषाऽस्यूर्मिरिति यः प्रतीपं तं गृह्णाति। वृषसेनोऽ-

स्मीति योऽन्वीपम् । प्रहावरीः स्थेति स्थावराणाम् । याः स्थानं न प्रवहन्ति परिवाहिणीः स्थेति स्रवन्तीनाम् । या आप उच्छेरते परिणतिं ब्रुवते । अजक्षितः स्थेति कूप्यानाम् । मरुतामोजसः स्थेति ह्रादुनीनाम् । सूर्यवर्चसः स्थेत्यातपातिवर्ष्याणाम् । सूर्यत्वचसः स्थेति यासु रूपाणि परिदृश्यन्ते । मान्दाः स्थेति स्थावराणां या वा मन्दमिव स्यन्दन्ते । वाशाः स्थेति पृष्ठानाम् । शक्करी स्थेति गोरुल्व्या(तुल्या)नाम् । विश्वभृतः स्थेति पयसः । जनभृतः स्थेति दध्नः । अग्नेस्तेजस्याः स्थेति घृतस्य । अविष्ठाः स्थानाधृष्टा इति वा । अपामोषधीनाꣳ रसः स्थेति मधुनः षोडश सप्तदश वा गृह्णाति ॥ १४ ॥

अभिवासितैः सुगन्धितैर्वायव्यैर्वृक्षोद्भूतैर्ग्रहैर्वोर्ध्वमुखानि वायव्यानि तैरपां ग्रहान्गृह्णातीति वचनात् । अभिषेकार्थं वायव्यानि षोडश सप्तदश वा शाखान्तरगतेनैकेन मन्त्रेण सह षोडशसंख्यामपि षोडशभिर्गृह्णाति(तै० ब्रा० १–७–५) इत्यादौ द्रष्टव्याः । अर्थेत इत्यादीनां षोडशमन्त्राणां होमशेषत्वं ग्रहणशेषत्वं च पूर्वं विहितम् । अर्थेतः स्थेति जुहोति, वहन्तीनां गृह्णाति, (तै० ब्रा० १–७–५) इत्यभिधानात् । तत्रोभयत्रावस्थितां षोडशसंख्यां समस्य प्रशंसति–'षोडशभिर्जुहोति षोडशभिर्गृह्णाति '(तै०ब्रा१–७–५) इत्यादिना । यद्वा—वायव्यानि सप्तदश वा करोति यज्ञियवृक्षैर्वक्ष्यमाणस्तत्तद्देशादानीय गृह्णाति सरस्वतीजलं वहन्तीनां जलं समुद्रजलं यतः कुताश्चिन्नद्यां पुरुषः पशुर्वा तिष्ठति तत्र प्रतिस्रोतं य ऊर्मिर्युध्यति तस्या भूमेर्जलमानयति पृथक् पृथक् । कूपस्था अप आनयति प्रतिस्रोतसजलं च प्रयत्नेनाऽऽनयेत् । यत्र कुत्रचिद्गता आपस्तत्रैव स्यन्दन्ति ता आनयन्ति । महानदीनां समीरेद्य( पे य )त्र नदी महानद्यां पतति तस्या आनयति । आदित्ये दृश्यमाने यदा वर्षति तदा वर्षजलमानयति । अशोध्यजलमानयति । यत्र कुत्रचिद्रसजलमानयति । गोगर्भोदकं पयो दधि घृतं च मधु माक्षिकं च । आग्नीध्रमण्डपसमीपे ग्रहग्रहणं क्रमेणोच्यते–अर्थेतः स्थापो देवीर्मधुमतीरित्यादि राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा, इति सारस्वतोदके । आज्यहोमस्याभिघारणरूपत्वात् । उक्तजले वायव्येनाऽऽज्येन जुहोति । तस्मिञ्जले वायव्येन गृह्णाति । अर्थेतः स्थापो

देवी राष्ट्रं दत्त राष्ट्रममुष्मै दत्तेति राज्ञो नामग्रहणम् ' राजेन्द्रवर्मणो दत्तेति गृहीत्वाऽन्यत्र निदधाति । एवमुत्तराणि । येन जुहोति तेन गृह्णाति ॥ १० —१४ ॥

**अपो देवीर्मधुमतीरगृह्णन्निति गृहीत्वाऽभिमन्त्रयते ॥ १५ ॥**

समुद्रजले वा पुंनद्यो यथा शोणादिस्तदन्यतमजले, अपां पतिरस्यपो देवी० दत्त स्वाहा । प्रतिस्रोत ऊर्मियुद्धजले वृषाऽस्यूर्मिरपो देवी० । अनुस्रोत ऊर्मिजले वृषसेनोऽस्यपो देवी० । कूपजले व्रजक्षितः स्थापो देवी० । प्रतीपजले, अन्यज्जले वा मरुतामोजः स्थापो देवी० । उत्स्यन्दितजले प्रभावतीः ( रीः ) स्थापो देवी० परिवाहिनदीजले हिरण्याः स्थापो देवी० । आतपति वर्षजले सूर्यवर्चसः स्थापो देवी० । प्रस्रवजले सूर्यत्वचसः स्थापो देवी० । स्थावरजले मान्दाः स्थापो देवी० । प्रुष्टजले वश्याः ( श्याः ) स्थापो देवी० । [ अ ]वस्याऽ( श्या )योदके का(वा)शाः स्थापो देवी० । गोगर्भजले शक्करीः स्थापो देवी० । पयसि विश्वभृतः स्थापो देवी० । दधनि जनभृतः स्थापो देवी० । घृते अग्नेस्तेजस्याः स्थापो देवी० । मधुनि अपामोषधीनां रसः स्थापो देवी० । इति च गृहीत्वाऽभिमन्त्रयत इत्यर्थः ॥ १५ ॥

**देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वमिति वैतसे द्रोणे समवनयति ॥ १६ ॥**

वैतसे द्रोणे कलशाकृतौ देवीराप० वन्त्वना इत्यन्तेन ग्रहान्समवनयति । तथा चाऽऽहाऽऽपस्तम्बः—देवीराप इति वैतसे सते ग्रहान्समवनीय, ( आप० श्रौ० १८–१३–२१ ) इति । अप्सु जातो वृक्षविशेषो वेतसस्तेन निर्मितं द्रोणकलशसदृशं पात्रं सतं तस्मिन्सते वायव्यैर्गृहीतास्ता अपोऽवनयेदित्यर्थः ॥ १६ ॥

**अत्राभिमन्त्रणमेके समामनन्ति ॥ १७ ॥**

शाखान्तरोक्तो विकल्पः ॥ १७ ॥

**अनाधृष्टाः सीदतेत्यन्तरा होतुर्धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति ॥ १८ ॥ अपरेण होत्रीयमुपसादयतीत्येकेषाम् ॥ १९ ॥**

दधतीरित्यन्तः । अन्तरा होतुर्धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति ॥१८॥१९॥

**अनिभृष्टमसीति शतातृण्णꣳ सौवर्णꣳ रुक्ममादाय शुक्रा वः शुक्रेणोत्पुनामीति तेन त्रिरुत्पुनाति ॥ २० ॥**

अनिभृष्टमसि० दात्रमसीत्यन्तेन शतमानं हिरण्यं सतेऽवधायेत्यापस्तम्बः । तेन शतमानेन शुक्रा वः शुक्रेणोत्पुनामि० चितानाः, इत्यन्तेनोत्पुनाति सकृत् । त्रिरिति भाष्यकृत् । तदा शुक्रा वः शुक्रेणोत्पुनामि स्वाहा राजसूयाय चितानाः, चन्द्रा वश्च-

न्द्रेणोत्पुनामि० राजसूयाय चितानाः, अमृता वो अमृतेन स्वाहा राजसूयाय चितानाः इति त्रिभिर्मन्त्रैः ॥ २० ॥

सधमादो द्युम्निनीरूर्ज एता इति चतुर्षु पात्रेषु व्यानयति ॥ ( ख० १४ ) ॥ पालाश औदुम्बर आश्वत्थे नैयग्रोधेऽवशेषं द्रोणे करोति ॥ २१ ॥

सधमादो० मातृतमास्वन्त इ( रि )त्यन्तः । पालाशादिषु पात्रेषु क्षिपति । प्रतिपात्रं मन्त्रावृत्तिर्द्रव्यपृथक्त्वात् । अवशेषं द्रोणे करोति ॥ २१ ॥

तौक्मो( रौक्म औ )दुम्बरं दधि च यजमानं भोजयति ॥२२॥

स्पष्टोऽर्थः ॥ २२

एकशतेन दर्भपुञ्जीलैराङ्क्ते । शतेनेत्येकेषाम् । पञ्चाशता दक्षिणमक्ष्ण्येकपञ्चाशतोत्तरमभ्यज्य क्षत्रस्योल्बमसीति तार्प्यं क्षत्रस्य यो निरसीति पाण्डुरमुष्णीषम् । तृतीयं श्वेतपाण्डुरमित्याचक्षते । अप उपस्पर्शयित्वाऽऽविन्ना आग्निरित्याविदो यजमान वाचयन्बहिःसदसमभ्युदानयति ॥ २३ ॥

दर्भपुञ्जीलैरभ्यज्य क्षत्रस्योल्बमसीति तार्प्यं क्षत्रस्य योनिरसीति पाण्डुरवासश्च परिधत्ते । अथवा त्रीणि वासांसि, द्वे परिधानार्थं पाण्डुरं तार्प्यं चैकमुत्तरीयं च । अथवा शिरोष्णीषमेव कृत्वाऽथैनमेकशतेन ( शतेन वा ) दर्भपुञ्जीलैः पवयति । एकशतेनाऽऽङ्क्ते यजमानमेव । पञ्चाशता दक्षिणमाक्षि युगपदेकपञ्चाशता सव्यम्, इत्यन्यथा क्रमः । आग्नीध्रागार एतानि कर्माणि कुर्यात् । अध्वर्युरप उपस्पृशति आविद इत्येवं संज्ञानाविन्नो अग्निरित्यादीन्वाचयन्यजमानमध्वर्युर्बहिरुदानयति ॥ २३ ॥

एष वः कुरवो राजेत्यावेदयति । मनसाऽनुमन्त्रयते । मनसोर्ध्वमनूज्जिहीते ॥ २४ ॥

राज्ञो नामग्रहणमसाविति । आविन्नोऽयं राजेन्द्रवर्मणः पुत्रो राजेन्द्रचोलायनोऽस्य विश्वस्मिन्राष्ट्र इत्यादि । अत्राप्यापस्तम्बे विशेषः—इन्द्रस्य वज्रोऽसीति धनुर्यजमानाय प्रयच्छति । शत्रुबाधनाः स्थेति त्रीन्बाणावतः । पात मा प्रत्यञ्चमिति प्रदीयमानाननुमन्त्रयते । पात प्राञ्चं पात प्रत्यञ्चं पातोदञ्चमिति प्रयच्छन्नध्वर्युर्जपति । मित्रोऽसीति दक्षिणं बाहुं यजमान उद्यच्छते । वरुणोऽसीति सव्यम् । एतद्वा विपरीतम् । हिरण्यवर्णावित्युद्यतावभिमन्त्रयते । अथैनं पञ्चभिर्दिशो व्यास्थापयति । समिधमातिं-

च्छति। मनसा चानुप्रक्रामति। ( आप० श्रौ० १८-१९-२ ) इति। अध्वर्युरनुक्रामति मनसा, न कर्मणेत्यर्थः ॥ २४ ॥

अत्र मारुतमेकविꣳशतिकपालमेके समामनन्ति ॥ २५ ॥

अत्र मारुतवैश्वदेव्योर्निर्वापाद्यासन्नाभिमर्शनान्ते प्राङ्माहेन्द्रादपां ग्रहानित्यादि मनसाऽनुक्रामान्तं कृत्वा प्राङ्माहेन्द्रादित्यस्मिन्नभिवास्यापां ग्रहानित्यादि मनसाऽनुक्रामान्तम्। आज्यलेपनिनयनाद्यासन्नाभिमर्शनान्तं, माध्यंदिनं चेत्यस्मिन्पक्षे सवनीयैः सहाभिवासनान्ते, अपां ग्रहानित्यादि मनसाऽनुक्रामान्तम्। ततः सौमिकं वैष्णव्यर्चोपस्थानान्तं कृत्वा सवनीयप्रचरणादि माहेन्द्रात्प्राक्। तत आसन्दीप्रतिष्ठापनादि प्राक्पार्थहोमात्कृत्वा मारुतं पुरोडाशं तूष्णीं स्थापयित्वा तं बर्हिषदं कृत्वैना व्याघ्रमिति मन्त्रेण स्फ्येन पुरोडाशं भिनत्ति। यत्स्फ्य आश्लिष्यति यच्च प्रतिशीर्येते तद्विष्णवे शिपिविष्टाय जुहोति, ( आप० श्रौ० १८-१९-४ ) इत्यापस्तम्बः। अभिचरत अ ( तोऽ ) नभिचरतो न च्छेदनहोमौ ॥ २५ ॥

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्म विवेष्टयति ॥ २६ ॥

अग्रेण प्रशास्तुर्धिष्णियं खादिरीमौदुम्बरीं वाऽऽसन्दीं प्रतिष्ठाप्येत्यापस्तम्बः। प्रशास्तुर्धिष्णियस्य पुरस्तादग्रेणोक्तलक्षणामासन्दीं प्रतिष्ठाप्य सोमस्य त्विषिरसि० भूयादिति शार्दूलचर्माऽऽस्तृणाति ॥ २६ ॥

अग्रे सदो दक्षिणे द्वारबाहौ तद्यजमान आरोहति। अवेष्टा दन्दशूका इति। आपः केशवापाय प्रयच्छति ॥ ( ख० १५ ) ॥ लोहायसं प्रयच्छतीत्येकेषाम् ॥ २७

अग्रेसदो दक्षिणे द्वारबाहौ तदासन्दीमारोहति यजमानः। स्पष्टमन्यम् ॥ २७ ॥

निरस्तं नमुचेः शिर इति सीसं क्लीबाय विध्यति चैनꣳ सीसं क्लीबेन विध्यतीत्येकेषाम् ॥ २८ ॥

नपुंसकाय प्रयच्छति सीसं लोहमयम् ॥ २८ ॥

प्रत्यस्तं नमुचेः शिर इति त्वाऽप उपस्पृश्य ॥ २९ ॥

अत्र स्पष्टमाहाऽऽपस्तम्बः—तामारोहन्यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं पण्डकाय प्रत्यस्यति। निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापाय तौ बहिर्वेदि निरस्यतः। अपामुपस्पर्शनं तयोः ॥ २९ ॥

अमृतमसीति रजतꣳ रुक्मं व्याघ्रचर्मण्युपोहति । अधस्तात्पादयोर्दिद्योन्मा पाहीति शततृण्णꣳ सौवर्णꣳ रुक्मं यजमानस्य शिरसि निदधाति ॥ ३० ॥

उपोहति व्याघ्रचर्मण्यावेष्टयति । तत अ(तोऽ)धस्तात्पादयोस्तदुपोहति शतगुञ्जापरिमितं सौवर्णं रुक्मं शतच्छिद्रं यजमानस्य शिरसि निदधाति अर्मार्जि सर्जीत्यादि ततो माहेन्द्रस्तोत्रम् ॥ ३० ॥

सोमो राजा वरुण इत्येताभ्यो देवताभ्यः प्रोच्याग्नये स्वाहेति षट्पूर्वाणि पार्थानि हुत्वा पृथिव्यै स्वाहेति षट्पूर्वा भूतानामवेष्टीर्जुहोति ॥ ३१ ॥

प्रोच्याभिमन्त्र्य । ततोऽग्नये स्वाहेति षट् पार्थानि जुहोति । बृहस्पतये स्वाहेत्यन्तानि । पृथिव्यै स्वाहेति षट्भूतानामवेष्टीर्नक्षत्रेभ्यः स्वाहेत्यन्तैरूर्ध्वबाहुं तिष्ठन्त आ(मा)सन्द्याम् । तदुक्तमापस्तम्बेन—ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति ( आप० श्रौ० १८–१९–१० ) इति ॥ ३१ ॥

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्यध्वर्युर्वाऽऽहुतिं जुहूꣳ (हुतꣳ) हूयमानेऽभिषिञ्चति ॥ ३२ ॥ पर्णमयेन पुरस्तादध्वर्युः । एवमितरे । औदुम्बरेण दक्षिणतो ब्रह्मा । राजन्यो वा । आश्वत्थेन पश्चाद्वैश्यः । नैयग्रोधेनोत्तरतो जन्यमित्रम् । स्यादुपरिष्टादेवनस्याऽऽसिञ्चति ॥ ३३ ॥

सोमो राजा० मरुतामोजसेत्यनेन पालाशेन पुरस्तात्पुरःस्थितोऽभिषिञ्चति । अनेन मन्त्रेणौदुम्बरेण दक्षिणतो ब्रह्मा । आश्वत्थेन पश्चाद्वैश्यः । तेन नैयग्रोधेन जन्य उत्तरतः । जन्यः मित्रं सर्वदा नपुंसकम् । सखेत्यर्थः ॥ ३२ ॥ ३३ ॥

क्षत्राणां क्षत्रपतिरसीत्यभिषिच्यमानमभिमन्त्रयते ॥ ३४ ॥

अध्वर्युरिति शेषः ॥ ३४ ॥

अति दिवस्पाहीति कृष्णविषाणया राजसूयिकानि वासाꣳसि विवृत्य समावव्रुत्रन्नधरागुदीचीरिति येऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति । तान्पात्रैः समुन्मार्ष्टि ॥ ३५ ॥

कृष्णविषाणया ताप्यादिवासांसि विस्रंसयत्यध्वर्युः । तान्युत्करे त्यजति । अति दिवस्पाहीति । अस्मिन्काले शस्त्रप्रतिगरप्राप्तिर्यथा स्यात्तथा कार्या । अभिषिच्यमानस्याङ्गेषु य उदकलेपास्तान्पात्रैरुन्माष्टर्यध्वर्युः । यो योऽभिषिक्षतीति भाष्यकृत् ॥ ३५ ॥

**इन्द्राय स्वाहेति षडुत्तराणि पार्थानि हुत्वाऽद्भ्यः स्वाहेति षडुत्तरा भूतानामवेष्टीर्जुहोति ॥ ३६ ॥**

प्रतिगरं पार्थान्यवेष्टीश्च जुहोति । इन्द्राय स्वाहेति षट्पार्थानि । अद्भ्यः स्वाहेति षड्भूतानामवेष्टीः । अथ प्रतिगरः—उक्थं वाचीत्यन्तम् ॥ ३६ ॥

**रुद्र यत्ते क्रयी परं नामेति यो द्रोणे शेषस्तमुदङ्परेत्याऽऽग्नीध्रे जुहोति ॥ ( ख० १६ )॥ ३७ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने पञ्चमः पटलः ॥**

अत्र स्वाहाकारोऽध्याहृतः । यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयतीति श्रुतत्वाद्रुद्रस्योच्छेषणभागत्वम् । तत्रैव कंचिद्विशेषं विधत्ते—उदङ्परेत्याऽऽग्नीध्रे जुहोति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते (तै० ब्रा० १–७-८ ) इति । अत्र वा प्रत्येकं जुहुयात् । यां भार्यां कामयेत राष्ट्रमस्मै प्रजा स्यादिति तस्या औपासने प्रतिहितमारम्भयित्वा ये पात्रेषु लेपा व्यवसृतास्तेभ्यो नामव्यतिषजनीयौ होमौ जुहुयात् । प्रजापते न त्वदेतानीति । असावमुष्य पुत्रोऽमुष्या असौ पुत्र इति नामनी व्यतिषजति । नामानीत्येके ( आप० श्रौ० १८–१६–११ ) इत्यापस्तम्बीये विशेषः ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने पञ्चमः पटलः

अथ त्रयोदशप्रश्ने षष्ठः पटलः ।

अथ रथेन विजयोऽभिधीयते—

**इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति ॥ १ ॥**

वाजपेये व्याख्यातम् ॥ १ ॥

**मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति प्रष्टिवाहिनꣳ रथं युनक्ति ॥ २ ॥**

१ यस्मिन् पा° ।

यज्ञस्य योगेनेत्यन्तः । रथस्याश्वत्रयोपेतत्वं प्रष्टिवाहिनं युनक्ति । तादृशं रथं प्रकारान्तरेण प्रशंसति—'त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । द्वौ सव्येष्ठसारथी । षट्संपद्यन्ते' ( तै० ब्रा० १–७–९ ) इति । सव्येष्टेत्यत्र दक्षिणस्थेत्यध्याहार्यम् । ततः पार्श्वद्वयवर्तिनौ द्वौ सारथी संपद्येते ॥ २ ॥

विष्णोः क्रमोऽसीति रथमातिष्ठति ॥ ३ ॥

रथसकाशं गच्छति । यजमान आरोहति रथं सारथिश्च संगृ(ग्र)हातीश्च(च) ॥ ३ ॥

मरुतां प्रसवे जेषमिति प्रयाम्याति ॥ ४ ॥

प्रयाति ॥ ४ ॥

प्र ससाहिष इति दक्षिणतो ब्रह्मा त्रिष्टुभाऽन्वेति ॥ ५ ॥

दक्षिणतो ब्रह्मा गच्छति ॥ ५ ॥

प्रतिहितोऽन्वारभत इत्येकेषाम् ॥ ६ ॥

अन्वारम्भः स्पर्शः । प्रतिहितो राजपुत्रो रथमन्वारभते ॥ ६ ॥

सधनू राजन्यः पुरस्तादुत्तरतो वाऽवस्थितो भवति ॥ ७ ॥ तं जिनात्याप्तं मनः समहमिन्द्रियेणेति ॥८॥

बाणहस्तो राजा पुरस्तादुत्तरतो वा इषुपातमात्रे तिष्ठति । तं जित्वोत्सृष्ट अ(ष्टोऽ)सौ जितो भवति—आप्तं मनः समहमिन्द्रियेणेति मन्त्रेण ॥ ७ ॥ ८ ॥

तस्मा एतानिषूनस्यति प्राति त्वाऽऽप्तं मनः समहमिन्द्रियेणेति प्रदक्षिणमावर्तते ॥ ९ ॥

य इषुमात्रे तिष्ठति तस्मै राजन्यायैतानिषून्प्रक्षिपेत्—आप्तं मन इति । इषुप्रति (प्रतीषु) मन्त्रावृत्तिः । समह० वीर्येणेति प्रदक्षिणमावर्तते ॥ ९ ॥

एषु वज्रो वाजसातमस्तेन नौ पुत्रौ वाजसत्से-दि(याताम)ति धनुः पत्न्यै प्रयच्छाति । धनुरार्त्निं प्रयच्छतीत्येकेषाम् । पत्नी धनुराज्ञोऽ(र्त्नीअ)पनुदतीत्येकेषाम् । अश्वानुपस्पृशतीत्येकेषाम् ॥ १० ॥

पत्न्यै प्रददाति । अन्ये पक्षाः शाखान्तरस्थाः ॥ १० ॥

इयदस्यायुरस्यायुर्मे धेहीति राजतमणिं यजमानः प्रतिमुञ्चते ॥ ऊर्गसीत्यौदुम्बरम् । युङ्ङसीति सौवर्णम् ॥ ११ ॥

अन्यप्रतिविमोकानिवृत्त्यर्थं यजमानग्रहणम् । रजतताम्रसौवर्णान्मणीन्प्रतिमुञ्चते । पृथक्द्रव्यपक्षे तु मन्त्रावृत्तिरिति भाष्यकृत् ॥ ११ ॥

मध्ये सौवर्णमेके समामनन्ति ॥ १२ ॥

स्पष्टोऽर्थः ॥ १२ ॥

मित्रोऽसीति दक्षिणं बाहुमुपावहरते । वरुणोऽसीति सव्यम् । एतद्वा विपरीतम् ॥ १३ ॥

मित्रोऽसि वरुणोऽसीति च दक्षिणं सव्यं च बाहुमुपावहरते यजमानः ॥१३॥

समहं विश्वैर्देवैरिति वैश्वदेव्यामामिक्षायाꣳ हस्तावुपावहरते । अत्रैते हिरण्ये ददाति सौवर्णꣳ राजतं च मणिम् ॥ १४ ॥

वैश्वदेव्यामामिक्षायां हस्तौ दक्षिणोत्तरावुपावहरते यजमानः ॥ १४ ॥

नमो मात्रे पृथिव्या इत्यवरोहन्पृथिवीमवेक्षते ॥ ॥ (ख० १७) ॥ पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावध्यवरोहति ॥१५॥

पृथिव्यवेक्षणमुत्तरकर्मार्थम् । वराहचर्ममय्यावुपानहौ प्रत्यवरोहति ॥ १५ ॥

प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां मुखं विमृष्टे ॥ १६ ॥

यजमानसंस्कारार्थम् ॥ १६ ॥

अग्रेणाऽऽग्नीध्रं चतुरवस्ता(स्रा)वं खरं विमितं विमिन्वन्ति । दक्षिणत उपचारं क्षत्रस्य नाभिरसीति तस्मिन्खादिरीमासन्दीं प्रतिष्ठापयति । क्षत्रस्य योनिरसीति तस्यां कृत्त्यधीवासमास्तृणाति ॥ १७ ॥

आग्नीध्रागारस्य पुरस्ताच्चतुरवस्ता(स्रा)वं चतुष्टयनाडिकं चतुर्द्वाधारकमिति केचित् । अन्यस्मिन्स्थाने विमितं खरं विमिन्वन्ति हर्म्ये स्थापयन्तीत्यर्थः । दक्षिणत उपचारं संचारं क्षत्रस्य नाभिरिति तस्मिन्यथोक्तलक्षणामासन्दीं प्रतिष्ठाप्य क्षत्रस्य योनिरसीति तस्यामासन्द्यां कृत्त्यधीवासं चर्मपटश्चा(टं चाऽऽ)स्तृणाति प्रसारयतीत्यर्थः ॥१७॥

अवनह्यति हनि विशि मा दृꣳहेत्यवनह्यति ॥ १८ ॥

अवनह्यति बध्नाति आसन्दीपादेषु ॥ १८ ॥

स्योनाऽसीत्यासीदति ॥ १९ ॥

यजमानः ॥ १९ ॥

स्योनामासीद सुषदामासीदेति सीदन्तमभिमन्त्रयते ॥ २० ॥

गतम् ॥ २० ॥

मा त्वा हिꣳसीदित्यारोहति ॥ २१ ॥

उपविशति ॥ २१ ॥

मा त्वा हिꣳसीन्मा मा हिꣳसीदित्यारोहन्तमभिमन्त्रयते ॥ २२ ॥

गतम् ॥ २२ ॥

निषसाद धृतव्रत इत्यासीनो जपति ॥ २३ ॥

उपविष्टमभिमन्त्रयतेऽध्वर्युः ॥ २३ ॥

अग्नये गृहपतये स्वाहेति स्रुवेण गार्हपत्ये रथविमोचनीयानि हुत्वा हꣳसः शुचिषदिति सहसंग्रहीत्रा रथवाहने रथमादधाति ॥ २४ ॥

अग्नये गृहपतये स्वाहेति चतुर्भिर्मरुतामोजसे स्वाहा, इत्यन्तं रथविमोचनीयं जुहोति । हꣳसः शुचिषदिति मन्त्रेणाश्वस्य प्रग्रहं सम्यग्गृह्णातीति संग्रहीता । स रथं वाहने प्रष्टिवाहिनं रथं स्थापयति । एतदन्तं यजमान उद्यतबाहुर्भवेदित्येके ॥ २४ ॥

आहिते संग्रहीताऽवरोहति ऋत्विजोऽनश्व(रत्निनश्व)राजानं पर्युपविशन्ते समुपविष्टेषु ब्रह्मा३न्नित्यध्वर्यु यजमान आमन्त्रयते । त्वꣳ राजन्ब्रह्माऽसि सवितासि सत्यसव इति प्रत्याहैवꣳ होतारं ब्रह्माणमुद्गातारं वाऽऽमन्त्रयते । उत्तरेणोत्तरेण मन्त्रेण प्रत्याहुः ॥ २५ ॥

राजानं प्रत्यृ(परित ऋ)त्विजोऽध्वर्य्वादयो रत्निनश्च पूर्वोक्ता उपविशन्ति । पुरस्तादध्वर्युः । दक्षिणतो ब्रह्मा । पश्चाद्धोता । उत्तरत उद्गातेति । रत्निनामानियमः । उपविष्टेषु सर्वेषु यजमानोऽध्वर्युर्ब्रह्मा३न्नित्यामन्त्रयते । त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्यसव इति प्रत्याह । एवं ब्रह्माणं प्रति ब्रह्मा३न्नित्याह त्वꣳ राजन्ब्रह्माऽसीन्द्रोऽसि सत्यौजा इति प्रत्याह, एवं होतारं मित्रोऽसीति । उद्गातारं वरुणोऽसीति ॥ २५ ॥

इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं ब्रह्माऽथ राज्ञे प्रयच्छति । अध्वर्युः प्रयच्छतीत्येकेषाम्॥२६॥

रध्येत्यन्तः । ब्रह्मा प्राकृतं स्फ्यं राज्ञे प्रयच्छति ॥ २६ ॥

एष वज्रोऽसि वाजसातमः ॥ ( ख० १८ ) ॥ तेन मे रध्येति वा राजा पुरोहिताय । पुरोहितः प्रतिहिताय । प्रतिहितो रत्निभ्यस्तमवरपरꣳ संप्रयच्छन्ति । अन्ततोऽक्षावापाय प्रयच्छति ॥ २७ ॥

राजा पुरोहिताय पुरोहितः प्रतिहिताय प्रतिहितो रत्निभ्यो रत्निनामनियमोऽन्ततोऽक्षावापाय प्रयच्छति ॥ २७ ॥

तेन स स्फ्येनाधिदेवनमुद्धत्य तिस्रः पञ्चाशतः पञ्च वा पञ्चाशतोऽक्षान्निवपति ॥ २८ ॥ उद्भिन्नꣳ राज्ञ इति ततश्चतुरोऽक्षानिरूह्यꣳश्चतुःशतानपिसृज्य पष्ठौहीं विदीव्यन्ति ॥ २९ ॥ ब्राह्मणो राजन्यो वैश्यः शूद्र इत्योदनमधिपणं विजित्य दिशोऽभ्ययꣳराजाऽभूदिति पञ्चाक्षान्यजमानाय प्रयच्छति ॥ ३० ॥

अक्षावापस्तेन स्फ्येनाधिदेवनं द्यूतस्थानं तस्मिन्मण्डप उद्धत्याक्षान्निवपेत् । अक्षाः सौवर्णा अनियतपरिमाणाः परःशता भवन्ति । शताधिकास्तेषां चतुरो निष्कपरिमाणा[१]श्चतुराधिकमाना अवरसंज्ञकाश्चतुरश्रास्त्रिकोणाकारा धनुराकारा वृत्ताकाराः । ब्राह्मणादयो द्यूतकर्मण्यभियुक्ताः पष्ठौहीं महापणत्वेन निधाय मम कर्णयोः, मम विषाणस्य, मम खुरस्य, मम पुच्छस्य, इत्यहिंसन्तो मनसा कृत्वा विदीव्यन्ते (न्ति) विदेवनं कुर्वन्तीत्यर्थः । ओदनमुद्ब्रुवत इति चाग्न्याधेयवत् । तया विजितया पष्ठौहीमो(ह्यौ)दनं कुर्वन्तीत्यर्थः । एवं विदेवनप्रकारो ब्राह्मणांश्चतुरो वर्णानित्योदनमधिपणं विजित्य राजा पश्चाद्गृह्णाति । ब्राह्मणश्चतुरश्राद्गृह्णाति । राजन्यस्त्रिकोणात् । वैश्यो धनुराकारात् । शूद्रो वृत्ताकारात् । एवं गृहीत्वाऽनियतपरिमाणाक्षाणां कतिपयाक्षानादाय निवपति । चतुरश्चतुरो विभजेत् । यदाऽविभक्ते तदाऽपि चतु(त्वा)रो भवति(न्ति) । दिशोऽभ्ययꣳराजाऽभूदिति पञ्चाक्षान्राज्ञे प्रयच्छतीत्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥

तानपिसृज्य मङ्गल्यनाम्नो (म्न आ)ह्वयति सुश्लोकाँ३ इति संग्रहीतारꣳसुमङ्गलाँ३ इति भागदुघꣳसत्यराजा३निति क्षत्तारम् । तानाहूय ब्रह्मणे क्षेत्रं ददाति ॥ ३१ ॥ यत्कामयते ब्रह्मा त उपद्रष्टारः ॥ ३२ ॥

अथ मङ्गल्यनाम्नो राजाऽऽह्वयति वक्ष्यमाणान्पुरुषान्सुश्लोकाँ३इत्यादिक्षत्तारमित्यन्तानाहूय चतुष्पात्क्षेत्रं ब्रह्मणे ददाति । मङ्गल्यनामानो दीयमानस्य क्षेत्रोऽ(त्रस्यो)पद्रष्टारो भवन्ति चतुष्पात्क्षेत्रं चत्वारः पादा अस्येति । अथवा चतुर्भिर्बलीवर्दैः सह क्षेत्रं ब्रह्मणे ददाति ॥ ३१ ॥ ३२ ॥

यां कामयेत भार्यामस्यै प्रजा राष्ट्रꣳस्यादिति तस्या औपासने प्रतिहितमन्वारम्भयित्वा

---

१ श्चतुरतमानाः मानशब्दो गुञ्जादिपु व्यवह्रियेत इति गम्यते ।

प्रजापते न त्वदेतान्यन्य इति ये पात्रेषु लेपास्तैर्नाम-
व्यतिषञ्जनीयौ होमौ जुहोति ॥ ३३ ॥ असा-
वामुष्यायणोऽमुष्या असौ पुत्र इति नामनी
व्यतिषजति ॥ ३४ ॥

यस्याः पुत्रो राज्ञः(जा) स्यादिति कामयेत तस्या औपासने भिन्ने समुदिते वा तं प्रतिहितं तस्याः पुत्रमन्वारम्भयित्वा पालाशादिपात्रस्थलेपाञ्जुह्वां गृहीत्वा प्रजापते न त्वदेतानीत्यृचमुक्त्वा राजेन्द्रवर्मा राजेन्द्रवर्मणः पुत्रोऽदितिदाया राजेन्द्रचोळ(ल)वर्मपुत्रः स्वाहा । एवं द्वितीयहोमः । अथ नामनी व्यतिषजति प्रजापते० तन्नो अस्त्वित्यन्तमुक्त्वा राजेन्द्रवर्मा राजेन्द्रचोळवर्मणः पुत्रो वयꣳ स्याम पतयो रयीणाꣳ स्वाहेति प्रथमा । एवं द्वितीया तन्नो अस्त्वित्यन्तमुक्त्वाऽदितिदाया राजेन्द्रवर्मा पुत्रो वयꣳ स्याम पतयो रयीणाꣳ स्वाहा, इति ॥ ३३ ॥ ३४ ॥

शौनःशेपमाख्यापयते । ऋचो गाथामिश्राः
॥ (ख० १९) ॥ परःशताः परःसहस्रा वा ॥ ३५ ॥

शुनःशेपेन दृष्टं शस्त्रं शौनःशेपं, तदध्वर्युर्होतारं वाचयेत् । तेन 'वरुणपाशादेवैनं मुञ्चति' (तै० ब्रा० १-७-१०) इति ब्राह्मणम् । तत्र ऋक्संख्यां विधत्ते— परःशतं भवति (तै० ब्रा० १-७-१०) इति । परःशतं शतादधिकम् । ऋक्संख्या चाऽऽपस्तम्बेन स्पष्टीकृता— शौनःशेपमाख्यापयत ऋचो गाथामिश्राः परःशताः परःसहस्रा वा (आप० श्रौ० १८-१९-२०) इति ॥ ३५ ॥

हिरण्यकशिपावासीनो होताऽनुशꣳसति ॥ ३६ ॥

स्पष्टोऽर्थः ॥ ३६ ॥

हिरण्यकूर्चयोस्तिष्ठन्नध्वर्युः प्रतिगृणाति । ओमि-
त्यृचः प्रतिगरस्तथेति गाथायाः ॥ ३७ ॥

शौनःशेपाख्यानकाले आस्यतां भवेद्यजमानः । ॐ इत्यृचः प्रतिगरस्तथेति गाथायाः । हिरण्यकशिपावासीनो होतारं शंसति । हिरण्यकूर्चयोस्तिष्ठन्नध्वर्युः प्रतिगृणाति ॥ ३७ ॥

अपवृत्ते शौनःसे( शे )पे हिरण्यकशिपुं होत्रे
ददाति । हिरण्यकूर्चावध्वर्यवे ॥ ३८ ॥

अपवृत्ते परिसमाप्ते शौनःशेपे शस्त्रस्य शस्त्रमिति ( शस्त्रे ) यजमानो हिरण्यकशिपुं होत्रे हिरण्यकूर्चम ( र्चाव ) ध्वर्यवेऽभिषेचनीयौ च रुक्मौ ददाति ॥ ३८ ॥

अत्र मारुतेनैकविꣳशतिकपालेन वैश्वदेव्याऽऽमि-
क्षया प्रचरेत् । एना व्याघ्रं परिषस्वजानाः सिꣳ

हꣳ हिन्वन्ति महते सौभगाय। समुद्रं न सुहुतं
तस्थिवाꣳसं मर्मृज्यन्ते द्वीपिनमप्स्वन्तरित्यवदास्य-
न्पुरोडाशमभिचरन्स्फ्येन समया विभिन्द्यात् ।
स्फ्य आश्लिष्येद्यचात्रमार्जेत्तद्विष्णव उरुक्रमाया-
वद्येत् ॥ ३९ ॥

हविर्धानं प्राविश्य मारुतवैश्वदेवयोः प्रचारः। स्फ्येन पुरोडाशं भिन्द्यादित्यादि ॥३९॥

अत्रैते हिरण्ये ददाति । सौवर्णं राजतं मणिं च ।
यदि पुरस्तादत्ते भवतः ॥ ४० ॥

भेदमे पुरोडाशे ( शस्य ) कृते नास्ति स्विष्टकृतं, समानं तु स्विष्टकृदिडामार्जे-नान्तम् । हिरण्ये सौवर्णं राजतं मणिं च ब्रह्मणे ददाति । यदि पुरस्तान्नदद्या-त्तदा ॥ ४० ॥

माहेन्द्रप्रभृतीनि कर्माणि प्रतिपद्यते ॥ ४१ ॥

माहेन्द्रस्य प्रचरणादि कर्म नित्यम् । अतिग्राह्यहोमाः पूर्ववत् ॥ ४१ ॥

अवभृथादुदेत्यापां नप्त्रे स्वाहेत्यप्सु जुहोति ॥ ४२ ॥

फलचमसप्रयोगो गुणफलाश्च प्रवर्तन्ते । समानमाऽवभृथात् । अवभृथेष्टिमनूयाजान्तां विधायावभृथादुदेत्यापां नप्त्रे स्वाहेति होमः । यत्ते ग्राव्णेति पवित्रवत् ॥ ४२ ॥

ऊर्जो नप्त्रे स्वाहेति शुष्के स्थाणौ दर्भस्तम्बे वा ॥ ४३ ॥

जुहोतीत्यनुवर्तते । अवभृथदेशविहारयोरन्तराले होमे दर्भस्तम्बादिषु वा ॥ ४३ ॥

अग्नये गृहपतये स्वाहेति प्रत्येत्य गार्हपत्ये ॥ ४४ ॥

विहारदेशं प्राप्यापोऽन्वचारिषमित्युपस्थायाग्नय इति गार्हपत्ये जुहोति । ४४ ॥

ऐन्द्रीꣳ सूतवशामनूबन्ध्यामालभते ॥ ४५ ॥
तस्या नैवारं पशुपुरोडाशं चतुष्पद्याः सूनाया
निर्वपति ॥ ४६ ॥ शकटपत्याम्नायो भवति
॥ ४७ ॥ संतिष्ठतेऽभिषेचनीयः ॥ ४८ ॥
॥ ( ख० २० ) ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने षष्ठः पटलः ।

उदवसानीयादि । इन्द्रदेवत्यां सूतवशामनूबन्ध्यामालभते । इन्द्राय गोर्वपाया मेदस इत्यादि । तस्यां नीवारेभ्यः पशुपुरोडाशस्य निर्वापः (एवं पशुपुरोडाशं निरुप्य)

पशुपुरोडाशं नैवारं चतुष्पद्याः सूनाया निर्वपति । चतुष्पद्याः सूनाया यस्या मांसं छिद्यते विक्रयार्थम् । तस्यां नीवारेभ्यः पशुपुरोडाशस्य निर्वापः । एवं पशुपुरोडाशं निरुप्याष्टौ देवसुवां हवींषि राज्ञो निवपनादि । शेषं पूर्ववत् । एवमभिषेचनीयः समाप्यते ॥४८॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने षष्ठः पटलः ।

अथ त्रयोदशप्रश्ने सप्तमः पटलः ।

अथ संसृपां हवींषि दशसंख्याकानि विधीयन्ते--

श्वोभूते सप्तभिः स१ंसृपा१ं हविर्भिरन्वहं यजते ।
आग्नेयमष्टाकपालं निर्वपतीति यथासमाम्नातम् ।
पूर्वे पूर्वे देवयजनमध्यवस्यति । यत्राऽऽहवनी-
यः पूर्वः स्यात्तत्रापरस्या गार्हपत्यः सप्तम्या इष्टेः
प्राग्वꣳश आहवनीयो बहिर्गार्हपत्यः ॥ १ ॥

सम्यक्सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवतास्तासां हवींष्यपि तन्नामकानि । तान्येतानि हवींषि प्रशंसति--'वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । तत्संसृद्भिरनुसमसर्पत् । तत्संसृपा१ं स१ंसृप्त्वम् । अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त' ( तै० ब्रा० १-८-१ ) इत्यादि । स वरुणः प्रथमेऽहनि देवेन द्योतनात्मकेनाग्निना सहाष्टाकपालं प्रायुङ्क्ताऽऽग्नेयमष्टाकपालं निरवपदित्यर्थः । द्वितीयेऽहनि वाग्रूपया सरस्वत्या चरुं निरवपत् । तृतीये प्रसवकारणेन सवित्रा सह द्वादशकपालं निरवपत् । चतुर्थे पशुभिरुपलक्षितेन पूष्णा सह चरुं निरवपत् । पञ्चमे ब्राह्मणाभिमानिना बृहस्पतिना सह चरुं निरवपत् । षष्ठे द्योतनात्मकेनेन्द्रेण सहैकादशकपालं निरवत् । सप्तमे स्वकीयदेवतारूपेणातीतवत्ययगतवरुणेन सह दशकपालं निरवपत् । अष्टमे राज्ञा यजमानेन सोमेन सह चरुं निरवपत् । नवमे रूपवता त्वष्ट्रा सहाष्टाकपालं निरवपत् । दशमे यज्ञरूपेण विष्णुना सह त्रिकपालं निरुप्य तदिन्द्रियमाप्नोत् । यदि यजमानस्यापि संसृपो यागा भवेयुस्तदाऽसौ यजमान इन्द्रियसामर्थ्यं प्राप्नोतीति ब्राह्मणार्थः । उत्पत्तिविधिभिर्विहितानां संसृपामनेनार्थवादेन भिन्नदिनानुष्ठानविधिरुन्नेयः । षष्ठ्यामागामिनो दशपेयस्य देवयजनस्य पश्चात्संसृपां हविषामुत्तमायामिष्टेराहवनीयायतनं दशपेयस्य प्राग्वꣳशे गार्हपत्यस्थाने यथा स्यादेवं पश्चाद्वा-

१ सप्त वा

र्शपौर्णमासिकी वेदिर्भवेत् । अग्निहोत्रं हुत्वा संसृपां हविर्भिर्यक्ष्य इति संकल्प्य सर्वेषां संसृपां हविः० इति सर्वेषामाग्नेयमष्टाकपालं हिरण्यं दक्षिणा । आग्नेयस्याऽऽहवनीयस्याऽऽयतन उत्तरस्य गार्हपत्यायतनम् । श्वोभूते सारस्वतं चरुं वत्सतरी दक्षिणा । श्वोभूते सावित्रं द्वादशकपालं० उपध्वस्तो दक्षिणा, पूर्ववद्विहारः । श्वोभूते पौष्णं चरुं श्यामो दक्षिणा । श्वोभूते बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा । श्वोभूत ऐन्द्रमेकादशकपालमृषभो दक्षिणा । वारुणं दशकपालं महानिरष्टो दक्षिणा । सर्वेषां पूर्वस्याऽऽहवनीयमुत्तरस्य गार्हपत्यम् । तत्प्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः—'श्वोभूते परेण सौमिकदेवयजनं दशभिः सप्तभिर्वा सँसृपाँ हविर्भिर्यजत आग्नेयमष्टाकपालमिति पूर्वं पूर्वं देवयजनमध्यवस्यति । यत्र पूर्व आहवनीयस्तत्रोत्तरो गार्हपत्यः । उत्तमायाः प्राग्वꣳशं आहवनीयो बहिर्गार्हपत्यः' ( आप० श्रौ० १८–१०–९ ) इति ॥ १ ॥

अथाष्टमनवमदशमानां हविषां स्वस्वदिनेषु कंचित्कालविशेषमाह—

**अथ तया यजते । तस्याꣳ सꣳस्थितायामपराह्णे दशपेयाय दीक्षते ॥ २ ॥ अप्सु दीक्षायाः स्थाने षट्पुण्डरीकां द्वादशपुण्डरीकां वा हिरण्यस्रजं यजमानः प्रतिमुञ्चते ॥ ३ ॥ तदहर्दीक्षितो राजानं क्रीणाति दशभिर्वत्सतरैः साण्डैः ॥ ४ ॥ न पणते न परिवहति ॥ ५ ॥ क्रयमेवापरं करोति ॥ ६ ॥ पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति । अन्तरा त्वाष्ट्रमुपरिष्टाद्वैष्णवम् ॥ ७ ॥**

अभिषेचनीयात्सोमयागादूर्ध्वं दशपेयः सोमयागः कर्तव्यः । तस्य च संस्थायागसंबन्धिनि सप्तमेऽहन्येका दीक्षा कर्तव्या । तत ऊर्ध्वं त्रिषु दिनेषूपसदः कर्तव्याः । तत्र प्रथमोपसद्दिन उपसद्यागात्पूर्वं सौम्याख्येन संसृपाऽष्टमहविषा प्रचरेत् । मध्यमोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदोर्मध्ये त्वाष्ट्रेण नवमहविषा प्रचरेत् । तृतीयोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदावनुष्ठायोपरिष्टाद्वैष्णवेन दशमहविषा प्रचरेत् । दशपेयतन्त्रमध्ये त्रयाणां हविषामनुष्ठानमापस्तम्बेन स्पष्टीकृतम्— अपराह्णे दशपेयस्य तन्त्रं प्रक्रमयतीत्युपक्रम्यैवं पठ्यते एका दीक्षा । तिस्र उपसदः । पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति । अन्तरा त्वाष्ट्रमष्टाकपालमुपरिष्टाद्वैष्णवं त्रिकपालम् ( आप० श्रौ० १८–२०–१९ ) इति ।

ननु राजसूये संसृप्शब्दवाच्यान्याग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि तेष्वष्टमनवमदशमानि सौम्यत्वाष्ट्रवैष्णवानि । तद्विषयमिदं वाक्यमाम्नायते— पुरस्तादुपसदाꣳ सौम्येन प्रचरति । अन्तरा त्वाष्ट्रेण । उपरिष्टाद्वैष्णवेन ( तै० ब्रा० १–८–१ ) इति ।

योऽयं राजसूये सोमयागस्तस्मिन्नुपरि( दि )ष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते । ततो वाक्यात्सौम्यादीन्युपसदामङ्गानीति प्राप्ते ब्रूमः—उपसदामिति षष्ठ्याः कालवाचिना पुरस्तादिति शब्देनान्वयात्सौम्यादीनां कालविशेषसंबन्धपरमिदं वाक्यं नत्वङ्गाङ्गिभावपरम् । ततो न कस्याप्यङ्गं सौम्यादिकं किंत्वनुमत्यादिवत्प्रधानम् ॥

अत्रेयं पद्धतिः—वारुणेनेष्ट्वा तदहरेव द्वादश्यामपराह्णे दशपेयेन यक्ष्य इत्यादि । प्रथमोपसदि तदहरेव वरणभेदपक्षे भार्गवं होतारमस्मिन् वृणीते, न मत्तहोता, न सोमपरिवेषणम् । दीक्षणीयां विधाय वपनं कृत्वाऽऽपो अस्मानिति स्नानादि, अपोऽश्नातीत्यन्ते तस्मिन्स्थाने द्वादशपुण्डरीकस्रजं प्रतिमुञ्चते । शरीरे द्वादशपद्ममालामाबध्नाति, न मन्त्रेणैवेति लिङ्गात् । अथास्मै क्षौममहतमित्यादिसनीहारप्रस्थापनान्तान्गृहीतान्पांसूस्त्रेधा विभज्य तत्सा गृहेषु निदधाति । देव सूर्येत्यादि प्रजाभ्यस्त्वेत्यन्तं लुप्यते । पूर्वमेव क्रीतं ( तानि ) पुरोहितग्रहाऽऽग्र( गृहग )तसोमफलान्याहृत्य क्षौमेण वाससोपसंगृह्येत्यादिविस्रंसनान्तं कृत्वा सोमविक्रयिणे प्रदाय वत्सतरीं पुनस्तूष्णीमेव ददाति । अस्मे ज्योति० स्वजा असीत्यादयोऽपोर्णुते, न स्वान भ्राजः । तूष्णीमुष्णीषदण्डयोः प्रदानं मैत्रावरुणाय, मित्रो न एहीत्याद्यच्छिद्रपत्र इत्यन्तो लुप्यते । वनेषु व्यन्तरिक्षमित्युष्णीषबन्धनं कर्तव्यम् । हस्तेन राज्ञे नयनमा प्राग्वंशात् प्राग्वंशसमीपे यत्र कुत्रापि(त्रचित्) सोमफले( ल )के स्थापयित्वाऽऽतिथ्येन प्रचरति । आतिथ्याया हविष्कृदन्तं कृत्वा, उर्वन्तरिक्षमिति प्रव्रजति प्रतिप्रस्थाता पूर्वःप्रतिपद्यत इत्याद्यातिथ्यया प्रचर्य मदन्तीभिर्मार्जनान्ते सौम्यस्य कर्माऽऽस्तीर्णपक्ष उपसादनम् । उपसदां प्रस्तरबर्हिरेव परिधयश्च सोमाय श्यामाकश्चरुः, बभ्रुर्दक्षिणा । पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य तदहरेवाऽऽपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य विरमति । त्रयोदश्यां श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य सुब्रह्मण्यान्तेऽन्तरा त्वाष्ट्रमष्टाकपालं० शुण्ठो दक्षिणा । ततो यूपाहुत्यादि । ततः श्वोभूते चतुर्दश्यां पौर्वाह्णिकीभ्यां प्रचर्य तदानीमेवाऽऽपराह्णिकीभ्यां प्रचर्य वैष्णवं त्रिकपालं वामनो दक्षिणा, ब्राह्मणभोजनान्तेयमेवेष्टिराज्येडान्तेति भाष्यकृत् ॥ ७ ॥

**तासामौपसदं बाहिः( र्हिः ) परिधयश्चार्थं साधयन्ति ॥ ८ ॥**

तासामिष्टीनामौपसदं तन्त्रं बाहिः पृथक्तन्त्रत्वात्कृत्स्नेष्टिचोदनाच्च परिध्यादयोऽर्थान्साधयन्ति संगृह्णन्तीत्यर्थः ॥ ८ ॥

**सप्तदशो दशपेयोऽग्निष्टोमः । सारस्वतीर्वसतीवरीः ॥ ९ ॥**

प्रवर्ग्योद्वासनादि । वसतीवरीग्रहणकाले यदा सरस्वतीनदीसमीपे देवयजनं तदा तत्र वसतीवरीः । अन्यथा तज्जलमाहृत्य बहुयाजी कुम्भ्यस्तं( म्भीस्थं ) कृत्वा गृह्णाति ।

यद्वा— प्रकृतौ वहन्तीनां गृह्णातीति प्रवाहमात्रगतानामपां वसतीवरीत्वादत्रापि तत्प्राप्तौ सरस्वतीगता एवाऽऽपो विधीयन्ते ॥ ९ ॥

चोदकप्राप्तं होतृसामान्यादिकं बाधितुं विशेषानाह—

**भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् ॥ १० ॥**

प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते । प्रकृतौ ब्राह्मणाच्छंसिन प्रत्याज्यमतोत्र गायत्रसाम्नो विहितत्त्वात्तदपवादाय श्रायन्तीयं सामात्र विधीयते । श्रायन्त इव सूर्यमित्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् । प्रकृतौ यज्ञायज्ञीयस्याग्निष्टोमसामत्वात्तदपोह्य वारवन्तीयं साम विधीयते । अश्वं न त्वा वारवन्तमित्यस्यामृच्युत्पन्नं वारवन्तीयं साम ॥ १० ॥

अथ पद्धतिः- महारात्रे बुद्ध्वे त्यादिपरिप्लवासादनान्ते ।

**पात्रासादनकाले दश चमसानधिकान्प्रयुनक्ति ॥ ११ ॥**

दश चमसानधिकान्प्रयुनक्ति ॥ ११ ॥

**उन्नयनकाले दश चमसानधिकानुन्नयति ॥ १२ ॥**

एवं चमसोन्नयनकालेऽपि दश चमसानधिकानिति वचनाच्चमसाध्वर्यव( र्यूणां )वृद्धिः ॥ १२ ॥

**भक्षणकाले य आ दशमात्पुरुषादविच्छिन्नसोमपीथः स भक्षस्य कर्ता दशमात्पुरुषादन्वाख्याय शतं ब्राह्मणाः सोमपाः संप्रसर्पन्ति ॥ १३ ॥**

**दश दशैकैकं चमसं भक्षयन्ति ॥ १४ ॥**

शतं ब्राह्मणाः सोमयाजिनो वक्ष्यमाणगुणविशिष्टाः सदः प्रसर्पन्ति । एवं सदसो वृद्धिः । भक्षणकाले प्राकृतेषु चमसेषु भक्षितेषु चापूर्वचमसान् । शतं ब्राह्मणाः सोमयाजिन एकैकस्मिन्दश दश सोमयाजिनः, आ दशमात्पुरुषादविच्छिन्नसोमपीथान्दश पुरुषान्कथयेरन्नीदृग्भूतेति न प्रतिज्ञामात्रेण तेऽपि विद्यावन्तः प्राकृतपरिमाणादधिकाः स्थविष्ठांश्चमसानुन्नयन्ति ॥ १३ ॥ १४ ॥

**दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददातीति यथासमाम्नातम् । उक्षाणं ग्रावस्तुते वेहायमानामिवोऽन्नेत्रे वरेतः सुब्रह्मण्याय ॥ (ख॰२१) ॥ १५ ॥**

प्राकाशौ सुवर्णदर्पणौ । हिरण्यस्रजमुद्गात्रे । रुक्मं वर्तुलं सुवर्णाभरणं होत्रे । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । द्वादश पष्ठौहीर्ब्रह्मणे । वशां मैत्रावरुणाय । ऋषभं ब्राह्मणाच्छंसिने । वाससी नेष्टापोतृभ्याम् । स्थूरीयवाचितमच्छावाकाय । अनड्वाहमग्नीधे । एकगोयुक्तं रथं चमसाध्वर्यवे ददातीत्येके । अन्यत्स्पष्टम् ॥ १५ ॥

ननु राजसूये श्रूयते प्राकाशावध्वर्यवे ददाति ( तै० सं० १-८-१८ ) इति । प्राकाशौ दीपस्तम्बावित्येके । दर्पणावित्यपरे । तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य बाधकावुताध्वर्युभागस्यैव । तत्र प्राकाशौ ददातीति कर्मकारकवाचिद्वितीयाश्रुतिकृतेन दानसंबन्धेन प्राकाशावध्वर्यव इति वाक्यकृते पुरुषसंबन्धेऽपोदिते सति देयद्रव्यप्रतीतेर्देयान्तरस्य कृत्स्नस्य बाध इति पूर्वपक्षः । अध्वर्यवे ददातीति संप्रदानकारकवाचिचतुर्थीश्रुतिकृतस्य दानक्रियासंबन्धस्यापवदितुमशक्यत्वात्संप्रदानविशिष्टदानक्रियासंबन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः ॥ १९ ॥

संतिष्ठते दशपेयः ॥ १६ ॥

अग्निष्टोमचमसैः प्रचर्य षोडशिहोमः, न होम इति भाष्यकृत् । दशपेयोऽग्निष्टोमहोमयागः । अवभृथादुदेत्यानूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवामेतानि हवींष्यनुनिर्वपतीत्यादि । समाप्यते दशपेयः ॥ १६ ॥

तस्मिन्सꣳस्थिते दिशामवेष्ट्या यजते ॥ १७ ॥

तस्मिन्संस्थिते दशपेय उपोपणं कृत्वा पञ्चाग्नीन्समारोप्य दिशामवेष्ट्योदवस्यति, न पूर्णाहुतिः । नोदवसानीयधर्माः पञ्चकपालादयः । इदमूनश्रेय इति कृत्वाऽग्नीन्मथित्वोपावरोह्याऽऽयतने निदधाति ॥ १७ ॥

आग्नेयमष्टाकपालं निर्वपतीति यथासमाम्नातꣳ हविषो हविष इष्ट्वा बार्हस्पत्यं प्रत्यभिघारयेत् ॥ १८ ॥

दिशामवेष्ट्या यक्ष्य इत्यादि । अद्य यज्ञाय दिशामावेꣳ हविः० शाखाहरणमित्यादि कुम्भीलेपनान्तम् । अग्नये जुष्टं० इन्द्राय जुष्टं विश्वेभ्यो देवेभ्यो जुष्टं० इत्यादि । प्रातर्दोहकर्म । मित्रावरुणाभ्यामिति निगमाः । घर्मोऽसीति लौकिकदध्यानयनम् । आग्नेयादीनां चतुर्णां मध्य एकैकयागादूर्ध्वं पञ्चमहविषि अभिघारणम् । दक्षिणाकाले हिरण्यर्षभपष्ठौहीवशाशितिपृष्ठाः । ब्राह्मणतर्पणान्तेयमिष्टिः ॥ १८ ॥

तयाऽन्नाद्यकामः स्वर्गकामो वा यजेत ॥ १९ ॥

यजमानः ॥ १९ ॥

ब्राह्मणो यजमानो मध्ये विधायाऽऽहुतिमाहुतिꣳ हुत्वाऽभिघारयेत । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम् ॥ २० ॥

एतयैवेष्ट्या राजसूयाद[न्न]कामसंयोगे ब्राह्मणादयः कुर्वन्ति ॥ २० ॥

अथावेष्टीर्विधाय द्विपशुयुक्तं पशुबन्धकर्म विधत्ते—

**श्वोभूते द्विपशुना पशुबन्धेन यजेत ॥ २१ ॥**

यस्मिन्दिने दशपेयसमाप्तिस्तस्मिन्नहन्यपराह्णे वेत्याऽऽस्तम्बः । श्वोभूत इति सूत्रकारवचनबलात् । पशुबन्धेन यक्ष्य इत्यादि ॥ २१ ॥

**आदित्यां मल्हां गर्भिणीमालभते । मारुतीं पृश्निं पष्ठौहीम् । अश्विभ्यामुपांशु मारुत्या प्रचरति । आश्रुतप्रत्याश्रुते अप्युपांशु भवतः । उच्चैरादित्यायाः ॥ २२ ॥**

अदितिर्देवता यस्याः सेत्यादित्या मल्हा मणिला गलस्तनयुक्तेत्यर्थः । पृश्निरल्पतनुः श्वेतवर्णा वा । अदितेर्भूमित्वेन राष्ट्रत्वं मरुतां च वैश्यत्वमसकृदुक्तं तदेतदभिप्रेत्य प्रशंसति—आदित्यां मल्हां गर्भिणीमालभते । मारुतीं पृश्निं पष्ठौहीम् । विशं चैवास्मै राष्ट्रं च समीची दधाति ( तै० ब्रा० १–८–३ ) इति । पाठप्राप्तं क्रमं प्रशंसति आदित्यया पूर्वया प्रचरति । मारुत्योत्तराया (तै० ब्रा० १–८–३ ) इति । आश्रवणस्य चोदकप्राप्तमुच्चस्त्वानित्वमादित्ययागेऽनूद्यापवदितुं विधत्ते—उच्चैरादित्याया आश्रावयति । उपांशु मारुत्यै ( तै० ब्रा० १–८–३ ) इत्यादि ।

अथ पद्धतिः—न षड्ढोता पश्विष्ट्यादि उपशयेन सह यूपत्रयच्छेदनमग्निष्ठादिस्वरुद्व(त्र)यं वेदिकाले यूपैकादशिनीवत् । अग्रेणाऽऽहवनीयमेको दक्षिणांसस्थान एकस्तस्माद्रथाक्षमात्रमेकं भवति । एकस्मिन्पक्षे द्वयपक्षे वा तस्मिंस्तयोर्वा भवति प्रयोगः । तदशुभम् । अग्रेणाऽऽहवनीयमेव भवत्येको यूपः । तस्माद्रथाक्षमात्रद्वयस्योपरत्रयस्य(येन) तृतीयभागेन चतुर्भिः पश्चादित्याद्यङ्गुल्यास्तृतीयभागातिरिक्तेन सप्तनवाधिकसप्तत्यङ्गुल्या संमितेन वेदिमानम् । केचिद्यूपस्यांसयोः स्थितं स्याद्वैकस्य रथाक्षस्योपरद्वयस्य तृतीयभागेन । केचिदर्धाङ्गुल्यास्तृतीयभागातिरिक्तैक(द्वि)चत्वारिंशदङ्गुल्या संमितेन वेदिमानम् । दशपदोत्तरवेदिरिति केचित् । एकादशिनीप्रकृतित्वात् । केचिच्छम्यामात्रामिच्छन्ति । पात्रप्रयोगे षड्यूपरशना द्वे पशुरशने द्वे कुम्भ्यौ द्वे शूले चतस्रो वपाश्रपणी(ण्यो) दर्भयुगलौ यूपकाल एकादशिनीवत् । यूपद्वयस्योच्छ्रयणं रथाक्षमात्रो यूपान्तराल उपशयनिधानं चैकादशिनीवत् । द्वाभ्यां रशनाभ्यां परिव्ययणं पशुभ्यामेहीति केचित् । मल्हा मणिला मांसपिण्डद्वयं यस्या ग्रीवायाः सा मल्हा । पृश्निः पष्ठौही च गर्भिणी चोपद्र(श)य उपाकरोति । उपशय आखुनिर्देशः । पञ्चहोमे च द्विवचनेनोहः । निष्क्रीते इमे यज्ञियभागमिताम् । सुवर्गं यातम् । उपाकृते शशमाने । अपीताम् । सा ते द्विवचनेन । तेषां ये वव्राते(व्रिरे) ते स्वराऽमायुं कृण्वन्तु संज्ञपयत । स्वर्विदौ स्थः स्वरित-

मित्यादि । द्विवचनेनैव लोकविदौ स्थो लोकमिनं नाथविदौ स्थो नाथमितं गातुविदौ स्थो गातुमितं न वा उ वेतन्म्रियेथे न रिष्यथो देवा५ इदिप्व आशानां वा नानापाणः पशुभ्यामर्पीतं रविष्ठां वाशिषाथां वेपिषाथां पलायिषाथां समज्ञासाथां निमेहथः शकृत्कुरुथः, अभयं कृतं सर्वाभ्यो मृडतं यत्पशूमायुमकृणुत प(पा)शाभ्यां पशून् प्रमुञ्चत ओषधे त्रायस्वैनं द्विःस्वधितेः मैनामिति च । यौ वामात्मानौ पशुषु प्रविष्टौ यौ वितस्थाते, आत्मन्वन्तौ घृतवन्तौ गच्छतं, विन्दतं, दृंहतं, ओषधीः कृतम् । आदित्ये-भ्यश्छागस्य वपाया मेदसः प्रेष्येत्यादि उच्चैरादित्याय । मरुद्भ्यो गोर्वपाया मेदस इत्यादि उपांशुना । वपामार्जनान्ते वरदानमुक्तं गार्भिण्या पष्ठौह्याश्च । पशुपुरोडाशादिवपावत्प्र-चारोऽङ्गानां शेषमेकादशिनीवत् । समुद्रं गच्छ स्वाहेत्यादि द्यावा धूमो गच्छतु० पृणेथा५ स्वाहेत्यादि यूपोपस्थानादि ब्राह्मणभोजनान्तं संतिष्ठते द्विपशुयुक्तं कर्म ।

श्वोभूते द्वितीयायां सद्यो वा सात्यदूतानां हविर्भिर्यक्ष्य इत्यादि । सात्यदूतानां हवि-रिदमेषां मयि । अमावास्यास्तन्त्रम् । निर्वापणकालेऽश्विभ्यां पूष्णे जुष्टं० द्वादशकपालं सरस्वते सत्यवाचे० चरुं सवित्रे सत्यप्रसवाय द्वादशकपालम् । अश्विनौ पूषन्हव्य५ रक्षध्वं(स्व) सरस्वन्सत्यवाक् । हव्य५ रक्षध्वं सवितः सत्यप्रसव हव्यमित्यादि प्रधान-यागान्तेऽश्विनोः पूष्णोरहमन्नादः प्रजनिषीय प्रजया च पशुभिरिति वा । उत्तरयो-रन्नादः । दक्षिणाकाले तु तिसृभिरिषुभिर्युक्तं धनुस्तिसृधन्वं तत्प्रक्षेपाय निर्मिता शुष्कदृतिः । तदुभयमत्र देयम् । ब्राह्मणतर्पणान्तेयमिष्टिः ॥ २२ ॥

अथ प्रयुजां हवींष्युच्यन्ते—

**ततः श्वोभूते षड्भिः प्रयुजा५ हविर्भिर्यजते ॥ २३ ॥**

सात्यदूतानां हविषि समाप्ते ततः परेद्युः प्रयुजां हविर्भिर्यक्ष्य इत्यादि । प्रयुजां हविरिदम्० ।

**आग्नेयमष्टाकपालं निर्वपतीति यथासमाम्नातम् ।**
**दक्षिणो रथवाहनवाहो दक्षिणा ॥ २४ ॥**

निर्वापणकालेऽग्नये जुष्टं० सोमाय जुष्टं० सवित्रे जुष्टं० बृहस्पतये जु० त्वष्ट्रे जुष्टं० अग्नये वैश्वानराय जुष्टं० इत्यादि प्रधानयागान्ते सोमवर्जमन्नादः । दक्षिणाकाले रथस्य वाहनं रथवाहनमन्यच्छकटं यस्मिञ्शकटे रथस्येषयोरग्रमवस्थाप्यते तस्य रथवाहनस्य शकटस्य वाहको दक्षिणो यो बलीवर्दोऽसौ पूर्वषट्के दातव्य इति भाष्यकृत् । ब्राह्मणतर्पणान्तेय-मिष्टिः संतिष्ठते ॥ २४ ॥

अथोत्तरषट्कस्येष्टिमाह—

**श्वोभूते षड्भिरुत्तरैः सारस्वतं चरुं निर्वपतीति यथा-**
**समाम्नातम् ॥ २५ ॥ तिसृधन्व५ शुष्कदृतिर्दण्डमुपान-**

हौ च तद्दक्षिणाऽश्वो वा । शोणकर्ण इत्येकेषाम् । तत्प्रतिराजभ्यः प्रहिणोति ॥ २५ ॥ अभ्यषिक्षि राजाऽभूवमित्यावेदयति ॥ २६ ॥

श्वोभूते प्रातरग्निहोत्रꣳ हुत्वा प्रयुजां हविर्भिर्यक्ष्य इत्यादि । षट्चरवः । सरस्वत्यै जुष्टं० पूष्णे जुष्टं० मित्राय जुष्टं० वरुणाय जुष्टं० क्षत्रपते जुष्टं० अदित्यै जुष्टं० इत्यादि पिण्डं कृत्वा घर्मोऽसीति स्थाल्यां क्षिपतीत्यादि । उत्तरो रथवाहनवाहो दक्षिणा, इत्यापस्तम्बः । अत्र ब्राह्मणेऽपि—दूतान्प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अतो दूतेभ्य एव न च्छिद्यते ( तै० ब्रा० १–८–३ ) इति विधिर्द्रष्टव्यः । प्रतिराजभ्यो दूतान्प्रेषयति । एते दूता आविदो भवन्त्येतदीयं शासनमा समन्ताद्वेदयन्ति ख्यापयन्तीत्याविदः । तेन दूतप्रेषणेनैवं यजमानमाविदं गमयन्ति आ समन्ताद्विद्यते ख्याप्यत इत्याविक्तीर्तिस्तां प्रापयन्ति । किं चायं दूतेभ्यो न विच्छिद्यते सर्वतः प्रेषयितुं कदाचिद्दूता न लभ्यन्त इत्येवं विच्छेदो न भवति किंतु सर्वदा बहवो दूताः संनिहिता वर्तन्ते । दूतप्रेषणप्रकार आपस्तम्बेन स्पष्टीकृतः—'तान्यभ्यवस्नाय प्रतिराजभ्यः प्रहिणोति । अभ्यषिक्षि राजाऽभूवमित्यावेदयते' ( आप० श्रौ० १८–२२–४ ) इति । तानि तिसृधन्वादीनि दक्षिणाद्रव्याण्यभ्यवस्नायाभित आक्रम्य स्नात्वा तानि प्रतिराजभ्यो दर्शयितुं दूतहस्ते दत्त्वा प्रेषयति । स च दूतो राज्ञ एतद्वचनं तेषामग्रे कथयति अभिषिक्तोऽस्मि युष्माकं सर्वेषां राजाऽभूवमिति ॥ २६ ॥

संवत्सरमग्निहोत्रं जुहोति ॥ २७ ॥ अनुसंतत्यै तत्र येऽग्निहोत्रेणाप्रतिपिद्धाः क्रतवस्तानाहरेत् ॥ २८ ॥ संवत्सरे केशवपनीयेनातिरात्रेण यजते ॥ २९ ॥ तत्र वपनप्रवादा मन्त्रास्तेषामादिप्रवादैरादितो वापयेतान्तप्रवादैरन्ततः । संतिष्ठते केशवपनीयः ॥ ३० ॥

केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । तत्र कात्यायनः—अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ( का० श्रौ० १५–९–२६ ) इति । पशुबन्धद्वयानन्तरं केशवपनीयातिरात्रयागः कर्तव्यः । अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपनाकरणलक्षणं व्रतमाचर्यम् । ततस्तद्व्रतविसर्जनार्थमेकः सोमयागः पौर्णमासी सुत्यः कार्यः स एव केशवपनीयातिरात्र उच्यते । रात्रिमतीत्य वर्तेत इत्यतिरात्रोऽतिरात्रसंस्थया कार्यः ॥

ततः संवत्सरमग्निहोत्रꣳ हुत्वा केशवपनीयेन(यक्ष्ये) यजेत । संवत्सरमग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यान्याग्रयणानि प्रवर्तन्ते अन्यानि नित्यानि नैमित्तिकानि । न काम्यानि । श्वोभूते प्रथमायां वपनं कृत्वा केशवपनीयेनातिरात्रेण यक्ष्य इत्यादि पवित्रवदेका दीक्षा तिस्र उपसदः पञ्चम्यां प्रसुत इति । तस्मिन्प्रयोगे दीक्षणीयां कृत्वा वपनकाले स्वधिते मैनमिति कृत्वा ये केशिन इत्याद्यापस्तम्बः । येनावपदित्यन्तैश्चाऽऽदिप्रवादैश्चतसृभिर्वपनं देवश्रूरित्यस्य स्थाने दन्तधावनादि । अतिरात्रसंस्थः केशवपनीयः । सप्तविंशत्या गोभिस्ते क्रीणानीति विशेषः । षोडशिमान् । अष्टाविंशत्येति केचित् । सर्वमतिरात्रवत् । पूर्ववत्फलचमसप्रयोगः । अनूबन्ध्यावपायां हुतायां मा ते केशानित्यादि यत्समीन्तमित्यन्तैरन्तप्रवादैर्वपनं कृत्वा स्नात्वाऽयं प्रयोगः । सर्वमहीनद्वादशाहवत् ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥

तस्मिन्सꣳस्थिते व्युष्टिद्विरात्रेण यजेत ॥ ३१ ॥

तस्मिन्केशवपनीये समापिते व्युष्टिद्विरात्रेण यक्ष्य इत्यादि ॥ ३१ ॥

तस्य ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति ॥ ३२ ॥

तस्य व्युष्टिद्विरात्रस्य । सावित्रमग्निं चेष्य इत्यादि शर्करा उपकल्पन सनीहारप्रस्थापनान्तं कृत्वा समन्वारम्भहोमः—अपैतु मृत्यु० इत्यादि । केचिदत्रोपदिशन्ति । द्वादशाहं दीक्षितो भवति । आगामिन्यां तृतीयायां प्रायणीयया प्रचर्य सोमक्रयणकाले गवा ते क्रीणानि तस्या आत्मा० भूयो वा० एकोनशतगोभिस्ते क्रीणानि । षट्पञ्चाशद्गोभिस्ते क्रीणानीति केचित् । ततः परेद्युः पौर्वाह्णिकीभ्यां प्रचर्य सेनेन्द्रस्येत्यन्ते संभारयजूꣳषीति व्याचष्टे । एवं सर्वोपस्थानान्ते यूपच्छेदनकालेऽग्निष्ठप्रथमांस्त्रयोदश यूपानमन्त्रेणेत्यादि । वेदिकाल एकादशिनीवत् । दश रथाक्षामित्यादि । उपसदि पञ्चम्यां पौर्वाह्णिकीभ्यां प्रचर्य वेदिकरणम् । विमिमीत्वेत्यभिमन्त्रणम् । चतुःशिखण्डेति । तत उत्तरवेदिदेशमध्ये शङ्कुमित्यादि । दध्ना मधुमिश्रेण शर्कराभिरिति बाह्या लेखाः संपूरणार्थाः कृत्वाऽऽपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य प्रजापतिस्त्वा सादयत्वित्यादि संचितोक्थ्यन्तं कृत्वाऽऽपराह्णिक्यौ । द्वादशेऽहनि प्रवर्ग्यमुद्वास्याग्निप्रणयनं कृत्वाऽतिमुक्त्यन्ते काठकाहुतयः । असवे स्वाहेत्यन्ता एकविंशतिश्छदिःसदः संतृण्णे अधिषवणफलके । अग्नीषोमीयकालेऽग्रेवासनान्तम् ॥ ३२ ॥

सर्वस्तोमोऽतिरात्र उत्तरं गायत्रं पूर्वेऽहन्त्साम भवति । त्रैष्टुभमुत्तरम् । रथंतरं पूर्वेऽहन्त्साम भवति । बृहदुत्तरे वैखानसम् । पूर्वेऽहन्त्साम

भवति । षोडश्युत्तरे हविष्मान्निधनं पूर्वमहर्भवति । हविष्कृन्निधनमुत्तरम् । अमावास्यायां पूर्वमहर्यजनीयमुत्तरम् । आपूर्यमाणपक्षस्य वा । ये पुण्ये अहनी स्याताम् ॥ ३३ ॥

श्वोभूते ध्रुवाः प्रयुज्य षोडशिपात्रं न वा परिप्लवादि । पशुपात्राणां काले त्रिगुणा दश पञ्च द्विगुणा पञ्च कुम्भ्यः पञ्च शूला वपाश्रपणीर्दर्भयुगलानि ऐन्द्रवायवग्रम् । पशुभिरेहि आश्विनं गृहीत्वा यूपचतुष्कं मिनोति । अञ्ज(अभ्यादा)नाद्यान्निष्ठाद्दक्षिणमित्याद्युत्तरापवर्गः । तत उपशयनिधानं कापेय्यैकादशिनीवत् । आग्नेयमग्निष्ठाद्दक्षिणोत्तरयोरैन्द्रौ । उत्तरे सारस्वतः पशुः । दक्षिणे सावित्रः । तत उपशय आखुनिर्देशः । दक्षिणाकाले दशसहस्रं ददाति । अग्निष्टोमचमसैः प्रचर्य षोडशिहोम, अग्निष्टोमसंस्थायां यज्ञायज्ञीये स्तूयमान उत्तरस्मिन्नहनि वसतीवरीर्गृह्णाति । सूक्तवाक उच्यमाने श्वः सुत्यामिति प्रैषं पत्नीसंयाजान्ता संतिष्ठते ।

मैत्रावरुण्या शाखाच्छेदनादि कुम्भीलेपनान्तं दिवैव रात्रौ वसतीवरीः परिहृत्य दोहनं, पशुशाखाहरणादि परिस्तरणान्तम् ।

महारात्रे बुद्ध्वेत्यादि, अतिरात्रसंस्थाः सषोडशिकाः । पशुपात्रप्रयोगे द्वादश यूपरशनाः षट्पशुरशनाः षट्कुम्भ्यः शूलाश्च वपाश्रपणीर्दर्भयुगलानि च शुक्रग्रहादि पशुभिरेहीत्यादि आश्विनौ गृहीत्वा षड्यूपान् मिनोति । अग्निष्ठाद्दक्षिणोत्तरयोर्दक्षिणत आरभ्य व्यत्यासेनोदगपवर्गाः पूर्वोपशयान्तं तन्त्रेण स्थापयति भेदेन वा । तत उपशयस्य च्छेदनम् । रशनाद्वयस्य परिव्ययणम् । मितानामुपशयस्य च । अस्मिन्नहनि । मितानामाद्ये वैश्वदेवानामुपाकरोति । द्वितीय उत्तरे सौम्यं तृतीये दक्षिणे मारुतमुत्तरे चतुर्थे पौष्णं, पुनश्चोत्तरे पञ्चमे बार्हस्पत्यं, अथ दक्षिणे षष्ठे वारुणं, तत आखुनिर्देशः । दक्षिणाकाले दशसहस्रं ददाति । काठकदक्षिणा (पृथक्) पूर्वेद्युः प्रसर्पणान्तं तन्त्रेण तिरोहान्तम् । अग्नीदौपयजानित्यादि अनूबन्ध्यावपां हुत्वा पात्नीवतं कर्म, पशुपुरोडाशादि देवसुवामेतानि हवींषि, इत्यादि उदवसानीयान्तम् । पौर्णमास्यां पूर्वमहरित्यादिविकल्पः । अमावास्यायां पूर्वमहरित्यस्य प्रयोग उक्तः । आपूर्यमाण इति विकल्पः प्रथमायां पूर्वं द्वितीयायामुत्तरं दशम्येकादशी वा ॥ ३३ ॥

क्षत्राणां धृतिरग्निष्टोमस्तेनानन्ततो यजेत ॥ ३४ ॥

यस्मिन्नहनि व्युष्टिद्विरात्रसमाप्तिस्तस्मिन्नहनि क्षत्राणां धृतेरारम्भः । द्वितीयायां वोक्तप्रयोगस्य आरम्भः । क्षत्राणां धृतिना यक्ष्य इत्यादि पवित्रवत् । एका दीक्षा तिस्र उपसदः पञ्चम्यां प्रसुत इति । सोमक्रयणकाले गवा ते क्रीणानीत्युक्त

एकत्रिंशद्गोभिस्ते क्रीणानीति । अथवा—अष्टाविंशत्या गोभिः [ इति ] । दक्षिणाकाले पञ्च सहस्राणि ददाति । अग्निष्टोमचमसैः प्रचर्य षोडशि ( प्रचारः ) अग्नीदौपयजानित्यादि राजसूये तिस्रोऽनूबन्ध्या विकल्पेनाऽऽम्नाताः ॥ ३४ ॥

**पञ्चापवर्गो भवति ॥ ३५ ॥**

अग्निष्टोमः पञ्चापवर्गः फलप्राप्तिः, उदवसानीयान्तम् ॥ ३५ ॥

**संतिष्ठते राजसूयः ॥ ३६ ॥**

संतिष्ठते समाप्यते ॥ ३६ ॥

**राजसूयेनेष्ट्वा सौत्रामण्या यजेत ॥ (ख०२३) ३७ ॥**

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्ने सप्तमः पटलः ।

अनन्तरे पर्वणि सौत्रामणी मैत्रावरुणी चाऽऽमिक्षा ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्ने सप्तमः पटलः ।

अथ त्रयोदशप्रश्नेऽष्टमः पटलः ।

---

आचार्येण राजसूयोऽनुविहित इदानीमवसरप्राप्तं सौत्रामण्यनुविधास्यन्(नं) क्रियते—

**त्रिरात्रे पुरस्तात्सीसेन क्लीबाच्छष्पाणि क्रीत्वा क्षौमे वासस्युपनह्य निदधाति ॥ १ ॥**

नवमीप्रभृति त्र्यहं त्रिरात्र इति । नवम्यां सौत्रामण्या यक्ष्य इत्युक्त्वा विद्युदसि, षड्ढोता पशुवत् सिद्धे( सीसे )न क्लीबाच्छष्पाणि क्रीणाति इति सिद्धम् । यद्वा—त्रिरात्रे पुरस्तात्सुरेष्टिः । लोहं सीसमित्युच्यते । क्लीबाच्छष्पाणि रोमाणि तरुणयवास्तोक्मानि व्रीहय इति शम्यामात्रा भवन्ति व्रीहयः । व्रीहयश्च तरुणयवाश्च तोक्मानि शष्पाणि वोच्यन्ते इति । क्षौमे वाससि बद्ध्वा निदधाति स्थापयति । त्रिरात्रं यथा न शुष्काणि भवन्ति तथोपायः क्रियते ॥ १ ॥

**सौत्रामण्यास्तन्त्रं प्रक्रमयति ॥ २ ॥**

सौत्रामण्यास्तन्त्रमारभते । अङ्गसमुदायस्याऽऽख्यात(न)मिति तदारभेत कर्तुम् ॥२॥

**तत्र यावत्क्रियते तद्व्याख्यास्यामोऽग्नीनन्वाधाय वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीःस्तीर्त्वा यथार्थं पात्राणि प्रयुनक्ति**

१ परिसमाप्यते ।

स्थालीं कपालानाꣳ स्थाने प्रयुनक्ति ॥ ३ ॥

न षड्ढोताऽग्निः परित्यज्यते । अस्मिन्नाग्निहोत्रहोमः । ततो द्वादश्यां प्रातरग्निहोत्रं हुत्वा सुरेष्ट्यर्थमग्निः प्रणीयते । न विद्युदसि । ततोऽन्वाधानम्—अग्निं गृह्णामि० चतुरहे यज्ञायुरनुसंचरानिति विशेषः । इमामूर्जं द्वादशीं ये प्रविष्टा सौत्रामणीयꣳ हविरिदमेषां मयि । केचिदेष्टꣳ हविरिति । अन्वाहितजपे कृते बर्हिराहरणादि, नेध्मम्, अग्न्यलंकरणान्ते परिस्तरणम् । ततः पाणिप्रक्षालनादि, यथार्थं पात्राणि प्रयुनक्ति स्वस्वस्थालीं च शम्यादृषदुपलवर्जान्यपरतः, परतः स्रुवं वेदं पात्रीमाज्यस्थालीं प्रणीताप्रणयनं मदन्त्यर्थमुपवेषं वेदाग्रं मेक्षणं योक्त्रमिति ॥ ३ ॥

निर्वपणकालेऽश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे प्रभूतान्व्रीहीन्निर्वपति ॥ ४ ॥

निर्वापणकाले प्राप्तेऽश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे जुष्टं निर्वपामीति निर्वापणादयस्तन्त्रेण संस्कार्या( राः । )अश्विनौ सरस्वतीन्द्र सुत्रामन्हव्यꣳ रक्षध्वमिति । निर्वापवत् प्रोक्षणं प्रोक्षामीति विशेषः ॥ ४ ॥

चरुकल्पेन श्रपयित्वाऽग्रेण गार्हपत्यमवटं खात्वा सुरायाः कल्पेन परिस्रुतꣳ संदधाति ॥ ५ ॥

उपवेषमादाय स्थाल्याः कपालधर्मः, तामधिश्रयणं ध्रुवोऽसीति न तु निर्दग्धं, तण्डुलानुत्पूय समापो अद्भिरिति प्रणीताभिः संयौति अद्भिः परीति मदन्तीभिः, घर्मोऽसीति सहाद्भिरधिश्रयणं, अन्तरितमविदहन्तः, नाऽऽप्यलेपनिनयनं न वेदिकरणं ब्राह्मणस्य मूर्धन्खरे वा सादयेत् स्फ्यं तिर्यञ्चꣳ स्तब्ध्वा स्रुवं च स्रुचश्च संमृड्ढि पत्नीꣳ संनह्याऽऽज्येनोदेहीत्यादि, आर्द्रो भुवनस्येति चरोरुद्वासनान्तम । ततोऽग्रेण गार्हपत्यमवटं खात्वा तस्मिन्नवटे स्थाप्यते स्थाल्यामेव सुरासंधानं तस्यामुदकं क्षिपति । अल्पं हविर्महती स्थाली क्रियते ॥ ५ ॥

स्वाद्वीं त्वा स्वादुनेति शष्पैः सुराꣳ सꣳसृजति ॥ ६ ॥

अत्र व्रीहियवाद्यङ्कुरं शष्पशब्दाभिधेयं बालतृणं चोपलक्ष्यते ॥ ६ ॥

सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सꣳसृष्टामभिमन्त्रयते ॥ ७ ॥

यजमान इति शेषः ॥ ७ ॥

तिस्रो रात्रीः सꣳहिता वसति ॥ ८ ॥

---

१ अग्निं ।

शष्पैः संसृष्टायास्त्रिषु दिनेषु तथैव निवासं विधत्ते—तिस्रः स॑सृष्टा वसति । तिस्रो हि रात्रीः क्रीतः सोमो वसति ( तै० ब्रा० १–८–९ ) इति । क्रीतसोमस्य त्रिरात्रवासोऽन्यत्र प्रसिद्धः । तथा च श्रूयते—'त॑ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो रात्रीः परिमुषितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतः सोमो वसति' ( तै० सं० ६–१–९ ) इति । तिस्रो रात्रीः संसृष्टा वसति ।

अथ चतुर्दश्यामन्वाहितानामग्नीनां न त्यागस्तेष्वेवाग्निहोत्रादीनि । अथ पञ्चदश्यां यदि पौर्वाह्णिकं पर्व तदा दर्शः पूर्णमासो वा क्रियते ततस्त्रिपशुरारभ्यते । यदि त्वौत्तरभाविकं पर्व ततः समाप्य त्रिपशुं पञ्चदश्यां दर्शं पूर्णमासं वा । अथ सौत्रामण्याः पयोग्रहमाश्रित्य प्रयोगः । पञ्चदश्यामेव सौत्रामण्या यक्ष्य इत्युक्त्वा पञ्चहोता, ततः पश्विष्टिः शाखाहरणादिव्रतप्रवेशः ॥ ८ ॥

एकयूपं छिनत्ति ॥ ९ ॥

यूपाहुत्यादिपशुस्नपनान्तं प्रकृतिवत् । अयं तु विशेषः । ग्रहपात्रसादनकाले वत्सापाकरणं प्रातर्दोहवत्, पशुशाखया सतं नार्या कुम्भीस्थाने प्रा दोहपात्राणि, कुम्भीमभिधानीं निदाने दोहनपात्राणि सुराया उद्भेदनकाल एता आचरन्तीत्यादिसंक्षालननिनयनान्तं प्रातर्दोहवत् । पशुशाखाया उपवेषं च, अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इति निगमाः । ब्राह्मणमूर्धन्खरे वा सादयित्वा, इन्द्रमिन्द्रियमित्यादिर्ब्रह्मसत्राभिमर्शनं खरादधस्तात् कृत्वा वालमध्येन पवित्रेण पावनं पुनातु ते परिस्रुतमित्यविकारेण यथायतनं सादयित्वा पश्वपाकरणादि मार्जनान्तं पूर्ववत् । ग्रहाणामथवा प्रसुकानि ध्रुवान्तान्याज्यानि गृहीत्वा कुविदङ्गेति च पूर्ववदैन्द्रमासादयित्वा प्रोक्षणीरभिमन्त्र्येत्यादि वपामार्जनान्तं पूर्ववत् । ततः पुरोडाशं विर्वपतीत्यादि सर्वं पूर्ववत् । *मासरामावात्तस्य निवृत्तिः । तत्रश्लोकाः—

पर्वण्येव पयोग्रहेऽप्यसुधमाद्यागः खरे सादनात्
प्राक्कुम्भीसतयोः कृते त्वपनयेद्वत्सान्पशोः शाखया ॥
त्रीण्यूर्ध्वानि च दोहपात्राणि खरं मूर्धन्खरे वा सुरा
निष्टप्तानि च दोहकर्म सदने सन्नाभिमृष्टिस्तथा ॥
खरादधस्तान्वालेन पावनं तु पुनः खरे ।
इषे त्वेति वपाहोमो मार्जनादि च पूर्ववत् ॥

* अङ्कुरितयवचूर्णं मासरम् ।

अथ त्रिपशोः कर्म, न पश्विष्टिः परिगृहीतत्वात् । सुरादेवतायां यत इन्द्रः स एव सुत्रामा वेति केचित् । पश्विष्ट्यादि । इन्द्रः सुत्रामा, अन्येऽन्य इन्द्र इति । तस्मात्पश्विष्ट्यादिसुरेष्टेः यदि व्रतोपायनं कृतमिह न पश्विष्टिं कृत्वा, क्रियत आसन्नेषु हविःषु वा व्रतोपायनं पश्विष्टिः । शाखाहरणं प्लक्षशाखायां च यूपाहुत्यादिचषालकरणान्तं स्वरवस्त्रयः न स्वरुभिः पशून्व्यर्धयेयमिति श्रुतेः । एको यूपः । नोपशयपात्नीवतौ ॥ ९ ॥

न वेदं करोति । पुरस्तात्कृते नार्थान्कुरुते ॥ १० ॥

वेदं कृत्वा वेदिं करोति । न वेदं करोति वेदार्थान्पूर्वं कृतेनैवोपदेशात्सर्वं तेनैव॥ १०॥

सौमिक्यास्तृतीयमात्रीं वेदिं करोति ॥ ११ ॥

सौमिक्या वेदेस्तृतीये यजेत । प्रक्रमस्य त्रिकरण्या वा वेदिमानम् । चतुर्विंशत्यङ्गुलसंमितेन दण्डेन दशभिः पश्चाद्द्वादशभिः प्राची, अष्टाभिः पुरस्तात् । न दशपदोत्तरवेदिः शम्यामात्रैव पशुबन्धवदिति विधानात् एकादशिन्यां प्रत्यक्षविहिता एव प्रवर्तन्ते । तस्माच्छम्याप्रमाणोत्तरवेदिरिति भाष्यकृत् ॥ ११ ॥

यस्मिन्कालेऽध्वर्युरुत्तरवेदिं करोति तस्मिन्काले प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्य दक्षिणेनोत्तरवेदिं चतुरश्रं खरं करोति ॥ १२ ॥

यस्मिन्काल उत्तरवेदिं करोत्यध्वर्युस्तदा प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्य मृत्तिकां दक्षिणोत्तरवेदिं ( द्यां ) खरं पीठं करोति । उत्तरवेद्यां क्रियमाणायामेव तूष्णीं खरकरणमग्रेणान्वाहार्यपचनस्यादूरे वेद्यामेव सुराग्रहार्थं द्वितीयं खरं करोति । चात्वाले तस्मादाहृत्य पुरीषमध्वर्युः, निःसारणान्तं पशुवत् ॥ १२ ॥

यस्मिन्कालेऽध्वर्युराहवनीयं प्रणयति तस्मिन्काले प्रतिप्रस्थाता दक्षिणाग्नेरङ्गारानाहृत्य खरे न्युप्योपसमादधाति ॥१३॥ न पाणी प्रक्षालयते॥१४॥

अग्निप्रणयनकाल उत्तरवेदिकं प्रणयत्यध्वर्युः । प्रतिप्रस्थाता दक्षिणाग्नेरग्निमाहृत्य दक्षिणेनोत्तरवेदिखरे न्युप्य तूष्णीं यथा व्यवायो न भवति तथा पश्चादुपसमादधाति । अतिमुक्त्यन्तमौत्तरवेदिकस्य बर्हिराहरणादि परिस्तरणान्तं पाशुकं, पाणिप्रक्षालनादि । पात्रासादनकाले प्राप्ते पाशुकेष्वेवं विकारः, द्वे यूपरशने तिस्रः पशुरशनाः कुम्भीत्रयं वपाश्रपणीत्रयं वृष्णीयदैन्द्रस्तदा कुम्भीशूलवपाश्रपणीनां तन्त्रं मेषवृष्ण्योः । एवं पाशुकानि प्रयुज्य ॥ १३ ॥ १४ ॥

---

१ एतत्सूत्रमिति ।

अश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे त्रीणि
वैꣳकङ्कतान्यूर्ध्वपात्राणि प्रयुनक्ति ॥ १५ ॥

अश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे, त्रीण्यूर्ध्वपात्राणि सुराग्रहार्थे खरे प्रयुनक्ति ॥ १५ ॥

सतꣳ शतातृण्णाꣳ स्थालीꣳ रुक्मं वालस्रावं
च ॥ १६ ॥

सतं द्रोणकलशाकृतिं प्रयुनक्तीति विशेषः । परिमण्डलं शतच्छिद्रं मार्तिकं स्थालीविधानात् । प्रयुनक्ति वालस्रावं वालमयं शुचिभिर्गोवालैः कृतं सुराक्षालनार्थं प्रयुनक्ति । केचिद्दशापवित्रवद्वस्त्रे बध्द्वा श्येनपत्रं श्येनपुच्छं च कलबदरकर्कन्धुसक्तून्पांशुकानि संमृज्योर्ध्वपात्राणि जुहूवत्संमार्ष्टि पालाशत्वाच्च तस्य पात्रीधर्मास्तद्दारुमयम् । शतच्छिद्रा मार्तिकी स्थाली ॥ १६ ॥

यत्प्राक्पशूपाकरणात्कृत्वोद्धिद्य सुराꣳ सते
निषिच्य पुनातु ते परिस्रुतमिति वालमयेन
पवित्रेण पुनाति ॥ १७ ॥

प्राक्पशूपाकरणात्कृत्वा तत्र विशेषः । देवस्य वां ददत इति रशनाद्वयस्याऽऽदानं परिवीरसीत्यविकारेण दिवः सूनुवः स्थ, अन्तरिक्षस्य त्वा स्थानावगूहामि, एवमन्तं कृत्वोऽद्धिद्य सुरां ब्राह्मणस्य मूर्धन्खरे वा सादयित्वा तूष्णीं प्रियेणेति । केचित् पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयन्ति खरस्याधस्तात् ॥ १७ ॥

वायुः पूतः पवित्रेणेति सोमवामिनः । सोमातिपवितस्य वा । प्राङ्सोम इति सोमातिपवितस्य
पूतां ब्राह्मणस्य मूर्धन्सादयित्वा ॥ (ख०२४) ॥ १८ ॥

प्रत्यङ् सोम इति सोमवामिनः प्रत्यङ् सोमो अतिद्रुत इति पवितस्य[1] पूतां यथायतनं सादयति । यत्र पूर्वमासादितं तत्रैवाऽऽसादयति ॥ १८ ॥

पशूपाकरणप्रभृतीनि कर्माणि प्रतिपद्यते । आश्विनमजं धूम्रमुपाकरोति । सारस्वतं च मेषमैन्द्रमृषभं वृष्णिं बस्तं वा । बार्हस्पत्यं चतुर्थꣳ सोमवामिनः सोमातिपवितस्य वा ॥ १९ ॥

एकयूपे पशूनुपाकरोति । एकादशिनीवदित्यादि, इषे त्वेत्यादि, अश्विभ्यां त्वा

१ सोमातिपवितस्य

जुष्टमुपाकरोमीति धूम्रवर्णमजं, इषे त्वेत्यादि, सरस्वत्यै त्वा जुष्टमिति मेषं, सरस्वती देवता, वाग्वै सरस्वतीति वाक्यशेषात् । इन्द्राय जुष्टमित्यृषभं वृष्णिं वाऽन्ये बर्हिष्या- दाय बृहस्पतये त्वेति चतुर्थोऽजः, अतिपवितस्य सोमं पीत्वोदरात्स्रवणं यस्य सोमाति- पवितः । अनित्यः, उपाकृत्य पञ्च जुहोति, ऊहेन सुवर्गं यात ओषधीषु प्रतितिष्ठते येषामीशे० निष्क्रीता इमे यन्तु ये वध्यमाना, न तु चतुर्थेनोहः प्रमुञ्चमाना उपाकृता- न्शु( ञ्छ )शमाना० अग्नेर्जनित्रमसीत्यादि अभिहोमान्तं, देवस्य त्वा० पशुरशनामा- दाय पशोर्दक्षिण इत्यादि, धर्षा मानुषानश्विभ्यां त्वा जुष्टं नियुनज्मि, दक्षिणतो नियोजनम् ।

ततः सारस्वतस्य धर्षा मानुषान्० सरस्वत्यै त्वा जुष्टं नियुनज्मि ततः धर्षामानुषा- निन्द्राय त्वा जुष्टं नियुनज्मि, ततः अद्भ्यस्त्वौषधीभ्य इत्यादि अश्विभ्यां त्वा जुष्टं प्रोक्षामीत्यादि प्रोक्षति । अपां पेरुरसीत्यादि क्रमेण पायनं त्रयाणाम् । स्वात्तमित्यादि च क्रमेण वेदनिधानादि स्रुच्यमाघार्येत्यादि सं ते प्राण इत्यादि सं यज्ञपतिरित्यन्तमे- कस्य कृत्वेतरयोः क्रमेण, ध्रुवासमञ्जनादि सर्वाञ्जनं तन्त्रेण, सकृत्स्वधित्योरन्तर्धाय, स्वधितिनैकमङ्क्त्वा पशून्पुनः स्वधित्यञ्जनमन्येन शकलेन च द्वितीयस्याञ्जनं पुनः स्वधित्यञ्जनमन्येन स्वरुणा सहाञ्जनं, स्वरूणां चिह्नकरणं, पशूनां कुम्भ्यादीनां च पर्यग्निकरणं तन्त्रेण, पशुपतेः पशवस्तेषां यान्वीत्रेर देवास्तान्स्वराऽनुमन्यतां, विमोक- स्तन्त्रेण ये बध्यमानान्मुख्यवपाश्रपण्या अन्वारम्भः । एवं त्रियज्ञपतिमित्यादि तं दक्षिणे- मेत्यन्तमेकस्य कृत्वेतरयोः । केचित्अतिपशावाध्रिगोवध्यगो(?)हखननमुल्मुकाहरणं च नाऽऽ- वर्तन्ते । प्रमुञ्चमाना० नानाप्राणो० इति निनयनं तन्त्रेण, तदा सर्वं तन्त्रेण स्वस्वाभ्या- मालभ्य वपाश्रपणीभ्यां मुख्यस्यान्वारम्भः । दर्भास्तरणादि क्रमेण, अमायुं कृण्वन्तः संज्ञपयत स्वर्विदः स्थ ( इत्यादि लोकविद् स्थ गातुविद् स्थ नाथविद् स्थ न वा उ एतन्म्रियसे( ध्वे )० आशानां वा आशा० नाना प्राणाः पशुभिर्यज्ञं० इत्यादिबहुवचनप्रयोगो न तन्त्रेण दैव्याः शमितारः० उपेतन० पाशेभ्यः पशून्प्रमुञ्चत इति पाशस्य विमोकः पृथक्पृथक्, मुख्यवपाश्रपण्या सकलानु- दस्य नमस्त आतानेत्यादि अपो देवीरित्यन्तं, वाक्त आप्यायतामित्यादि शुद्धाश्चरित्रा इत्यन्तमेकस्य कृत्वा, इतरयोः । त्रायस्वैनं, इति उत्क्रान्तामीत्यन्तमेकस्य कृत्वेतरयोः । अन्ये व्युदस्य लोहितान्ता रक्षसां भागः स्थेति । अच्छिन्नो राय अश्विभ्यां त्वा जुष्टमु- त्क्रान्तामीति । सरस्वत्यै त्वा० इन्द्राय त्वा० तन्त्रेण प्रत्युष्टं० सर्वा अन्वारभेत यजमानः। उल्मुकैकदेशमित्यादि निर्दग्धं तन्त्रेण वायो वीहि० भेदेन यस्त आत्मेति च । केचित् ओ( दू )हेन ये व आत्मान इत्यादि, प्रविष्टा विनस्थिरे । आत्मन्वन्तः० सुपिप्पला

ओषधीः कृत। इदमिन्द्रियमिति भेदेन उत्तमप्रयाजादि। पूर्वं परिवप्यꣳ हुत्वा जुहामुपस्ती- र्येत्यादिक्रमेण। वपाप्रचारः—अश्विभ्यां छागस्य वपाया मेदसोऽनुब्रूहीत्यादि, एवं प्रेष्य जातवेदः० । एवं सरस्वत्यै मेषस्य वपाया मेदस एवं प्रेष्य। इन्द्रायर्षभस्यैवं प्रेष्य। सारस्वतस्य—सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं० इतरयोः सांनाय्यवत्। उत्तरप- रिवप्यहोमः। वपोद्धरणाभिघारणं भेदेन, स्वाहोर्ध्वनभसं मारुतं गच्छत। तन्त्रेणाभि- होमः ॥ १९ ॥

हुतासु वपासु रुक्ममृषभꣳ सात्वरीं च वडवां दक्षिणां ददाति ॥ २० ॥

हुतासु वपासु निष्कमृषभं सात्वरीं च वडवां ददातीत्यापस्तम्बः। दक्षिणाकाल ऋषभो बलीवर्दः सात्वरी शीघ्रगामिनी अश्वस्य योषिद्वडवा। तां चान्तर्वेद्यां स्थापयति ब्रह्मणो ब्रह्मगी स्थो ब्रह्मणे वो हुताद्य मा मा हिꣳसिष्ट हुताद्य मह्यꣳ शिवा भवत (इति)। ब्रह्म पिन्वस्वेत्यविकारेण सहस्रधारा उत्सा अक्षीयमाणा ते दध्नुः पृथिवीमन्तरिक्षं दिवं च तैं रुक्मर्षभसात्वरीवडवाद्रव्यैरतितराणि मृत्युं ब्राह्मणा इमे वो निष्कर्षभसात्वरीवडवाः। केचिन्नपुंसकेनोहमिच्छन्ति। निष्कशब्दो नपुंसकमिति। अनुशासनिकाद्या विकल्पाः। अग्नये हिरण्यम्। रुद्राय गाम्। वरुणायाश्वमिति प्रतिग्रहः। चात्वाले मार्जनम् ॥ २०॥

तत्कृत्वा वायव्यैः सुराग्रहान्गृह्णात्युपयाम- गृहीतोऽस्यच्छिद्रां त्वाऽच्छिद्रेणाश्विभ्यां जुष्टं गृह्णामीत्याश्विनं ग्रहमध्वर्युर्गृह्णाति। उपयामगृहीतोऽस्यच्छिद्रां त्वाऽच्छिद्रेण सरस्वत्यै जुष्टं गृह्णामीति सारस्वतम्। प्रतिप्रस्थाता। उपयामगृहीतोऽस्यच्छिद्रां त्वाऽच्छिद्रेणेन्द्राय सुत्राम्णे जुष्टं गृह्णामी- त्यैन्द्रं यजमानः ॥ २१ ॥

तत्कृत्वेतिवचनात् प्रकृतिवत्। ग्रहावकाशश्रुतंकारौ न भवतः। आश्विनमध्वर्युर्गृ- ह्णाति। सारस्वतं प्रतिप्रस्थाताऽऽग्नीध्रो वा। ऐन्द्रं ब्रह्मा यजमानो वा। ( आप० श्रौ० १९-२-९ ) इत्यापस्तम्बसूत्रे विशेषः ॥ २१ ॥

कुविदङ्गेति सर्वेषामेका पुरोरुक् ॥ २२ ॥

सर्वत्रानुवर्तते ॥ २२ ॥

कुलसक्तुभिराश्विनꣳ श्रीणाति । बदरसक्तुभिरित्येकेषाम् । सिꣳहलोमभिश्च कर्कन्धूसक्तुभिः सारस्वतꣳ शार्दूललोमभिश्च बदरसक्तुभिरैन्द्रं कुवलसक्तुभिरित्येकेषाम् । वृकलोमभिश्च । अपि वा सिꣳहावध्वर्युर्मनसा ध्यायेत् । शार्दूलैः प्रतिप्रस्थाता । वृकैर्यजमानः ॥ २३ ॥

कुलसक्तुभिः सिंहलोमाभिश्चाऽऽश्विनं गृह्णाति । बदरसक्तुभिः शार्दूललोमभिश्च सारस्वतं श्रीणाति । कर्कन्धूसक्तुभिर्वृकलोमभिश्चैन्द्रं श्रीणाति । एतेषां फलचूर्णैः श्रीणाति । सिंहः प्रसिद्धः । शार्दूलः पि(लो द्वीपी) । वृकः प्रसिद्धः । तेषां लोमाभावे सिंहं मनसा ध्यायेत् ॥ २३ ॥

एष ते योनिरश्विभ्यां त्वा, एष ते योनिः सरस्वत्यै त्वा, एष ते योनिरिन्द्राय त्वा सुत्राम्ण इति यथारूपं ब्राह्मणस्य मूर्धन्सादयित्वा ॥ (ख०२५) ॥ २४ ॥

गृहीतान्हस्तस्था(न् ग्रहा)न्श्ये(श्ये)नपत्रेण सर्वतः परिमृज्य यथारूपं सादयेत् ॥२४॥

पशुपुरोडाशप्रभृतीनि कर्माणि प्रतिपद्यते ॥ बार्हस्पत्यं पशुपुरोडाशं निरुप्यैन्द्रमेकादशकपालं निर्वपति । सावित्रं द्वादशकपालम् । वारुणं दशकपालम् ॥ २५ ॥

ततः पुरोडाशान्निर्वपति । बार्हस्पत्यस्य नैमित्तिकस्य निरुप्येतरेषां निर्वापः । तस्यैकादश कपालानि द्वादश वा पुरोडाशानां त्रयस्त्रिꣳशत्कपालानि स्फ्यश्च द्वंद्वमित्यादि सर्वं पशुपुरोडाशवत् । इन्द्राय जुष्टं निर्वपामि । सवित्रे जुष्टं० वरुणाय जुष्टं० इन्द्र हव्यꣳ रक्षस्व सवितर्हव्यꣳ रक्षस्व वरुण हव्यꣳ रक्षस्वेति । निर्वापवत्प्रोक्षणम् । हविष्कृता वाचं विसृज्य पशून्विशास्ति निष्टपनादि हृदयश्रपणान्तमेकस्य कृत्वाऽनन्तरमितरयोः । तत्र विशेषः—गुदं मा निर्ल्लेषीरित्यादि, अवहननादि निर्वापवदधिवपनमैन्द्रस्यैकादशोपदधाति । सवितुर्द्वादश वरुणस्य दश कपालानि मदन्तीरधिश्रयति, इत्याद्याप्यलेपं निनीय घृतागृहीत्यादि ॥ २५ ॥

तानासाद्य यथागृहीतं ग्रहानाददतेऽश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सोमानाꣳ सुराणामनु-

ब्रूहि । अश्विभ्या५ सरस्वत्या इन्द्राय सुत्राम्णे सोमान्सुरान् प्रस्थितान्प्रेष्येति संप्रेष्यति ॥ २६ ॥ वषट्कृते जुहोति ॥ २७ ॥

ऐन्द्रं तूष्णीमभिघार्य सवित्रे जुष्टं० अलंकृत्य सादनान्तमाग्नेयवत् । सावित्रवारुणयोरभिमर्शनम् । यो नः कनीय अपतामिन्द्रो भुवनान्नुदताम्, अथ ग्रहैः प्रचरन्ति जुहूविकारा अप्युपभृद्वर्जे ये गृह्णन्ति ग्रहांस्तं तं स स आदत्तेऽध्वर्युः । अश्विभ्यामित्यादि संप्रैषः ॥ २६ ॥ २७ ॥

अनुवषट्कृते हुत्वा बार्हस्पत्यस्य पशुपुरोडाशेन प्रचरिते ब्राह्मणं परिक्रीणीते ग्रहोच्छेपणस्य पातारम् । यदत्र शिष्ट५ रासिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन सोम५ राजानमिह भक्षयामीति भक्षयति ॥ २८ ॥

युव५ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः । सोमस्याग्ने वीहीत्यनुयजति ( आप० श्रौ० १९–२–१ ) इत्यापस्तम्बः । अनुवषट्कृते हुत्वा बार्हस्पत्यस्य पशुपुरोडाशेन प्रचारः । ततो हुतशेषं भक्षयति यजमानः ॥ २८ ॥

नाना हि वां देवहित५ सदोमितं मा स५सृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एष मा मा हि५सीः स्वां योनिमाविशन्निति भक्षयन्तमभिमन्त्रयते ॥ २९ ॥

यजमान इति शेषः ॥ २९ ॥

द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवन५ समेत्यन्तरा पूर्वमपरं च केतुमिति वा वल्मीकवपायामवनयेत् ॥ ३० ॥ स्वयं वा पिबेत् । सर्वहुतां वा जुहुयात् ॥ ३१ ॥

वल्मीकवपायां वाऽवनयेद्ग्रहशेषम् ॥ ३० ॥ ३१ ॥

दक्षिणाग्नौ प्रबध्य शतातृण्णा५ स्थालीं वितत्य धारयन्ति । शतातृण्णेन सौवर्णेन रुक्मेणापिहिताम् ॥ ३२ ॥

दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयन्ति । तस्या बिल उदीचीनदशं पवित्रं वितत्य यन्मे मनः परागतमिति तस्मिञ्छतमानं हिरण्यं निधाय, ( आप० श्रौ० १९-३-७ ) इत्यापस्तम्बः । दक्षिणाग्नौ खरे वा तस्मिञ्छतच्छिद्रां स्थालीं कस्मिंश्चिद्बद्ध्वा धारयति कश्चित्पुरो ( रु ) षः । तस्या बिल उदीचीनदशं पवित्रं वितत्य वालस्य यन्मे मनः परागतमिति तस्मिन्वालमये शतमानं हिरण्यं बिले निधीयते ॥ ३२ ॥

पितरो मदन्ताꣳ सोमप्रतीका व्यशेम देवहितं यदायुः । इन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुः । यन्मे मनो यमं ( नः परागतं ) यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि व्यशेम देवहितं यदायुरिति तस्यामेव सुरावशेषमवनयेत् ॥ ३३ ॥

प्राचीनावीत्यध्वर्युः सुराशेषमवनयेत् ॥ ३३ ॥

स्रवन्तीं पितृमतीभिर्याज्यानुवाक्याभिरुपतिष्ठते ॥ ३४ ॥

स्रवन्तीं स्थालीं सौमीभिः पितृमतीभिरुपतिष्ठते ॥ ३४ ॥

त्वꣳ सोम प्रचिकितो मनीषेति ॥ (ख० २६) ॥ तिसृभिः पुरस्तादध्वर्युरुत्तराभिस्तिसृभिर्दक्षिणतो ब्रह्मोत्तराभिस्तिसृभिः पश्चाद्धोतोत्तराभिस्तिसृभिरुत्तरत आग्नीध्रः कव्यवाहिनीभिस्तिसृभिः । अत्र शतातृण्णां स्थालीं निदधाति । ब्राह्मणो राजन्यो वैश्यो वा नाऽऽद्रियेत । दक्षिणमाग्निं प्रणयितुꣳ स्वयमेतꣳ सुरावशेषं व्रतयन्नासीत ॥ ३५ ॥

त्वꣳ सोम प्रचिकितः० त्वया हि नः० त्वꣳ सोम पितृभिः, इत्यध्वर्युः पुरस्तात् प्रत्यङ्मुख उपतिष्ठते स्रवन्तीं स्थालीम् । दक्षिणतो ब्रह्मोदङ्मुखो बर्हिषदः पितरः, आऽहं (अथा)पितॄन्० उपहूताः पितरः, इति तिसृभिर्होता, अग्निष्वात्ताः पितरः० ये अग्निष्वात्ता ये अनग्निष्वात्ता अभिवान्यायै दुग्धे जुषमाणा इति पश्चात्प्राङ्मुखः, यदग्ने कव्य वाहनः, त्वमग्न ईडितो जातवेदः मातली कव्यैरिति तिसृभिर्दक्षिणेऽग्नौ शतातृण्णामध्वर्युः स्थापयति राजन्यवैश्ययोर्दक्षिणाग्नेरग्निप्रणयनादिशतातृण्णाप्रतिष्ठापनान्तं न भवति॥३५॥

पशुभिः प्रचर्य पुरोडाशैः प्रचरति ॥ ३६ ॥

ततः प्रतिष्ठापने कृते बार्हस्पत्यस्य पशुपुरोडाशेन प्रचर्याध्वर्युः श्रु(शृ)त॰ हविः शमितरित्यादि सं ते मनसा मनः, अश्विभ्यां त्वा जुष्टमभिघारयामीति, एवमन्तमेकस्य कृत्वोत्तरयोरन्यत्पृषदाज्यमानीयान्यत्स्वाहोष्मण इति तन्त्रेण, क्रमेण पञ्चहोत्रोपसादयति क्रमेणाऽऽसन्नमभिमृश्य तच्चतसृषूपस्तृणीतेत्यादि उपभृति त्र्यङ्गावदानं हिरण्यमुपरिष्टादभिघारणं च न भवति । इडायामप्यवत्ते यूष्णो(तूष्णीमु)पसिच्य नाभिघारयति । वसाहोमहवणीं गृहीत्वाऽनवदानीयैः संमृश्य–अश्विभ्यां छागस्य हविषोऽनुब्रूहि एवं प्रेष्य, अर्धर्चे वसाहोमं हुत्वोद्रेकमन्यस्मिन्नवनयति वषट्कृते होमः प्रत्याक्रम्य पूर्ववत्सर्वमुपस्तरणं न त्विडापात्रस्य, सरस्वत्यै मेषस्य हविषोऽनुब्रूहि । एवं प्रेष्य । वषट्कृते होमः । अर्धर्चे वसाहोमः । उद्रेकमन्यस्मिन्नवनयति । उत्तमस्य पशोरुपस्तरणादि ऐन्द्रः प्राण इत्यन्तं प्रकृतिवत् । इन्द्रायर्षभस्य हविषोऽनुब्रूहि एवं प्रेष्य, अर्धर्चे वसाहोमः । उद्रेकान्समवनीय दिशः प्रदिश इत्यादिदिगुपस्थानान्तं वषट्कृते होमः । सांनाय्यवदनुमन्त्रणमाद्यन्तयोः । सरस्वत्या अहमिति मध्यमस्यैवं कृत्वा पुरोडाशैः प्रचरति जुह्वामुपस्तीर्येत्यादि इन्द्रायानुब्रूहि इन्द्रं यज, इन्द्रस्याहमिन्द्रियाव्यन्नादः । सवित्रेऽनुब्रूहि सवितारं यज, सवितुरहमन्नादः । वरुणायानुब्रूहि वरुणं यज वरुणस्याहमन्नादः । अथ नारिष्ठान्हुत्वा वनस्पतियागं कुर्यात् ॥ ३६ ॥

पशूनां पुरोडाशानां च समान॰ स्विष्टकृदिड॰ स॰स्थाप्य ॥ ३७ ॥

पुरोडाशेभ्यः स्विष्टकृते समवद्यति पशुस्विष्टकृते समवद्यतीति वचनात् । पशुस्विष्टकृता सहावदायाभिघार्य हिरण्यशकलं पूर्वमेव कृतं स्विष्टकृद्यागं कृत्वा वैश्वानरे हविरिदं॰ । ततः प्राशित्रं बार्हस्पत्यादारभ्य पुरोडाशेभ्य इडा, पश्विडया सहाभिघारणं, यजमानभागवर्जं पुरोडाशानां मार्जनान्तम् । अथाग्नीदौपयजानित्यादिपाशुकं कर्म प्रतिपद्यते । समुद्रं गच्छत स्वाहेत्यादि स्वरुहोमः । जाघनीभिश्च पत्नीः संयाजयन्ति । न पत्न्यञ्जलौ निनयनं नात्र योक्त्रविमोकः । उपवेषोद्वासान्तं कर्म कुर्यात् ॥ ३७ ॥

शूलैर्मासरेण पात्रैश्चावभृथमवयन्ति ॥ ३८ ॥

शूलैर्हृदयशूलैः । मासरमृजीषकल्पेन प्रतिपादयति । बल्कसं मासरमित्याचक्षते ( आप॰ श्रौ॰ १९–४–८ ) इत्यापस्तम्बः । पात्रैर्ग्रहैश्च चशब्देन शतातृण्णा स्थाल्यपि गृह्यते । वारुणमेककपालं निर्वपति । अवभृथस्य कर्म–परिस्तरणी परिभोजनी उलपराजी वेदश्च नास्ति । उपवेषं कृत्वा पुरोडाशसिद्ध्यर्थानामेव पात्राणां पुनः प्रयोगः । अग्निहोत्रहवणीवर्जमपरतः पुरोडाशसिद्ध्यर्थानि पात्राणि प्रयुज्य पवित्रकरणादि

वरुणाय जुष्टं निर्वपामीत्यादि आप्यलेपं निनीय प्रोक्षणीरासादयति आज्येनोदेहीति। चतुर्गृहीतान्याज्यानि, अयं प्राणश्च। अवभृथवद्वारुणमलंकृत्योत्तरवेद्यंसे तूष्णीमासादयति ॥ ३८ ॥

**तस्य सौमिकेनावभृथेन कल्पो व्याख्यातः ॥ ३९ ॥**

तस्यावभृथस्य सौमिकेन समानः कल्पो व्याख्यातः। तथाचाऽऽयुर्दा इत्यवभृथमवैष्यन्जुहुयात्। उरु५ हि राजा० ॥ ३९ ॥

**न साम गीयते ॥ ४० ॥**

न सामगायनं प्रस्तोतुरभावात् ॥ ४० ॥

**तूष्णीमेव परेत्य मासरमृजीषकल्पेन प्रतिपादयति ॥ ४१ ॥**

शतं ते राजन्नित्याद्यवभृथवत्। स्विष्टकृदन्तेऽनूयाजान्ते वा कृते मासरमृजीषकल्पेन प्रतिपादयति। मासरस्य तूष्णीमेव प्रोक्षणम्। मासरेण स्रुचं पूरयित्वा मन्त्रेण निमज्जनं, तूष्णीं बिन्दुस्पर्शनम् ॥ ४१ ॥

**यस्ते देव वरुण गायत्रच्छन्दाः पाशो ब्रह्मन्प्रतिष्ठितस्तं त एतेनावयजे तस्मै स्वाहेत्याश्विनपात्रं प्रविध्यति। यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतितिष्ठितस्तं त एतेनावयजे तस्मै स्वाहेति सारस्वतस्य। यस्ते देव वरुण जगतीछन्दाः पाशो विशि प्रतिष्ठितस्तं त एतेनावयजे तस्मै स्वाहेत्यैन्द्रस्य। यस्ते देव वरुणानुष्टुप्छन्दाः पाशो दिक्षु प्रतिष्ठितस्तं त एतेनावयजे तस्मै स्वाहेति शतातृण्णा५ स्थालीम्। यस्ते देव वरुण पङ्क्तिच्छन्दाः पाशो वाचि प्रतिष्ठितस्तं त एतेनावयजे तस्मै स्वाहेति शूलान् ॥ ४२ ॥**

आश्विनादिपात्राणां स्थाल्यादीनां च प्रक्षेपः। तत इमं विष्यामीति पत्नी योक्त्रविमोकं करोति। अन्ये वाससी परिधाय योक्त्रेण वाससी क्षिपति। देवीरापः० प्रागस्य तूष्णीं सुमित्रा न आप इति स्नातः पत्नी यजमानश्चान्योन्यं पृष्ठे प्रधावतः। नाञ्जलिविमोकः। दीक्षाविमोकार्थत्वात्। नोन्नेतृप्रेषणमुन्नेतुरभावान्नोन्नयनम्। अहतवाससोः परिधानं यजमानपत्न्योः। उद्वयमित्यादित्यमुपतिष्ठते ॥ ४२ ॥

तूष्णीं प्रत्यायनं क्रियते ॥ ४३ ॥

उदकान्तं प्रत्यायनं च समित्पाणयस्तूष्णीं गच्छन्ति । न तु महीयानिति, विहारदेशं गत्वा एधोऽस्येधिषीमहीत्यादि अपो अन्वचारिषमित्यन्तं सर्वे । ततो यजमानो विष्णुक्रमादिब्राह्मणभोजनान्तं निरूढपशुबन्धवत्समिदाधानान्तं कृत्वाऽऽयाडग्निरित्युपस्थाय ब्रह्मा निष्क्रामति । ततो विष्णुक्रमादिरित्येके ॥ ४३ ॥

सोमवामिनं याजयेत् । सोमातिपवितं याजयेत् । राजानमवरुद्धं ग्रामकामं प्रजाकामं पशुकामाश्रिया प्रत्यभिरूढमभिचरन्वा यजेत । सर्वेष्वभिषेकेष्वाम्नाता । तया ब्राह्मणो राजन्यो वैश्यो वा भूतिकामो यजेत भूतिकामो यजेत ॥ (ख०२७) ॥ ४४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे त्रयोदशप्रश्नेऽष्टमः पटलः ।

इति हिरण्यकेशिसूत्रे त्रयोदशः प्रश्नः ॥ १३ ॥

---

सोमातिपूतसोमवामिनोश्च सौत्रामणी भवति । शाखान्तरश्रवणात्सोमातिपूतः सोमवामी च ब्राह्मण एव । न हि क्षत्रियवैश्ययोरेतद्विशेषणमिति । ननु च सोमकार्ये तयोरपि न्यग्रोधविधानम् । तेन तदतिपवने तद्वमने च किमिति न भवति । नैतदेवम् । यदि नाम कार्यापत्त्या धर्मप्राप्तिर्भवति । न चायं सोमधर्मः । किं तर्हि तदतिपवने यागान्तरविधानमिति । अग्निचितस्तु वर्णत्रयस्यापि भवति । अग्निसंयोगविधानात् । आपस्तम्बोऽप्याह—'तया सोमवामिनं सोमातिपवितं राजानमपरुध्यमानमपरुद्धमाभिषिच्यमानमभिषिषिचानं वा याजयेत् । अभिचर्यमाणो यजेत । अभिचरन्नन्नाद्यकामः प्रजाकामः पशुकामो वा । सर्वेष्वभिषेकेष्वाम्नाता । तया ब्राह्मणो राजन्यो वैश्यो वा तेजस्कामो यजेत' ( आप० श्रौ० १९-४-१४ ) इति । त्रयाणां वर्णानां भूतिकामो यजेत । द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ४४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां त्रयोदशप्रश्नेऽष्टमः पटलः ।

त्रयोदशप्रश्नः समाप्तः ॥ १३ ॥

अथ चतुर्दशः प्रश्नः ।

विनेययुक्ताखिलसिद्धवर्यलसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥
गुरुं गणपतिं नौमि जन्मज्ञानप्रदौ तथा ।
सह गौर्या महेशानं नौमि विष्णुं च पद्मया ॥
वाजपेयराजसूयौ गतावित्थं त्रयोदशे ।
अश्वमेधं नृमेधं च व्याचष्टेऽथ चतुर्दशे ॥

ननु 'योऽश्वमेधेन यजते' (तै० सं० ५-३-१२) इत्यादौ राजपदाभावात्त्रयाणां वर्णानामेवाधिकारोऽश्वमेधस्येति प्रतीयते। तदेवं पापक्षयार्थमश्वमेधक्रतुं तदुपासनं च कुर्यात्। तथा च 'सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं वा एतेन पाप्मानं देवा तरति ब्रह्महत्यां अतरन्नपि वा एतेन ब्रह्महत्यामतरन्सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' ( तै० सं० ५-३-१२ ) इति । येयमश्वमेधानुष्ठितिः सैषा सर्वस्य पाप्मन उपपातकरूपस्य महापातकरूपस्य च प्रायश्चित्तिर्भवति । किंच सर्वस्य व्याधिजातस्य तद्धेतुपापक्षयद्वारेणाश्वमेधानुष्ठानं भेषजम् । अत एवेदानींतना देवाः पूर्वस्मिन्मनुष्यजन्मन्येतेनाश्वमेधेन गोवधादिरूपमुपपातकं ब्रह्महत्यादिरूपं महापातकं च परिहृतवन्तः । तस्मादिदानीमपि योऽश्वमेधक्रतुना यजते सोऽयमुपपातकमहापातके तरति । योऽपि च पुरुष एनमश्वमेधं शास्त्रोक्तप्रकारेण जानाति । ज्ञानं च द्विविधम्—अर्थनिर्णय उपासनं च। तत्रार्थनिर्णयः पदवाक्यप्रमाणपर्यालोचनया संपद्यते । उपासनप्रकारस्तु सप्तमकाण्डस्थान्तिमानुवाके—'यो वा अश्वस्य मेध्यस्य शिरो वेद' ( तै० सं० ७-५-२८ ) इत्यभिधास्यते । सौत्रामणीविधानसमनन्तरं श्रुतिमन्त्रपाठावसरप्राप्तोऽश्वमेधोऽनुविधीयते—

राजाऽश्वमेधेन यजेत ॥ १ ॥

राजशब्दोऽभिषेकवति क्षत्रिये वर्तत इत्युक्तं प्रदेशान्तरे । तथा च 'क्षत्रिययज्ञ उ वा एष यदश्वमेधस्तस्माद्राजन्योऽश्वमेधेन यजेत' इति । कात्यायनोऽपि सूत्रयामास— 'राजयज्ञोऽश्वमेधः' ( का० श्रौ० २०-१ ) इति । राज्ञो यज्ञो राजयज्ञः । न ब्राह्मणवैश्ययोरिति । अश्वमेध इति त्रिरात्रस्य यज्ञक्रतोर्नामधेयम् । आपस्तम्बोऽपि— 'राजा सार्वभौमोऽश्वमेधेन यजेत । अप्यसार्वभौमः' ( आप० श्रौ० २०-१ ) इति । अश्वमेध इति सर्वेष्टिपशुसोमानां समुदायनाम । राज्ञो नित्योऽश्वमेध इति ॥ १ ॥

यः कामयेत सर्वा व्युष्टीर्व्यश्नुवीयेति ॥ २ ॥

वाजसनेयिब्राह्मणमिति शेषः । स सर्वकामस्य भवति । सर्वकामावाप्तिश्च परमात्माख्यस(त)त्त्वप्राप्तिमन्तरेण न भवति । यावच्छरीरकालभाव(वि)नो हि कामा इति । तेन सर्वकामस्येति मुमुक्षोरित्येतदुक्तं भवति । तथा च ' सर्वान्ह वै कामानाप्नोति सर्वा व्युष्टीर्व्यश्नुते योऽश्वमेधेन यजते ' इति । यद्वा—सर्वे कामा ब्राह्मणस्य विजयो राज्ञः पुष्टिर्वैश्यस्य चेति त्रयाणां वर्णानामेवाश्वमेधाधिकार इति ॥ २ ॥

**पुण्यनामधेयं चित्रं देवयजनमध्यवस्यति ।**
**यस्य पुरस्ताद(दा)पः सुखाः सूपावगा-**
**हा अनपस्वरीः ॥ ३ ॥**

पुण्यं पावनं नामधेयं यस्य श्रवणमात्रेण प्रतीयते तत्पुण्यनाम स्थानं पुष्करवनं गौतमवनं वाराणसी कुरुक्षेत्रमित्यादि । यत्राऽऽपः पुरस्तात्सुखाः सुखस्पर्शा नात्युष्णा ग्रीष्मर्तौ नातिशीता हेमन्तर्तौ । सूपावगाहाः सुतीर्थाः । अनपस्वरीः, अपेत्य न पः ( याः ) स्वरन्ति संभृता वहन्ति संस्कारयन्ति भूमिमम्बुभिः स्रोतोभिरशोष्या वा । एवंगुणविशेषणविशिष्टायां भूमौ चित्रानक्षत्रकालेऽध्यवस्यति देवयजनं करोतीत्यर्थः । चैत्र्यां पौर्णमास्यां प्रातरग्निहोत्रं हुत्वाऽश्वमेधेन यक्ष्ये स्वर्गं लोकमवाप्नवानीत्युक्त्वा गृह एव ब्राह्मणैः सह स्वस्तिवाचनं कृत्वा विद्युत्० । सोमप्रवाकवरणं च मधुपर्कादिभिरभ्यर्च्य तं प्रेषयेत् । स चाध्वर्य्वादिगृहान्प्रत्यागत्य-क्रमेण राजेन्द्रवर्मणोऽश्वमेधो भविष्यति तत्र भवताऽध्वर्य्वादि, एवमुद्गातृपर्यन्तानां नाहीन इत्युक्ते नाहीनोऽश्वमेध इति प्रतिवचनम् । महन्मेऽवोच इति जपानन्तरं चाध्वर्युब्रह्महोतॄन्हस्त्यश्वादिभिरपदातीनानयन्ति राजमनुष्यास्त आरूढा एव देवो देवमेत्वित्यादि राजगृहं गच्छन्ति । तत नो( उ )द्गातॄणां मधुपर्कः । ततो देवतोपस्थानं नान्दीश्राद्धम् । हस्त्यश्वादिनाऽऽग्नीध्रमानयति । तत आग्नीध्रवरणं मधुपर्कं च कुर्यात् ॥ ३ ॥

**चैत्र्यां पौर्णमास्यां सांग्रहण्येष्ट्या यजेत तस्या**
**योत्तराऽमावास्या तस्यां संज्ञान्या ॥ ४ ॥**

इमां जनतां स्वस्यापेक्षितं जनसमूहं संग्रहीष्यामीत्यभिप्रेत्य सांग्रहण्याख्ययेष्ट्या यजते । सा चेष्टिः—वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इत्यत्रोत्पन्ना । संगृह्यतेऽपेक्षितं सर्वं ययाऽसौ संग्रहणी सैव सांग्रहणी । सांग्रहण्येष्ट्या यक्ष्य इत्यादि, सांग्रहणीयस्य हविः० काम्येष्टिप्रकरणे वक्ष्यते । अनन्तरममावास्या तस्यां संज्ञान्या यक्ष्य इत्यादि । सा च कृत्स्नेष्टिर्व्याख्यास्यते । एते कामरहिते ॥ ४ ॥

वैशाख्यां पौर्णमास्यां प्राजापत्यमृषभं तूपरं बहुरूपमालभते ॥ ५ ॥

वैशाख्यां पौर्णमास्यां मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यश्वादिभिर्वाऽऽनयन्ति । ततः प्राजापत्यमृषभं तूपरं सर्ववर्णं शुक्लनीलपीतादियुक्तमालभेत । पशुबन्धेन यक्ष्ये, सर्वान्कामानवाप्नवानीत्युक्त्वा । प्रजापतये त्वा जुष्टमुपाकरोमीति । शेषं निरूढपशुबन्धवत् ॥ ५ ॥

तस्या योत्तराऽमावास्या तस्यामपदातीन् महर्त्विजः प्रतिदिशं समावहन्ति ॥ ६ ॥

अनन्तरभाविन्याममावास्यायां हस्त्यश्वादिभिर्वोद्गातुरानयनं भवति । तदाऽऽरूढ एव देवो देवमेत्वित्यादि । आगते मधुपर्कः । अथवाऽस्मिन्काले वरणं कृत्वा मधुपर्कः । तस्यामपदातीन्महर्त्विज आनयन्ति । महर्त्विजामानयनमस्मिन्नहनीत्यर्थः । उद्गातृवर्जमाग्नीध्रं पूर्वमेवेष्टेरानीतं पशौ मैत्रावरुणप्रतिप्रस्थातारौ ॥ ६ ॥

अथर्त्विगानयने विशेषमाह—

अन्वहमितरान्वाऽऽवहन्त्या सुब्रह्मण्यायाः ॥ ७ ॥

अन्वहमितरानानयन्ति हस्त्यश्वादिभिर्यथाज्येष्ठमा सुब्रह्मण्यायाः । अथवा—ये ऋत्विजः स्वस्वगृहे वृतास्तानृत्विजोऽपदातीनावहन्ति पादसंचारं निवार्य हस्त्यश्वादीनारोह्य राजपुरुषास्तानृत्विज आनयन्ति । तत्र कालावधिरा सुब्रह्मण्याया इति । यस्यां चैत्र्यां पौर्णमास्यां सांग्रहणी तत आरभ्य संवत्सरेऽतीते सत्युपरितनसंवत्सरे वैशाख्याममावास्यायां त्रैधातवीयरूपायां दीक्षणीयामारभ्य सप्तसु दिनेषु तस्यां दीक्षणीयां समाप्तायां तत्समाप्तिदिनमारभ्य दिनत्रये दीक्षां परिसमाप्य तत्रोपरितने प्रायणीयेऽहनि सुब्रह्मण्या प्रवर्तते । तत्सुब्रह्मण्यापर्यन्तमृत्विजां समावहनं कर्तव्यम् । तद्यथा—सांग्रहणीष्टिदिने तस्य तस्य गृहे गत्वा सोमप्रवाकेण वृतानध्वर्युब्रह्महोतॄनाग्नीध्रं च हस्त्यश्वादिकमारोप्येष्ट्यर्थमानयन्ति । अनन्तरभाविन्यां वैशाख्यां पौर्णमास्यां प्राजापत्यमृषभं तूपरमालब्धुं सोमप्रवाकवृतौ मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यश्वादिकमारोप्य राजपुरुषा आनयन्ति । तदनन्तरभाविन्यां वैशाख्याममावास्यायां ब्रह्मौदनार्थं चतुर्णां महर्त्विजामपेक्षितत्वादध्वर्युब्रह्महोतॄणां पूर्वमेवाऽऽनीतत्वादवशिष्टमहर्त्विजमुद्गातारं हस्त्यश्वादिभिरानयन्ति । अथाऽऽगामिसंवत्सरगतायां वैशाख्याममावास्यायां दीक्षणीयेष्टौ साम गातुं प्रस्तोतारं हस्त्यादिभिरानयन्ति । ततो दीक्षारम्भादिवसादूर्ध्वं तृतीयादिष्वहःस्वन्वहमितरानष्टावृत्विजो हस्त्यश्वादिकमारोप्याऽऽनयन्ति । ब्राह्मणाच्छंसिनमच्छावाकं नेष्टारं प्रतिहर्तारं ग्रावस्तुतं पोतारमुन्नेतारं सुब्रह्मण्यमित्येतान्सोमार्थमानयन्ति ॥ ७ ॥

यद्यप्ययमश्वमेधो द्वादशाहविकृतिद्वारा परम्परयाऽग्निष्टोमविकृतिः। अतो वपनादिकमत्र प्राप्तम्। तथाऽप्येतद्दीक्षासमीपे न त्वत्र। अतोऽप्राप्तमपूर्वं वपनादिकमत्राऽऽह—

केशश्मश्रूणि वापयते। नखानि निकृन्तते। दतो धावते। स्नाति। अहतं वासः परिधत्ते॥ ८॥

अत्राऽऽपस्तम्बोऽपि—'अमावास्यामिष्ट्वा देवयजनमभिप्रपद्यते। केशश्मश्रु वपते। नखानि निकृन्तते। दतो धावते। स्नाति। अहतं वासः परिधत्ते' (आप०श्रौ०२०–१–१३) इति। अहतमच्छिन्नं नूतनम्॥ ८॥

अधिवृक्षसूर्ये वाचं यच्छति॥ ९॥

वाचं यत्वोपवसति। सुवर्गस्य लोकस्य गुप्त्यै (तै० ब्रा० ३–८–१) इति ब्राह्मणम्। वाग्यमनपूर्वकेणोपवासेन स्वर्गलोको रक्षितो भवतीत्यर्थः॥ ९॥

वाग्यतस्यैता१ँ रात्रिमग्निहोत्रं जुहोति॥ १०॥

वाग्यतस्यैता१ँ रात्रिमग्निहोत्रं जुहोति। प्रातर्होमोऽपि रात्रौ वोपस्येत प्राक्प्रातर्होमाद्वाग्विसर्गः। अन्यकर्तृकाग्निहोत्रहोमः॥ १०॥

अरातयो रातयश्च परित आसते रातय इत्येकेषाम्॥ ११॥

ये रातयस्ते जागरयन्ति, इत्यापस्तम्बः। ये रातयः मित्राणि जागरयन्ति॥ ११॥

नमो द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमो वाचे नमो वाचस्पतये नमश्चक्षुषे नमः श्रोत्राय नमस्तपसे नमो ब्रह्मण इत्युद्यन्तमादित्यमुपतिष्ठते॥ १२॥

एकविंशत्या नमस्कारैरुद्यन्तमादित्यमुपातिष्ठते॥ १२॥

उदित आदित्ये नमोऽग्नये पृथिविक्षित इत्यग्निमुपतिष्ठते। नमो वायवेऽन्तरिक्षक्षित इति

**वायुम् । नमः सूर्याय दिविक्षित इति सूर्यम् ॥ १३ ॥**

अध्वर्युस्तिसृभिरग्निं वायुं सूर्यं यथालिङ्गमुपतिष्ठते यजमान इत्येके ॥ १३ ॥

**वैतसमिध्ममभ्याधाय हिरण्यगर्भः समवर्तताग्र इत्यष्टौ पूर्णाहुतीर्जुहोति ॥ १४ ॥ देवा देवेषु पराक्रमध्वमिति तिस्रः ॥ १५ ॥**

अथ प्राग्वंशकरणम् । एदमगन्म, एते पन्थान इति । सर्वेषां गार्हपत्यादीनां समारोपणं गतश्रीत्वात् । देवयजनमध्यवसानं प्राग्वंशं प्रविश्य आहवनीये वैतसमिध्ममभ्याधायैकादश पूर्णाहुतीर्जुहोति हिरण्यगर्भ इत्यष्टौ । देवा देवेषु पराक्रमध्वꣳ स्वाहा । प्रथमा द्वितीयेषु पराक्रमध्वꣳ स्वाहा । द्वितीयास्तृतीयेषु पराक्रमध्वꣳ स्वाहा ॥ १४ ॥ १५ ॥

**चतुष्टय्य आपो दिग्भ्यः समाभृता भवन्ति ॥ १६ ॥**

चतुष्प्रकाराश्चतुष्टय्यः । आनयति वर्ष्याः कूप्याः स्थावरा वहन्त्यश्चतसृभ्यो दिग्भ्यः समाभृता नैकस्याः । यद्वा—वर्ष्याः कूप्याः स्थावरा वहन्त्यश्चेति जलानां चातुर्विध्यम् । एतच्चाऽऽरुणकेतुके चयने स्पष्टमाम्नातम् । प्राच्यादिभ्यश्चतसृभ्यो दिग्भ्यस्ता आप आहर्तव्या न त्वेकस्या दिशः ॥ १६ ॥

आहृतास्वप्स्वोदनपाकमाह—

**तासु ब्रह्मौदनं पचति ॥ १७ ॥**

तास्वप्सु ॥ १७ ॥

**पात्र्यामुपस्तीर्य राजतꣳ रुक्मं निधाय तस्मिन्ब्रह्मौदनमुद्धृत्य प्रभूतेन सर्पिषोपसिच्योपरिष्टात्सौवर्णꣳ रुक्ममवधायाभिघार्य चतुर्भ्य आर्षेयेभ्यो महर्त्विग्भ्य उपोहति ॥ १८ ॥**

पात्र्यामुपस्तीर्य राजतमित्यादिसौवर्णꣳ रुक्ममुपरिष्टात्कृत्वा प्रयच्छति । आर्षेयग्रहणं कर्त्रन्तरे प्रतिनिधीयमानेऽसंनिहिते तदशक्तौ वाऽऽर्षेयार्थं यथा स्यादिति । औपासने श्रपणं ब्रह्मौदनस्य ॥ १८ ॥

**प्राशितवद्भ्यश्चतुरः सहस्रान्सौवर्णान्निष्कान्ददाति चतुरश्चाश्वतरीरथानेतौ च शतमानौ रुक्मौ ॥ (ख० १) ॥ १९ ॥**

प्राशितवद्भ्यश्चत्वारो महर्त्विजस्तेभ्यः सहस्रान्सौवर्णान्निष्कान्ददाति, किंच चतुरश्वाश्वतरीरथानेतौ च रुक्मौ ॥ १९ ॥

द्वादशारत्निस्त्रयोदशारत्निर्वा दार्भी मौञ्जी वा रशना । तां ब्रह्मौदनस्योच्छेषणेनानक्ति ॥ २० ॥

भुक्तस्य यदुच्छेषणं पात्रस्थं तेनानक्ति । दृढत्वात्(य) ॥ २० ॥

अश्वस्य रूपाणि समामनन्ति श्वेतः कृष्णः पिशङ्गः सारङ्गोऽरुणपिशङ्गो वा ॥ २१ ॥ यस्य वा श्वेतस्योल्बं कृष्णं तमालभते । सोमपं सोमपयोः पुत्रम् ॥ २२ ॥ यौ शिशू जातौ पुरा तृणाद्यात्सोमं पाययन्ति तौ सोमपौ भवतः । तयोर्यो जायते स सोमपयोः पुत्रः । यं शिशुं जातं पुरा तृणाद्यात् सोमं पाययन्ति स सोमपो भवति ॥ २३ ॥ मातृमन्तं पितृमन्तं पृष्ठे वहे च दान्तमध्वर्यु९ राज्याय परिददाति ॥ २४ ॥ ब्राह्मणा राजानश्चायं वोऽध्वर्यू राजा या ममापचितिरेतस्मै तां कुरुतादेष वो यच्च चिकित्सितं तद्वश्चिकित्सितमासदिति । यावद्यज्ञमध्वर्यू राजा भवति ॥ २५ ॥

अश्वस्य रूपाणि । सर्वकृष्णः सर्वश्वेतः, इत्यादीनि मातृमान् पितृमान् वोढा सोमपः सोमपयोः पुत्र एवंभूतयोरश्व आ(मश्वमा)लभ्य रशनाञ्जनोत्तरकालमध्वर्यु राज्याय परिददाति । ब्राह्मणा आस इ(दि)ति परिदानम् । आडे(ढ)कं पलम् । हे राजानश्चायमध्वर्युर्भवतां राजा या मम पूजा सा भवतामध्वर्यो भवतामेष करोति एतस्माअध्वर्यवेव भवतु । यावद्यज्ञमेष राजा भवति । अध्वर्युरुद्गातारं कृतमेवेति ( यद्वैष करोति तद्वः कृतमासदिति ) ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

देवस्य त्वेति रशनामादायेमामगृभ्णन्रशनामृतस्येत्यश्वमन्वभिवदति ॥ २६ ॥

द्वादशारत्निस्त्रयोदशारत्निर्वा रशना । आदद इत्यन्तः । तामादाय, इमामगृभ्णन्रशनामृतस्येत्यभिमन्त्र्येत्यापस्तम्बः ॥ २६ ॥

ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति ब्रह्माणमामन्त्रयते ॥ २७ ॥

अध्वर्युराह । यद्वा—ब्रह्मन्नश्वमिति मन्त्रेण ब्रह्माणमामन्त्र्य ॥ २७ ॥

देवेभ्यः प्रजापतये तेनर्ध्नुहीति प्रत्युक्तेऽभिधा असीत्यश्वमभिदधाति ॥ २८ ॥

तेन प्रसुते बध्नाति ॥ २८ ॥

अग्नेकेऽध्वर्योः परिदानमामनन्ति ॥ २९ ॥

अग्नेके शाखिनोऽध्वर्योः परिदानं परिपठन्ति ॥ २९ ॥

श्वानं चतुरक्षमानयन्ति । विष्वक्ब(ग्ब)न्धेन बद्धम् । पितुरनुजायाः पुत्रः पूर्वो नयति मातुरनुजायाः पुत्रः पश्चात्पौंश्चलेयः सैध्रकं मुसलं धारयन्पेशसा जानुं वेष्टयित्वा पश्चादन्वेत्यपोऽश्वमभ्यवगाहन्ति श्वानं च ॥ ३० ॥

अक्ष्णोरुपरिभागेऽक्षिसदृशं बिन्दुद्वयलाञ्छनं यस्य शुनः सोऽयं चतुरक्षः । तत्राश्वस्यावगाहनप्रदेशे श्वा कश्चिन्नेतव्यः । तन्नयनप्रकारमापस्तम्ब आह—'आनयन्ति श्वानं चतुरक्षं विष्वग्बन्धेन बद्धं पितुरनुजायाः पुत्रः पुरस्तान्नयति मातुरनुजायाः पुत्रः पश्चात्सैध्रकं मुसलं पौंश्चलेयः पेशसा जानुं वेष्टयित्वा पश्चादन्वेत्यापोऽश्वमभ्यवगाहन्ति श्वानं च' (आप० श्रौ०२०–२–१०) इति । यजमानस्य राज्ञः पितृष्वस्त्रीयो मातृष्वस्त्रीयश्च गच्छतः । सर्वतो बद्ध्वा नीयमानस्य शुनः पुरस्तात्पश्चाच्चोभौ गच्छतः ॥ ३० ॥

प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात्प्रत्यञ्चमश्वं प्रोक्षति । इन्द्राग्निभ्यां त्वेति दक्षिणत उदञ्चम् । वायवे त्वेति पश्चात्प्राञ्चम् । विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतो दक्षिणा । देवेभ्यस्त्वेत्यधस्तात्सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात्सर्वाभ्यस्त्वा देवताभ्य इति वा ॥ ३१ ॥

प्रजापतये त्वेत्यनेन मन्त्रेण पूर्वस्यां दिशि प्रत्यङ्मुखावस्थितोऽध्वर्युः प्रोक्षेत् । एवमुत्तरत्र ज्ञेयम् ॥ ३१ ॥

यत्र शुनोः प्रतिष्ठा तच्छ्वानं प्रसौति । पुरस्ताद्वा प्रोक्षणात् ॥ ( ख०२ ) ॥ ३२ ॥

प्रोक्षणात्पुरस्ताद्वेति विकल्पः ॥ ३२ ॥

यो अर्वन्तं जिघांसतीति पौंश्चलेयः सैध्रकेण मुसलेन शुनः प्रहन्ति ॥ ३३ ॥

सैध्रको महासारो वृक्षो यस्य वृक्षस्य मध्ये लोहसमानं सारं कृष्णारुणादिवर्णयुक्तं विद्यते तदीयं मुसलं साधनम् । बहुषु पुरुषेषु चलति न त्वेकस्मिन्भर्तरि नियता वर्तेत इति पुंश्चली दासी । तत्पुत्रः शुनो हन्ता । पौंश्चलेयो हन्ति ( तै० ब्रा० ३-८-४ ) इति ब्राह्मणम् ।। ३३ ॥

पूर्वेद्युर्वा शुनः प्रहण्यात्परो मर्त इत्यश्वस्याधस्पद उपप्लाव्य दक्षिणमुपप्लायति ॥ ३४ ॥

'तमश्वस्याधस्पदमुपास्यति परो मर्तः परः श्वेति दक्षिणोपप्लाव्य' ( आप० श्रौ० २०-३-१४ ) इत्यापस्तम्बः । भाष्यकारस्तु सूत्रान्तरमनुसृत्य यो अर्वन्तमिति मन्त्रं हनने विनियुज्य परो मर्त इति मन्त्रः पादानामधः शुनोऽक्ष्णोरुपरिभागेऽक्षिसदृशं बिन्दुद्वयलाञ्छनं तत्प्रक्षेपे विनियुक्तवान् ॥ ३४ ॥

अहं च त्वं च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति ॥ ३५ ॥

हस्तं दक्षिणहस्तं राज्ञो गृह्णीयादित्यर्थः ॥ ३५ ॥

अभिक्रत्वेन्द्रभूरधज्मन्नित्यध्वर्युर्यजमानं वाचयति ॥ ३६ ॥

स्पष्टोऽर्थः ॥ ३६ ॥

ऐषीकमुदूहमाहरन्ति । पुरस्तात्प्रत्यञ्चमभ्युदूहति वरत्रया निबद्धम् । तस्मिन्नार्द्रा वेतसशाखोपसंबद्धा भवति । तं द्वे शते दक्षिणतो द्वे उत्तरतो वितत्य धारयन्ति ॥ ३७ ॥

आहरन्त्यैषीकमुदूहम् । उदूह्यत(हति)एषा(तां)भूमिं संमार्जयति पुरस्तात् प्रत्यञ्चमिति वचनात् । वरत्रया बद्धं तस्मिन्नुदूह आर्द्रवेतसशाखोपसंबद्धा भवति । चर्मरज्जुत्रयं बद्ध्वेत्यर्थः । तमुदूहं द्वे शते जना दक्षिणतो द्वे शते उत्तरतो धारयन्त्युदूहो महान् भवति ॥ ३७ ॥

तेनैनं महर्त्विजः प्रतिदिशं समुक्षन्त्यनेनाश्वेन मेध्येनेष्ट्वाऽयः राजा वृत्रं वध्यादिति शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यञ्चम् । अनेनाश्वेन मेध्येनेष्ट्वाऽयः राजा प्रतिधृष्योऽस्त्विति शतेनाराजभिरुग्रैः सह ब्रह्मा दक्षिणत उदञ्चम् । अनेनाश्वेन मेध्येनेष्ट्वाऽयः राजाऽस्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहु-

दासपूरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै समृद्धायै राजाऽस्त्विवति शतेन सूतग्रामणिभिः सह होता पश्चात् प्राञ्चम् । अनेनाश्वेन मेध्येनेष्ट्वाऽयꣳ राजा सर्वमायुरेत्विति शतेन क्षत्तृसंग्रहीतृभिः सहोद्गातोत्तरतो दक्षिणा समुक्षितमश्वमनू(नु)दक्रमाक्रमयत्तिष्ठꣳश्चतुर्दिशं यन्त्यन्तरा स्थानमाक्रमणं च ॥ ३८ ॥

तेनोदूहेनाश्वं प्रत्यञ्चं प्रत्यङ्मुखं चत्वारि शतान्युदूहन्ति । उदकस्थमश्वं शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात् प्रत्यङ् तिष्ठन्प्रोक्षति—अनेनाश्वेनेति मन्त्रेण । इतरे तूष्णीम् । शतेन । राजभिरुग्रैरनभिषिक्तै राजपुत्रैः सह ब्रह्मा दक्षिणतोऽनेनाश्वेनेति । सूतग्रामणिभिः सह होता पश्चात् प्राङ्मुखोऽनेनाश्वेनेति । क्षत्तृसंग्रहीतृभिः सहोत्तरत उद्गाता—अनेनाश्वेनेति । अत्रैषीकमुदूहमुपप्लावयति प्रवाहयति । अनुदकदेशेऽश्वं संस्थापयति । प्रोक्षणमुदक एव नेतरस्थले । यत्र न पुरा तिष्ठति तत्स्थानमाक्रमयति । स्थानाक्रमणयोरन्तरा यत्पूर्वं प्रवाहयति । उदकादुत्तिष्ठतोऽश्वस्य पदम् ।

केचित्तु—अध्वर्युब्रह्महोत्रुद्गातारश्चत्वारस्तदीयेन समुक्षणेन प्राच्यादिभ्यश्चतसृभ्यो दिग्भ्यः सकाशादेनमश्वमभिसमीरयन्त्याभिमुख्येन तत्तद्दिशि सम्यगुत्साहयन्ति । राजपुत्रा अभिषिक्तक्षत्रियपुत्राः स्वयं राज्यार्हास्तैः शतसंख्याकैः सहितोऽयमध्वर्युः पूर्वस्यां दिशि प्रत्यङ्मुखः स्थित्वा तमश्वं प्रोक्षेत् । अनेनेत्यादिवध्यादित्यन्तः प्रोक्षणमन्त्रः । उग्राः शूराः । सूताः सारथयः । ग्रामण्यो ग्रामनेतारो ग्रामस्वामिनः । वैश्यशूद्राभ्यां मातापितृभ्यामुत्पादिताः क्षत्तारः । कोशवृद्धिकारिणः संग्रहीतारः । स्पष्टमन्यत् ॥ ३८ ॥

इदं विष्णुः प्रतिद्विष्णुर्दिवो वा विष्णवित्ति तिसृभिर्वैष्णवीभिस्तिस्र आहुतीर्जुहोति ॥ ३९ ॥

तस्मिन्पादे तिस्रो वैष्णवीर्जुहोति । जुहोतिचोदितत्वात्स्वाहाकारप्रदानम् ॥ ३९ ॥

अग्नये स्वाहा सोमाय स्वाहेत्यश्वस्तोकान्प्रस्कन्दतोऽनुमन्त्रयते ॥ ४० ॥ दशकृत्व एतमनुवाकमावर्तयति ॥ ४१ ॥

अश्वस्य स्तोकान् विप्रुषोऽनुमन्त्रयमाणः स्तोक्याः 'अग्नये स्वाहा सोमाय स्वाहा' ( तै० सं० ७-१-१६ ) इत्याद्या वा( ग्व )ष्टमा दशान्वाह ॥ ४० ॥ ४१ ॥

अनुवचनीयानां मन्त्राणां संख्यामाह—

शतकृत्व इत्येकेषाम् । सहस्रकृत्व इत्येकेषाम् ॥ ४२ ॥

अग्नये स्वाहा ( तै० सं० ७-१-१९ ) इत्यनुवाकास्त्रय आम्नाताः । तत्र मध्यमानुवाके पठिता एकादश मन्त्राः । तत्रान्तिमः ' सर्वस्मै स्वाहा ' इत्ययमुपसंहाररूपत्वादन्ते पठनीयः । ततः पूर्वे तु दश मन्त्राः शतकृत्व आवृत्ताः सहस्रं संपद्यन्ते । तत्सहस्रमनुब्रूयादित्यर्थः ॥ ४२

अथ मन्त्रसंख्यायां पक्षान्तरमाह—

**अपरिमितकृत्व इत्येकेषाम् ॥ ४३ ॥**

सहस्रसंख्यां गणयित्वा परिमितस्यानुवचनेन भोगमपि परिमितमेव प्राप्नुयात् अतो गणनामकृत्वैवापरिमिता अनुब्रूयात् ॥ ४३ ॥

**अग्नये स्वाहेन्द्राग्निभ्यामित्यश्वस्य पूर्वहोमाञ्जुहोति ॥ ४४ ॥**

गृहं प्रत्यागत्याऽऽहवनीयं विहृत्याग्नये स्वाहेति पूर्वहोमान् ॥ ४४ ॥

**विभूर्मात्रेत्यश्वमभिमन्त्र्य भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्युत्सृजति ॥ ४५ ॥**

विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानमश्वनामानि वाचयित्वा ( आप० श्रौ० २०-५-९ ) इत्यापस्तम्बः । द्वितीयदिने प्रोक्षणानन्तरं विभूर्मात्रा इत्यादीन्यश्वनामानि अश्वस्य दक्षिणे कर्णे यजमानं वाचयतीति भावः । भूरसीति पुनरश्वसमीपं गत्वाऽनेन मन्त्रेणाश्वं रशनाभ्यामुत्सृजति रशनाबन्धं विमुञ्चतीत्यर्थः ॥ ४५ ॥

**तं परिददाति देवा आशापाला इति शतं वै तल्प्या राजपुत्रा देवा आशापालाः कवचिनस्त एतं गोपायन्ति । अनिवर्तयन्तोऽनुयान्ति ॥४६॥**

देवा आशापाला इति । रत्निभ्यः परिददाति । शतं कवचिनो रक्षन्ति । अपर्यावर्तयन्तोऽश्वमनुचरन्ति । चतुःशता इतीत्येकेषाम् । शतं तल्प्या राजपुत्राः संनद्धाः संनद्धसारथिनः, शतं वैश्या विपथिनः, शतं शूद्रा वरूथिनः । तेऽश्वस्य गोप्तारो भवन्ति । अनेन मन्त्रेण तेभ्य एव राजपुत्रेभ्यो रक्षार्थमेनमश्वं परिददाति । अस्मिन्मन्त्र आशापालदेवशब्देनाभिषिक्तस्य राज्ञः पुत्रास्तल्प्या राज्ञा सहैकस्मिंस्तल्पे शयनार्हाः शतसंख्याका विवक्षिताः । यद्वा—इदं शतमश्वस्य, आशापालाश्चतसृषु दिक्षु रक्षामन्त्रोक्ता देवा इत्यर्थः । देवनशीलाः देवाः । चतुर्णां शतानामिदमुपलक्षणम् । प्राधान्यादस्योपादानम्, ' चतुःशता रक्षन्ति ' ( तै० ब्रा० ३-८-९ ) इति ब्राह्मणम् । केचित्—रत्निभ्यः परिददाति रत्निनः कवचिनश्च संनद्धा अनुवर्तिनः पृष्ठतोऽश्वमनुगच्छन्ति । शतं तल्प्याः पाणिगृहीत्याः पुत्रा राजपुत्रा उग्रा उग्रजीविनः पर्वतवा-

सिनः । वैश्या ( विपणिनः ) विपथिनः पन्थानमतिक्रम्याश्वस्य पार्श्वयोर्गच्छन्ति । ये शूद्रा वरूथिनः गृहगामिनोऽश्वस्य यवसमाहरन्ति एतेऽश्वस्य गोप्तार इति ॥ ४६ ॥

**यद्ब्राह्मणजानमुपेयुस्तान्पृच्छेयुः कियद्यूय-
मश्वमेधस्य वेत्थेति । यो न विद्यात्तं जित्वा
तस्य कुलात्खादं पानं चोपनिवपेयुः ॥ ४७॥**

यद्यद्ब्राह्मणजातमुपेयुरुपगच्छेयुस्तत्पृच्छेयुः कियद्भवानश्वमेधस्य जानाति मन्त्रं ब्राह्मणं कल्पं वेति । यदि न किंचिज्जानाति तं जित्वा तस्य गृहाद्भक्षणमश्वस्य खादं चणकादि पानीयं नयेयुः ॥ ४७ ॥

**यज्जनपदेऽन्नं तदेषामन्नम् । रथकारकुले
वसति ॥ (ख०३) ॥ ४८ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने प्रथमः पटलः ।**

यद्ब्राह्मणानां कृतान्नं तदेषामन्नम् ( आप० श्रौ० २०–५–१७ ) इत्यापस्तम्बः । न तु क्षत्रियवैश्यानामन्नमितरेषां च भक्षणं भवति । सायंकाले रथकारगृहेऽश्वस्य वासो भवति ।

आहूते सुब्रह्मण्येऽत्र समायाते शचीपतौ ।
पदातिनैव युक्तेति प्रागेवाऽऽनयनं कृतम् ॥
रशनाञ्जनतः पश्चादध्वर्यु परिदापयेत् ।
राज्याय स च राजा स्याद्यावत्संतिष्ठते क्रतुः ॥
आनयन्ति ततः श्वानं यजमानस्य पूरुषाः ।
विष्वग्बन्धेन बद्धाङ्गं चतुरक्षं विवक्षितम् ॥
अक्ष्णोरुपरि यः श्वेतबिन्दुद्वितयलाञ्छितः ।
तं समाचक्षते श्वानं चतुरक्षं विचक्षणाः ॥
सैध्रकं मुसलं हस्ते गृह्णन्दासीसुतस्ततः ।
सौवर्णावृतजानुस्तु पृष्ठतोऽश्वमनुव्रजेत् ॥
प्रवेशयन्त्यश्वमथाप्सु मुञ्चन्
श्वानं जले यत्र शुनोऽप्रतिष्ठा ।
अध्वर्युणाऽथ प्रसुतो जहीति
स पौंश्चलेयोऽस्य शुनः प्रहन्ति ॥

---

१ कियद्यूयमश्वमेधस्य ।

संनाभ(ह)वन्तः क्षितिपालपुत्राः
संनद्धसूताः शतमस्य तल्प्याः ।
गोपायितारः शतमेवमुग्राः
संनाहितास्तादृशसूतयुक्ताः ॥
वैश्याः शतं प्रान्तचराः पथः स्यु-
र्वरूथिनः स्युः शतमेव शूद्राः ।
ताः(ते) स्वैरचारं परिपालयन्तोऽ-
नावर्तयन्तोऽनुचरन्ति सर्वे ॥

पृच्छेयुः पथितेऽश्वमेधविषयं भो ब्राह्मणा वः कियत्
मन्त्रब्राह्मणकालवेदनमिति स्युर्वेत्यकिंचिद्विदः ॥
आदेयं तुरगस्य तद्भवनतः स्यात्खाद्यपेयादिकं
तेषां क्षत्रियवैश्यवेश्मत इह ग्राह्यं कृतान्नं भवेत् ॥
रथकारगृहेऽश्वस्य वसतः सायमस्य तु ॥ ४८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकालितायां प्रयोगचन्द्रिकायां चतुर्दशप्रश्ने प्रथमः पटलः ।

अथ चतुर्दशप्रश्ने द्वितीयः पटलः ।

**इह धृतिः स्वाहेत्यश्वस्य चतुर्षु पत्सु चतस्रः सायं धृतीर्जुहोति ॥ १ ॥**

अश्वस्य बन्धनस्थानीया इह धृतिः, इत्याद्या धृतयश्चतुर्षु पत्सु होतव्याः । अन्यो विप्रतिषेधादश्वेन सहाऽऽगतोऽध्वर्युः प्राकृतस्रुक्स्रुवाज्यस्थाल्याज्येन जुहोतीत्यर्थः ॥ १ ॥

**सवित्रे प्रातरष्टाकपालम् ॥ २ ॥**

निर्वपतीति शेषः । श्वोभूते तृतीयायां सवित्रे जुष्टमित्यादि नारिष्ठान्तं कर्म कुर्यात् ॥ २ ॥

**पुरस्तात्स्विष्टकृत ईङ्काराय स्वाहेङ्कृताय स्वाहेत्याहवनीयेऽश्वचरितानि जुहोति । अङ्क्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि**

॥ ३ ॥ विपरीतमेके समामनन्ति ॥ ४ ॥ हिर-
ण्यꣳ शतमानं दक्षिणा ॥ ५ ॥

पुरस्तात्स्विष्टकृत इत्युपहोमस्य कालचोदनात्, आयनाय स्वाहा प्रायणाय स्वाहे-त्युद्रावाञ्जुहोतीत्यापस्तम्बः । ईंकाराय स्वाहेत्यनुवाकेन प्रतिमन्त्रम् । अञ्ज्येताय स्वाहा कृष्णाय स्वाहा, इत्यष्टाचत्वारिंशतमेकमतिरिक्तं सर्वस्मै स्वाहेति । दक्षिणाकाले शत-मानं हिरण्यम् ॥ ३ ॥ ४ ॥ ५ ॥

तस्याꣳ सꣳस्थितायामित्यददा इत्ययजथा
इत्यपच इत्यदः साध्वकरोदिति ब्राह्मणौ
वीणागाथिनौ गायतः ॥ ६ ॥

तस्यां प्रातरिष्ट्यां ब्राह्मणतर्पणान्तायां समाप्तायामत्र ब्राह्मणो वीणागाथी गायति – इत्यददा इति नित्यशो ब्राह्मणेभ्यो भूम्यादि दान( दत्त )वान् । इत्ययजथा वाजपेयराजसूयादिभिरिष्टवान् । इत्यपचः हरिणादिमांसादि पक्ववान् । इत्यदः साध्व-करोदिति । शास्त्रमनुसृत्य सन्मार्गमकरोदित्येवं गायतौ वीणागाथिनौ ॥ ६ ॥

सवित्रे प्रसवित्रे मध्यंदिन एकादशकपालः ।
रजतꣳ शतमानं दक्षिणा ॥ ७ ॥

माध्यंदिनेष्ट्या यक्ष्य इत्यादि सवित्रे प्रसवित्रे जुष्टमित्यादि ब्राह्मणतर्प-णान्तम् ॥ ७ ॥

सवित्र आसवित्रेऽपराह्णे द्वादशकपालः । सुवर्णꣳ
शतमानं दक्षिणा ॥ ८ ॥

ब्राह्मणतर्पणान्तेयमिष्टिः ॥ ८ ॥

तस्याꣳ सꣳस्थितायां दक्षिणेन वेदिꣳ हिरण्मयं
कशिपूपस्तृणाति । तस्मिन्होतोपविशति ॥ ९ ॥

आद्यायामेवोद्रावहोमादिगानान्तं संस्थितायामापराह्णिक्यामिष्टौ दक्षिणेनाऽऽहवनी-यमित्यादि ॥ ९ ॥

दक्षिणतो ब्रह्मोद्गातारौ ॥ १० ॥

तस्मिन्नुपविशत इति शेषः ॥ १० ॥

हिरण्यकशिपोरग्रेण होतारम् ॥ ११ ॥

दक्षिणेनाऽऽहवनीयं होता हिरण्यकशिपावुपविशतीत्यापस्तम्बः ॥ ११ ॥

हिरण्मये कूर्चे फलके वाऽध्वर्युः ॥ १२ ॥

उपविशतीति शेषः । पुरस्तादध्वर्योर्हैरण्ये कूर्चे इत्यापस्तम्बः ॥ १२ ॥

दक्षिणतो वीणागणकिन उपसन्ना भवन्ति ॥ १३ ॥

उपोपविशन्ति ॥ १३ ॥

समुपविष्टेष्वध्वर्यो३ इति होताऽध्वर्युमामन्त्रयते ॥ १४ ॥

सर्वेषूपविष्टेष्वध्वर्यो३ इति होताऽध्वर्युं प्रत्यामन्त्रयते ॥ १४ ॥

पारिप्लवमाख्यास्यन् भौवन्यवं च हो३
इह होतरित्यध्वर्युः परिगृणाति ॥ १५ ॥

हो३ इ होतरिति प्रतिगरः ॥ १५ ॥

समाप्ते पारिप्लवे भौवन्यवे च वीणागणकिनः
पुराणैरिमᳲ राजाभिः ॥ (ख ० ४) ॥
साधुकृद्भिर्यजमानᳲ संगायतेति संप्रेष्यति ।
एवᳲ सदा संप्रेष्यति ॥ १६ ॥

संस्थितयोराख्यातयोः संप्रेप्यति वीणागणाकिन इति युधिष्ठिरादिभिस्तुल्यमिति कृत्वेमं संगायतेति । एवमुक्तप्रकारेण संप्रैषः ॥ १६ ॥

सायंधृतिषु हूयमानासु इत्यजिना इत्य-
युध्यथा इत्यमुᳲ संग्राममहन्नित्यहो
वीर्यमकरोदिति राजन्यो वीणागाथी
गायति ॥ १७ ॥

धृतिषु हूयमानासु राजन्यो वीणागाथी इत्यजिना मांधात्रादिभिस्तुल्य एव शत्रुं जितवान् युद्धं कृतवान् संग्रामं कृतवान् इत्यादि ॥ १७ ॥

नित्यᳲ सायᳲ सायंधृतीर्जुहोति । प्रातः
प्रातरिष्टिभिर्यजते । नित्यं पारिप्लवं
भौवन्यवं च नित्यम् । वीणागणकिनौ
ब्राह्मणराजन्यावेष्टीनामपवर्गाद्गायतोऽप-
वृत्तास्विष्टिषु ताभ्याᳲ शतमनोयुक्तं च
ददाति । शते चानोयुक्ते चेत्येकेषाम् ॥ १८ ॥

नित्यमिति वचनादहरहः सायं प्रातर्धृतिहोमादि । एवमेतानि सावित्रादीनि संवत्सरं कर्माणि क्रियन्ते (आप० श्रौ० २०–७–२ ) इत्यापस्तम्बोक्तिः । संवत्सरमित्यत्यन्तसंयोगे द्वितीया, इति वचनात्संवत्सरपर्यन्तमित्यर्थः । अपवृत्तास्विष्टिषु ताभ्यां वीणागाथिभ्यां शतमनोयुक्तं रथं च दद्यात् । शते चानोयुक्ते चेत्येके शाखिनः पठन्ति ॥ १८ ॥

**त्रिंशन्मास एष संवत्सरो भवति ॥ १९ ॥**

एवं सावित्रेष्ट्यादि गृह एवान्वहं संवत्सरं गानान्तानि क्रियन्ते। सावनाच्चान्द्रमासोक्तस्याऽऽगामिन्या वैशाखपौर्णमास्या उपरिष्टादमावास्याया ऊर्ध्वमपि सावित्रेष्ट्यादीनि। एष संवत्सरो त्रिंशन्मासात्मको वर्तत इत्यर्थः ॥ १९ ॥

**ऊर्ध्वमेकादशान्मासादाश्वत्थे व्रजेऽश्वं बध्नाति ॥ २० ॥**

संपूर्ण एकादशमासे तृतीयाप्रभृति । अश्वत्थमये गृहे काष्ठे पडीरा(टीर)शंकोर(ङ्काव)श्वं बध्नन्त्यश्वपरिचारकाः ॥ २० ॥

**तस्मै बद्धाय यवसमाहरन्ति ॥ २१ ॥**

स्पष्टोऽर्थः ॥ २१ ॥

**यद्यश्वमुपतपद्विन्देदाग्नेयमष्टाकपालं निर्वपेदिति ब्राह्मणव्याख्यातान्यश्वप्रायश्चित्तानि ॥ २२॥**

यानि ब्राह्मणव्याख्यातान्यश्वप्रायश्चित्तानि तान्यापस्तम्बोऽपि सूत्रयामास—'यद्यश्वमुपतपद्विन्देदाग्नेयमष्टाकपालं निर्वपेत्सौम्यं चरुं सावित्रमष्टाकपालम्। पौष्णं चरुं यदि श्लोणः। रौद्रं चरुं यदि महती देवताऽभि मन्येत। वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि नाऽऽगच्छेत्। यद्यधीयादग्नयेऽंहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः। यदि वडवामधीयात्प्राजापत्यं चरुं द्वादशकपालं वा। यदि नश्येद्वायव्यं चरुम्। यदि सेनाऽभीत्वरी विन्देतेन्द्राय यजत एकादशकपालम्। यदि प्रसह्य(ह्याऽऽ)नयेयुरिन्द्राय प्रसह्वन एकादशकपालम्। यद्यन्धः स्यात्सौर्यं चरुमेककपालं वा। यदि श्वभ्रेऽवपतेद्वैष्णवं चरुम्। यद्यविज्ञातेन यक्ष्मणा म्रियेत प्राजापत्यं चरुं द्वादशकपालं वा। यद्यमित्रा अश्वं विन्देरन्हन्येतास्य यज्ञः। अथान्यमानीय प्रोक्षेयुः' ( आप० श्रौ० २०-८-२ ) इति।

उपतपत्संतापकरो रोगविशेषः। श्लोणो दुष्टत्वक्। श्लौण्यस्य त्वग्दोषस्य चिकित्सकः पूषा। महती देवता रुद्रः पशूनामधिपतिः। तस्मिन्पशुष्वभिमन्यमाने सति ज्वरादिना पशुः पीड्यते। अश्वस्य पशुत्वेन रुद्रदेवत्यत्वाद्रौद्रयागेऽनुष्ठिते सति स्वकीययैव देवतया चिकित्सितत्वाद्रोगरहितो भवतीत्यर्थः। मृगस्याश्वस्याऽऽखरः सुत्ये हनि निवासस्थानं तत्राऽऽगमनाभावे वैश्वानरेष्टिं कुर्यात् वडवां गर्दभीं वा [illegible]नयेदारोहेद्वा। आज्यमेव भागो भजनीयं हविः। आज्यभागस्य पांशुयाज(ग)वत्। यदि वडवामारोहेत्स्मरेद्वा प्राजापत्यं चरुम्। यदि सर्वत्र न दृश्येत वायव्यं चरुम्। यदि से[ना]ऽभीत्वरी अभिगमनशीलो त्वरितगमनो वा, इन्द्राय यजेत। प्रसह्य बलेन नयेयु, इन्द्राय प्रसह्व-

( ह्व ,ने । यद्यन्धः सौर्यं चरुम् । यदि जीर्णे कूपे पतेद्वैष्णवश्चरुः । अविज्ञातेऽनेन रोगेणेत्यविज्ञाते प्राजापत्यश्चरुः । अमित्राः शत्रवो यद्येनमश्वं प्राप्नुयुः । अन्यं तद्रूपं वर्णं सवयसम् । मातृमन्तामित्यादिविशिष्टमानीय प्रोक्षेयुः । प्रजापतये त्वेति पृथिव्यै त्वेत्यन्तेन श्लोणत्वादौ विहितप्रायश्चित्तं कृत्वोत्सृज्यान्यमानीयेत्यादि ॥ २२ ॥

अमावास्यायामुखाꣳ संभराति ॥ २३ ॥

एतस्य संवत्सरस्योत्तरेत्यापस्तम्बः । उत्तराऽमावास्या यस्यां महर्त्विज उद्गातुरानयनं कृतं ततूप्रभृत्यागामिन्या वैशाखपौर्णमास्या उपरिष्टादमावास्यायामुखासंभरणादीनि । एष संवत्सरश्चान्द्रमानेन । तस्याममावास्यायां प्रातः पवित्रेष्टिं कृत्वा बृहस्पतिपुरोहिता इति, कृष्णाजिन उखार्थं पुरीषसंभरणं, काले सीद होतः स उ लोक इति । तिसृभिस्तिसृभी राजन्य इति वचनात् । चमस इति चतस्रो हुत्वा स्वाहाऽऽधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि हुत्वा विरामः । ध्रौवसमाप्तिः । समाप्ते वीणागाथिभ्यां दानम् । इति वैखानससूत्रम् । उखापचनादि यस्मिन्कस्मिंश्चिद्दिने । यस्मिन्कस्मिन्पर्वणि पञ्चपशुभिर्वायव्येन वा यजेत, इति ॥ २३ ॥

त्रैधातवीया दीक्षणीया ॥ २४ ॥

आगामिवसन्तेऽग्निवद्दीक्षणीया । यस्मिन्कस्मिंश्चित्पर्वणि महावीरकरणम् । आगामिवसन्ते प्रस्तोतुरानयनं हस्त्यश्वादिभिः । प्रातरग्निहोत्रꣳ हुत्वा दक्षिणावर्जं पूर्वमेव महिष्युखाकरणस्थापनान्तं करोति, । माध्यंदिने सवित्रे प्रसव इत्यादि सावने संवत्सरे समाप्ते सावित्रेष्ट्यादीति । आज्यं पशव इत्यादि आदितस्त्रैधातवीयां विधाय दीक्षणीया पत्नीसंयाजान्ता संतिष्ठते ॥ २४ ॥

दीक्षाहुतिकाले त्रीणि वैश्वदेवानि जुहोति ।
चत्वार्यौद्ग्रहणानि ॥ २५ ॥ अग्निना तपोऽन्वभवादित्यौद्ग्रहणानि । स्वाहाऽऽधिमाधीताय स्वाहेति वैश्वदेवानि । सप्ताहमन्वहमौद्ग्रहणैर्वैश्वदेवैश्च प्रचरति ॥ २६ ॥ सोऽयं दीक्षाहुतिकालो विवृद्ध उत्तरोत्तराणि वैश्वदेवानि भवन्ति ॥२७॥
सर्वाण्युत्तमेऽहनि हूयन्ते ॥ २८ ॥

उत्तरेण बहिः प्राग्वंशमित्यादि आहवनीयमुपोपविशतीत्यन्तं कृत्वाऽऽकूत्यै प्रयुजे० इति चत्वार्यौद्ग्रहणानि हुत्वा वाचा म० इति चतस्रः स्वाहाऽऽधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि हुत्वा विराम इति भाष्यकृत् । श्वोभूते प्रथमायां चत्वार्यौद्ग्रहणानि वा हुत्वा वाचाम इति केचित् । उत्तरेषु न वाचाम इत्येके । काय स्वाहा इति त्रीणि वैश्वदेवानि ।

एवं द्वितीयायां, अदित्या इति त्रीणि। तृतीयायां सरस्वत्येति त्रीणि। चतुर्थ्यां पूष्ण इति त्रीणि। पञ्चम्यां त्वाष्ट्र इति त्रीणि। षडुत्तमेऽहन्यौद्ग्रहणानि जुहोति। सर्वस्मै स्वाहेति पूर्णाहुतिमुत्तमाम्। षडहमाग्नावैष्णवेन प्रचरति। सप्तम्यामाग्निक्या त्रिहविषेति वाजसनेयकम्। ( आप० श्रौ० २०–८–११ ) इत्यापस्तम्बः। सप्तमेऽहनि दीक्षारम्भश्चेदुपेक्षायां चौद्ग्रहणानि हुत्वा वाचा म इति पञ्चमम्। अनभ्यासपक्षे मनसा म इति हुत्वाऽऽकूतिमग्निमिति षडाग्निकीः, विश्वदेवस्येति पूर्णाहुतिः। विष्णवे स्वाहेति त्रीणि वैश्वदेवानि। सर्वस्मै स्वाहेति पूर्णाहुतिः। आदिषु त्रिषु पुरस्तादन्ते च स्वाहाकार उत्तम एवान्या आग्निकीः, अहन्यहनीति केचित्। चत्वार्यौद्ग्रहणानि हुत्वा सप्ताहं यजमानस्य भोजनम्। क्षारलवणवर्जनं, व्रतस्या (स्य) प्रवृत्तत्वात्। अथवा षडहमाग्नावैष्णवेन। त्रैधातवीया सप्तमेऽहनि। आग्निक्या त्रिहविष्क [ या ] ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

भुवो देवानां कर्मणेति कृष्णाजिनमारोहन्तमृतुदीक्षाभिरभिमन्त्रयते ॥ २९ ॥

भुवो देवानामिति पथ्याऽसीति पूर्वत्रानुषज्यते। वसुभिर्देवेभिः, दीक्षयामीत्यन्तम्। पथ्याऽसि रुद्रेभिः पथ्यास्त्वाऽऽदित्येभिः पथ्याऽसि विश्वेभिः पथ्याऽस्यङ्गिरोभिः, इत्यादि। इमां धियमिति कृष्णाजिनमारोहन्तं यजमानमभिमन्त्रयते। अहं दीक्षामित्यादिर्वामित्यन्तम्। यत्प्राङ्मुष्टीकरणात्कृत्वोखाप्रवृञ्जनम्। गतश्रीत्वान्निर्मन्थ्येन पचन्तीति ॥ २९ ॥

आ ब्रह्मञ्जज्ञि बीजमिति जातमुख्यमुपातिष्ठते ॥ ३० ॥

आ ब्रह्मन्० जज्ञि बीजम्०। इत्यनुवाकाभ्यां जातमुख्यमुपतिष्ठते। प्राकृतस्य निवृत्तिः ॥ ३० ॥

विसृष्टायां वाचि वीणागणकिनः ॥ (ख० ५ ) ॥
देवैरिमं यजमान५ संगायेति संप्रेष्यति ॥ ३१ ॥

विसृष्टायां वाचि यजमानो व्रतं कृणुतेत्युक्ते संप्रेष्यत्यध्वर्युः। वीणागणकिन इत्यादि, इन्द्रतुल्य इति गायन्ति ॥ ३१ ॥

वसतीवरीषु प्रह्रियमाणासु जघन्यं देवैः संप्रेष्याति। प्रजापतिना सुत्यासूदवसानीयायामन्ततः ॥ ३२ ॥

एवं सदोपवसथात् । प्रजापतिना सुत्यास्थमृथाद्दीयानृवन्ध्योदवमानीयाम्विति देवैरन्ततः ( आप० श्रौ० २०–८–१७ ) इत्यापस्तम्बः । एवमौपवसथात् । अग्निवद्दीक्षापरिमाणं त्र्यहपक्षमाश्रित्य प्रयोगः । केचिद्द्वादशाहवद्दीक्षोपसदौ । तदा शिशिरे दीक्षान्त इत्याद्यत्र तिस्रो दीक्षाः । षडुपसदः । यदहः प्रयायादित्यादि गार्हपत्यचितिं कृत्वा प्रायणीयं प्रचर्य वेदिमानम् ॥ ३२ ॥

द्विस्तावा वेदिः । एकविंशोऽग्निः ॥ ३३ ॥

वेदिकाले द्विस्तावा वेदिः । त्रिस्तावोऽग्निरेकविंशो वा ( आप० श्रौ० २०–९–१ ) इत्यापस्तम्बोऽपि सूत्रयामास । वेदिकाले द्विगुणां प्राकृत्या वेदिं करोति । द्विकरण्या वेदिमानम् । त्रिंशदङ्गुलस्य चतुरश्रस्य वाऽक्ष्णयारज्जुः । स प्रक्रमः । त्रिस्तावोऽग्निः पुरुषस्य त्रिकरणी । पुरुषस्थानीया प्रमाणं तिर्यक्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी एवं पुरुषस्य त्रिकरणी, आत्मचतुर्थांशेन चतुर्भागीया, तस्यार्धेन तत्पादाः पञ्चमभागेन पञ्चमभागीयास्तदर्धेन पादेष्टका गार्हपत्यचितेः प्रकृतिवद् धिष्णियानां च । प्रायणीयां प्रचर्य वेद्यग्नी शुल्बेन मित्वा मन्त्रेण वेदिं मित्वा प्रायणीयध्रुवादित्यादि । सोमक्रयणकाले गत्रा ते० तस्या आत्मा० भूयो वा० एकोनसहस्रं ते क्रीणानि । त्रिरात्रपर्याप्तसोमफलयोः क्रयः । आतिथ्यया प्रचर्याग्निमानादि । चितः स्थ० सं ते पयाꣳसि० इति सिकतावहनम् । आतिथ्याया ध्रुवादित्यादि तद्वाग्निवदौपवसथ्यात् । अहरहर्दैवैरिति वीणागाथिनः सायंकाले [ गायेयुः ] । यूपच्छेदनकाले– एकविंशतिं यूपान् । राज्जुदालोऽग्निष्ठः श्लेष्मातकः । तावितरौ (उभयतः) पौतुद्रवौ । बैल्वाः षट् खादिराः षट् पालाशाः षट् । एकविंशतिररत्नयः सर्वे । पालाशा उपशयपात्नीवतविशाला यूपाः प्राकृतपरिमाणा औपवसथ्येऽहनि ॥ ३३ ॥

वैश्वानरीयेण प्रचरति ॥ ३४ ॥

अग्निगुणको वैश्वानरः । ब्राह्मणतर्पणान्तयामिष्टिः ॥ ३४ ॥

अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपाल इति दशहविषꣳ सर्वपृष्ठामिष्टिं निर्वपति ॥ ३५ ॥

शाखाहरणादि प्रसूनमयं बर्हिर्वैश्वदेवपर्ववत्परिस्तरणं, पट्पञ्चाशत्कपालानि चतस्रः स्थाल्यः । निर्वापणकाले–अग्नये गायत्राय त्रिवृते राथंतराय वसन्ताय जुष्टं निर्वपामि । इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय० विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो जु० मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय हैमन्तिकाय जुष्टं० सवित्र

आतिच्छन्दसाय त्रयस्त्रिंशाय रैवताय शैशिराय जुष्टं० अदित्यै विष्णुपत्न्यै जु० अग्नये वैश्वानराय जुष्टं० अनुमत्यै जुष्टं० काय जुष्टं० इत्यादि उत्करे त्रिर्निनीय यथाभागमित्यादि कपालान्युपधाय प्रातर्दोहकर्म निष्टपनादि कामधुक्ष० मित्रावरुणाभ्यामानुष्टुभ्यामेकविंशाभ्यां वैराजाभ्यां शारदाभ्यां हविरिन्द्रियमितिनिगमाः। पिण्डं कृत्वा व्यावर्तध्वमिति त्रिः। अथवा व्यावर्तध्वमिति चर्वर्थान् व्यावर्तध्वमितिपुरोडाशान् व्यावर्तेथामिति पुरोडाशौ। अधिश्रयणादि। परिधीन्परिदधाति गन्धर्वोऽसीति नास्ति, कस्त्वेत्यस्यामिष्टौ। तेषां प्रत्याम्नायः। अस्य यज्ञस्येति त्रिष्वप्यनुषङ्गः। नात्रामुष्मा इति कायस्य नामग्रहणं कायानुब्रूहि कं यज। एककपालधर्मेण प्रचारः। मधुश्च स्वाहेत्यादि ब्राह्मणतर्पणान्तेयमिष्टिः॥ ३५॥

**समिद्दिशामिति याज्यानुवाक्या भवन्ति॥ ३६॥**

इदं याजुषं हौत्रम्॥ ३६॥

**कस्त्वा युनक्ति स त्वा युनत्विति परिधीन्युनक्ति॥ ३७॥**

गतम्॥ ३७॥

**रथवाहने हविर्धाने राज्जुदालमाग्निष्ठमेकविंशत्यरत्निं संमिनोति॥ ३८॥**

वसोर्धाराऽग्निवत्। हविर्धानप्रवर्तनकाले रथवाहने हविर्धानार्थे भवतः। रथवाहनसमर्थे अनसी। यूपसंमानकाले राज्जुदालमेकविंशत्यरत्निमाग्निष्ठं मिनोति॥ ३८॥

**पौतुद्रवावभितो भवतः॥ ३९॥**

पौतुद्रवौ देवदारुमयौ दक्षिणत उत्तरतश्च॥ ३९॥

**त्रयः खादिरा दक्षिणतस्त्रय उत्तरतः। त्रयो बैल्वाः पालाशा दक्षिणतस्त्रय उत्तरतो बैल्वानेक उत्तमान्तसमामनन्ति पालाश उपशयः॥ ४०॥**

इत्येवमादिव्यत्यासेन मानम्। तत उपशयनिधानम्। अग्नीषोमीययागः॥ ४०॥

**चतुष्टय्य आपो दिग्भ्यः समाभृता वसतीवरीर्गृह्णाति॥ ४१॥**

ततः सुब्रह्मण्यान्ते चतुष्टय्य इत्यादि देवयजन एव पशुपुरोडाशादिदेवसुवां हवींषि, याजमानस्येत्यत्र। सुब्रह्मण्यान्ते वीणावादी प्रजापतितुल्य इति गायति॥ ४१॥

**श्वोभूते प्रतायते चतुष्टोमोऽग्निष्टोमो गोतमचतुष्टोमयोः पूर्वः॥ ४२॥ पशुकाल ऐकादशिनान्पशूनुपाकरोति॥ ४२॥**

महारात्रे बुद्ध्वा गोतमचतुष्टोमयोः पूर्वम् । ध्रुवां प्रयुज्याग्निष्टोमवत्षोडशिपात्रं, हृदे त्वेत्यूहः। पर्यासमुपावहृत्य, अग्निं युनज्मीत्यादिसर्वमग्निष्टोमवत् । पशुकाले आग्नेयं सवनीयपशुमैकादशिनान्वा ॥ ४२ ॥

दाक्षिणाकाले मध्यमं प्रतिराष्ट्रस्य यदन्यद्ब्राह्मणानां दिक्षुवित्ताद्भूमेः सेनाभ्यः पुरुषेभ्यश्च । तत्त्र्यहे समशः प्रतिविभज्यान्वहं ददाति ॥ ४३ ॥

दक्षिणाकाले प्राप्ते यद्ब्राह्मणानां दिक्षु न्याय्यधनं यस्मिन्नश्व उत्सृष्टस्तत्प्रभृति संचितं धनं त्र्यहे समशोऽन्वहं ददाति ॥ ४३ ॥

प्राचीं दिशमध्वर्यवे दाक्षिणां ब्रह्मणे प्रतीचीꣳ होत्र उदीचीमुद्गात्रे ॥ ४४ ॥

प्रागादिदिग्धनमध्वर्य्वादिभ्यः क्रमाद्ददाति ॥ ४४ ॥

अपि वा प्राचीꣳ होत्रे । प्रतीचीमध्वर्यवे । एतदेवान्वायन्ति होत्रकाः ॥ ४५ ॥

अपि वेति पक्षान्तरप्रदर्शनार्थम् । अत्राप्यापस्तम्बीये विशेष.–महिषीं ब्रह्मणे ददाति। वावातां होत्रे । परिवृक्तीं(क्तिं)मुद्गात्रे । पालाकिलीमध्वर्यव इति विज्ञायते(आप०श्रौ०२० १–१०–१।२) इति । महिषीं ब्रह्मणे ददातीति वचनात्तासामपि धनं ददातीत्यर्थः । अग्निदक्षिणाऽध्वर्यवे कल्याणीरित्यादि ॥ ४५ ॥

पत्नीसंयाजान्तमहः संतिष्ठते ॥ (ख०६) ॥ ४६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने द्वितीयः पटलः ॥ २ ॥

विषाणाप्रासनान्ते यज्ञायज्ञीयेऽग्निष्टोमसाम्नि वर्तमाने चतुष्टय्य आप इत्यादि वसतीवरीर्गृह्णाति । एकया प्रस्तुतमित्यादि पत्नीसंयाजान्तमहः संतिष्ठते परिसमाप्यत इत्यर्थः ॥ ४६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां चतुर्दशप्रश्ने द्वितीयः पटलः ।

=====

अथ चतुर्दशप्रश्ने तृतीयः पटलः ।

———

अभित आहवनीयꣳ षट्त्रिꣳशतमुपतल्पान्मिन्वीत ॥ १ ॥

न सख्यविसर्गः परिहरन्ति पत्नीभ्य उदकमियन्ति, पत्नीनां पन्येजनार्थम्(?) । समिधमा-

---

१ क्रमेण ।

हुत्वाऽऽदधाति। एवमन्तमहः। तत्र विशेषः—हार्यो(रियो)जने श्वः सुत्यमिति प्रैषो बह्वृचमतात्। सूक्तवाक इत्यापस्तम्बमते। तच्छ्रुत्वाऽऽग्नीध्रश्चापि प्रेष्यति। प्रजापतिना तुल्य इति गानम्। एवं कृतेऽस्तमिते षट्त्रिंशतमुपतल्पान्मिन्वाति॥ १॥

अस्तमित आदित्ये षट्त्रिंशतमुपतल्पनारुह्यैः कस्मै स्वाहा इत्येतैरनुवाकैः खादिरैः स्रुवैः सर्वां रात्रिमन्नहोमाञ्जुहोति॥ २॥ आज्यं मधु तण्डुलान्पृथुकाँल्लाजान् करम्भान् धानाः सक्तून्मसूस्यानि प्रियङ्गुतण्डुलांश्चाऽऽज्येनान्नेनेति॥ ३॥ व्यत्यासं जुहोत्ययुज आज्येन युजोऽन्नेनान्ततो जुहोति॥ ४॥

ततो दक्षिणतश्चोत्तरतश्चोपतल्पानासाद्य षट्त्रिंशदध्वर्यव उपाकृताः खादिरैर्दीर्घदण्डैः स्रुवैः सर्वां रात्रिमन्नहोमाञ्जुहोति। मधु माक्षिकम्। तण्डुला व्रीहिभिर्निष्पन्नाः। पृथुकाश्चिपिटिकाः। लाजा व्रीहिप्रभवाः पुष्पवद्विकसिताः। करम्भा आज्यमिश्रिताः सक्तवः। धाना भर्जितयवतण्डुलाः। सक्तवो भर्जिततण्डुलपिष्टानि। मसूस्यानि, एतेनैव नाम्नोत्तरदेशे प्रसिद्धो धान्यविशेषः। येन सूपनिष्पत्तिः। प्रियङ्गुतण्डुलास्तु हेमसमानवर्णत्वात्प्रियाङ्गाः। दशद्रव्याणां मिश्रीकृत्य होमः। दशान्नानि जुहोति ( तै० ब्रा० ३—८—१४ ) इति। अत्राऽऽपस्तम्बोऽपि—चतुष्टयमेके समामनन्ति। आज्येन जुहोति लाजैर्जुहोति धानाभिर्जुहोति सक्तुभिर्जुहोति। एकस्मै स्वाहा इत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेन। आज्येनान्ततः ( आप० श्रौ० २०—१०—७ ) इति। एकस्मै स्वाहेति प्रथमतृतीयपञ्चमसप्तमनवमा अयुज आज्येन, द्वितीयचतुर्थषष्ठाष्टमदशमा युजोऽन्नेन॥ २॥ ३॥ ४॥

अत्रैके प्रयुक्तानां प्रयोक्ष्यमाणानां च मन्त्राणामुपयोगꣳ समामनन्ति॥ ५॥ उषसे स्वाहेत्युषसि जुहोति व्युष्ट्यै स्वाहेति व्युष्टायाम्। उदेष्यते स्वाहेत्युदेष्यति। उद्यते स्वाहेत्युद्यति। उदिताय स्वाहेत्युदिते। सुवर्गाय स्वाहा लोकाय स्वाहा इत्यन्ततो जुहोति। अन्नपरिशेषान्निदधाति॥६॥

एवमेताननुवाकान्पुनः पुनरभ्यासं रात्रिशेषं हुत्वा। अन्येऽभ्यासे संस्थाने वाऽनुवाकेनाऽऽज्येन। अनुवाकस्यान्ततः सर्वस्मा इत्यन्ततः। उषसे स्वाहेत्यादीनामेव

प्रयोगः। एकस्मा इत्यादि प्रागुषसे स्वाहा इत्यादि सकृद्धुत्वा पूर्ववदाज्येनात्र। न च व्यत्यासेन भवति

(अथानेन-विभूर्मात्रेतित्रयोदशान्विहीत्यन्तानि अग्नये स्वाहेतीह धृतिः स्वाहेति नव भूरसीत्युत्सर्गमन्त्राः, देवा आशापाला इति परिदानमन्त्रश्च। आधनाय स्वाहेत्युद्द्रावान्, अग्नये स्वाहेति पूर्वहोमान्, पृथिव्यै स्वाहेत्यन्तं हुत्वाऽग्नये स्वाहेति पूर्ववद्दीक्षाः। पृथिव्यै स्वाहेत्येकविंशिनीं दीक्षां भुवो देवानामित्यृतुदीक्षाश्चतुर्दश पूर्ववदनुषज्यते दीक्षयामीत्येताः पञ्च ब्रह्मणा चत्यृतमेपामिति द्वे आदिष्ट अन्ते द्वे ऋचौ चतस्रो धृतयः। अर्वाङ्यज्ञो भूतं भव्यमिति नव। आ मे ग्रहा इति तिस्रः। अग्निना तपोऽन्वभवदिति चतुर्विंशतिः स्वाहाऽऽधि दद्भ्यः अञ्ज्येताय० कृष्णाय० ओषधीभ्य० वनस्पतिभ्यो० मेषस्त्वा० कूप्याभ्यः स्वाहा० अम्भोभ्यः० नभोभ्यः० महोभ्यः०। नमो राज्ञे त्रयोदश। मयो भूर्दश। प्राणाय स्वाहा मिताय स्वाहा पृथिव्यै स्वाहा दत्वते स्वाहा यः प्राणतो य आत्मदा० इति महिमानौ। आ ब्रह्मन्ब्राह्मणो० द्वादश। जज्ञि बीजं पञ्च अग्नये समनमत्० संनमन्त्विति मन्त्रान्तः। वायवे समनमत्० अन्तरिक्षाय समनमत्० यथा वायुरन्तरिक्षेण समनमदेवं मह्यं भद्राः समनमन्। सूर्याय चन्द्रमसे वरुणाय साम्ने ब्रह्मणे राज्ञे रथाय प्रजापतये समनमदेवमिति सर्वत्रानुषङ्गः। भूताय स्वाहा भविष्यते स्वाहा इति भूतभव्यौ। यत्क्रन्दः प्रथमं० हविष्मानित्यनेनाऽऽज्येनान्नेन च व्यत्यासम्) एकस्मा इति रात्रिशेषं प्रागुषसि जातायां—उषस इति सकृत्, व्युष्ट्यै उदेष्यते, उद्यते उदिताय प्रज्ञातानन्नशेषान्निदधाति। एवं वर्तमाने प्रधानेऽध्वर्युर्वसतीवरीः परिहृत्य पञ्चदोहादिभर्मदधिलोप उक्थ्यत्वात्। एका पलाशशाखा बाह्या पक्षशाखा वेतसशाखाहरणादि सवनीयपरिस्तरणान्तम् ॥ ९॥ ६॥

प्रतायत एकविंश उक्थ्यो महानाम्नी साम ॥ ७॥

महारात्रे बुद्ध्वा प्रतायत एकविंश उक्थ्यो महानाम्नी साम गायति ॥ ७॥

अन्तरेणाऽऽग्रयणोक्थ्यौ। लौकिकं सोममभिषुत्य। सुवर्णरजताभ्यां पात्राभ्यां महिमानौ गृह्णीतो यः प्राणत इति सौवर्णेनाध्वर्युः पूर्वं गृह्णाति। य आत्मदा इति वा ॥ ८॥ हिरण्यगर्भः समवर्तताग्र इति राजतेनोत्तरं प्रतिप्रस्थाता ॥ ९॥

न त्वतिग्राह्यपात्रं ध्रुवां प्रयोज्य षोडशिपात्रं त्रिरात्रस्य मध्यमेऽहनि, इति राजतसौवर्णौ वायव्यौ। तूष्णीं परिप्लुतादि। सवनीयपशूनां पात्रासादनकाले जुह्वा सह वेतसस्य कटस्य प्रयोगः। द्विचत्वारिंशद्यूपरशना द्विरशनो यूप इति। उपशयस्य द्वे

रशने । एवं चतुश्चत्वारिंशत् । नवत्यधिकशतत्रयं पशुरशनाः । एकोनविंशत्यधिकपञ्चशतानि स्वरवः । तेषामेकः पूर्वमेवं प्रयुक्तस्तेन सह प्रयोगः । एकोनपञ्चाशादधिकपञ्चशतानि दर्भयुगलानि नवत्यधिकशतत्रयं कुम्भीः ( म्भ्यः ) । अश्वतूपरगोमृगाणां संहत्य हृदयशूलवपाश्रपणीनां कुम्भीवत्खाते तेषां चिह्नम् । हुवे त्वेत्यूहः ( त्यहः ) पर्याप्तमाहृत्याग्निं युनज्मीति शुक्रग्रहमाग्रयणं च गृहीत्वा लौकिकसोमं तूष्णीमभिषुत्य लौकिकाद्भिः संयुत्य यः प्राणत इत्युपयामान्तेन गृह्णाति । राजतेन य आत्मदा० इत्युपयामान्तेन सौवर्णेन सूर्यस्त इति पूर्वं साद्यति । चन्द्रमास्ते महिमा इत्युत्तरमुक्थ्यादि उक्थ्यवदेव परिध्यञ्जनादिपरिमार्जयति धारेत्यादिविप्रुड्ढोमान्तं कुर्यात् ॥ ८ ॥ ९ ॥

आयुर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभावसुः । दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रस इत्यश्वस्य ग्रीवासु सौवर्ण९ रुक्मं प्रतिमुञ्चते ॥ १० ॥

शोभनं निष्कमाभरणविशेषमश्वस्य ग्रीवासु कण्ठे बध्नाति ॥ १० ॥

श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारयेत्यश्वस्य वालधिमन्वारभन्ते ॥ ११ ॥

अश्वस्य पुच्छमन्वारभ्य सर्पन्ति नवागग्रेगा, हिरण्येन स्तोत्रोपाकरणम् । आस्तावदेशं गत्वा हिरण्यकशिपुमुद्गातारमपरुध्य निर्वास्योद्गाता रथमश्वं वृणीते ॥ ११ ॥

अग्निर्वृत्राणि जङ्घनदित्यश्वमन्वारभ्य बहिष्पवमान९ सर्पन्ति आऽक्रान्वाजी क्रमैरत्यक्रमीद्वाजीति वा । उद्गातारमपरुध्याश्वमुद्गीथाय वृणीते। वडवा उपरुन्धन्ति । ता यदाभि हिं करोति स उद्गीथः । यत्प्रत्यभि हिं कुर्वन्ति स उपगीथः । उदगासीदश्वो मेध्यो यज्ञिय इति जपति । शतेन शतव( प )लेन च निष्केण शतमानेन वोद्गातारमुपशिक्षे( क्ष्ये )मां देवतामुद्गायन्तीमनूद्गायेत्युद्गातारमाह ॥ १२ ॥

अग्निर्मूर्धेत्यापस्तम्बः । अश्वमन्वारभ्य- अन्वारम्भः स्पर्शः । बहिष्पवमान९ सर्पन्ति प्रसर्पकाः । अश्वं वडवासमीपे धारयन्ति । वडवां प्रति हिंकरोति चाश्वस्तदुद्गानमश्वं

---

१ पूर्व एव।

प्रति वडवा यदभि हिंकुर्वन्ति तदुपगानम् । शतेन गवां शतपलपरिमाणेन निष्केण । निष्क आभरणविशेषः । शतपलानि शतसुवर्णानि निष्कानि( णि ) याचयित्वा—उदगासीदित्युक्त्वा याचते । ततः संप्रेष्यति । इमामिति तेन शतपलेन बहिष्पवमानमुपाकरोति बर्हिषि प्रत्याम्नायः ॥ १२ ॥

नमो राज्ञे नमो वरुणायेति वेतसशाखयाऽश्वं
तूपरं गोमृगमित्यग्निष्ठ उपाकरोति ॥ १३ ॥

उपाकृतायेत्यन्तः । परिव्ययणमुपशयान्तानामग्निष्ठवर्ज्यानाम् । नव नव स्वरवः । अष्टादशार्थानां दशाधिकशतद्वयसंख्याविशिष्टाने( नामे )कोनत्रिंशच्छतानामारण्यपश्वर्थानां, तान्स्वरूनग्निष्ठ उपगूहति । अथाश्वादीनां स्नपनम् । इषे त्वेति । बर्हिरादाय उपवीरसीति वेतसशाखां, उपो देवान्प्रजापतिरित्यन्तयोः स्थाने नमो राज्ञ० मयि धेहीत्यन्तमुक्त्वा प्रजापतये त्वा जुष्टमुपाकरोमीत्यश्वम् । उपाकृताय स्वाहेति बर्हिषि निधाय, अन्यआ( दा )दाय तेनैव मन्त्रेण वेतसशाखया सह प्रजापतये त्वेत्यादि तूपरगोमृगौ । अश्वः प्रसिद्धः । तूपरः शृङ्गरहितोऽजः । गोमृग आरण्यगोः पतिः ॥ १३ ॥

प्लक्षशाखाभिरितरान्पशून् ॥ (ख० १७ )॥ आग्नेयः
कृष्णग्रीवः पुरस्ताल्ललाटे सारस्वती मेष्यधस्ता-
द्धन्वयोः (त्सक्थ्योः) सावित्रौ वाह्वोः सू( सौ)
र्ययामौ पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थ्यौ सक्थ्योः ।
शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । धात्रे पृषोदर उदरे
वायव्यः श्वेतः पुच्छ इत्यश्वे पर्यङ्ग्या( ङ्ग्या )-
न् ॥ १४ ॥

अथोपाकरणादिसंस्कारार्थं बहवोऽध्वर्यवो भवन्ति । विप्रतिषेधाद्वि( द्वे )त्युत्तरेषां त्रयाणामेकैकोऽध्वर्युः । ग्राम्यानारण्यान्पशूनुपाकरोति । अश्वे निश्चलेऽथ पर्यङ्ग्यान् । प्रोक्षणादि संस्कृते यूपस्थानीय उपाकरोति ॥ १४ ॥

रोहितो धूम्ररोहित इत्यष्टादशिनः ॥ १५ ॥

नव नव प्रतिविभज्यैन्द्राग्नदशमानेके समामनन्ति, ( आप० श्रौ० २०–११–६ ) इत्यापस्तम्बः । अष्टादशसंख्याकानां पशूनामेकैकः संघातः ॥ १५ ॥

कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः
सावित्राः सारस्वत्यो वत्सतर्यः पौष्णाः श्यामाः
पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृ-
थिव्या उक्ताः संचरा एताः ॥ १६ ॥

कृष्णो वर्णो ग्रीवायां यस्य च्छागस्यासौ कृष्णग्रीवः । बभ्रुः पिङ्गलवर्णः । श्यामाः श्यामवर्णाः । पृश्निः शुक्लबिन्दुचितश्चित्रवर्णः ॥ १६ ॥

ऐन्द्राग्नाः पृश्नयो मारुताः कृष्णा वारुणाः कायास्तूपराः । अग्नयेऽनीकवते प्रथमजानालभते । मरुद्भ्यः सांतपनेभ्यो बाष्कान्मरुद्भ्यो गृहमेधिभ्यः सावातान्मरुद्भ्यः क्रीडिभ्यः सꣳस्पृ ( सृ ) ष्टान्मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टानुक्ताः संचरा एताः ॥ १७ ॥

ऐन्द्राग्नाः प्राशृङ्गा ऐन्द्रा बहुरूपा वैश्वकर्मणाः पितृभ्यः सोमवद्भ्यो बभ्रून्धूम्राननूकाशान्पितृभ्यो बर्हिषद्भ्यो धूम्रान्बभ्रूननूकाशान्पितृभ्योऽग्निष्वात्तेभ्योऽनूकाशान्बभ्रून्धूम्रान् । रोहिताꣳस्त्रैयम्बकाः । कृष्णाः पृषन्त इत्येके । श्वेता आदित्या उक्ताः संचरा एता ऐन्द्राग्ना बहुरूपा वैश्वदेवाः प्राशृङ्गाः शुनासीरीयाः श्वेता वायव्याः श्वेताः सौर्या इति चातुर्मास्याꣳश्च पशून्समशः प्रतिविभज्येतरेषु यूपेषूपाकरोति ॥ १८ ॥

सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वंद्विनः पशून्यथासमाम्नातमग्निष्ठ एवोपाकरोति ॥ १९ ॥

अश्वे तेषां नियोजनम् । केचिदग्निष्ठ एव नियोजनं पर्यङ्ग्यानामपि आग्नेयं कृष्णग्रीवमित्यादि नासिकयो( नासिकापुटयो ) मूर्धꣳल्ललाटमिति स्मृतिमात्रमेव । प्लक्षशाखया—अग्नये त्वा जुष्टं० उत्तरेषां स्वीयं स्वीयं बर्हिषि धाऽऽदायान्यं चलं ललाटस्य पूष्णे त्वेति शिरोदेशस्येन्द्राय पूषभ्यां बाहोरग्नये त्वा सक्थ्योः, त्वष्ट्रे त्वा० पृष्ठे श्वेतपृष्ठो पशू । बृहस्पतये त्वा पार्श्वयोः सूर्याय त्वा० यमाय त्वाऽधस्तात्, धात्रे त्वा० पुच्छे ( च्छस्य ) सूर्याय त्वा० पर्यङ्ग्याश्छागाः । उत्तरा अष्टादशिनो नव नव विभज्यावशिष्टयूपेषु रोहित इत्याद्या अग्निष्ठस्योत्तरे नव । अग्निष्ठस्य दक्षिणेऽप्येवं व्यत्यासेनोपाकरणक्रमः । ऐन्द्राग्नदशम इत्यापस्तम्बेऽपि विकल्पः शाखान्तरमताम्नानाद्विकल्पस्तस्य । अस्माकं तु नित्य एकस्मिन्गणे रोहितो लोहितः पुच्छैर्निर्वापः शिवद्विर्वापः(?) धूम्ररोहितोऽस्पष्टलोहितः कर्कन्धुरोहितो बदरफलवर्णः । एतान्प्रजापतये त्वा० । बभ्रुः पाण्डुरकपिलः । अरुणबभ्रू रक्तकपिलः । शुकबभ्रुर्हरितशुकसमानवर्णः । रुद्राय

त्वा० । श्येतोऽरक्तकवर्णः । श्येताक्षोऽरक्तदृष्टिः । श्येतग्रीवः प्रसिद्धः । पितृभ्यस्त्वा० । कृष्णा वशा वन्ध्या गावस्तिस्रः । वरुणाय त्वा० श्वेतवशास्तिस्रः । सूर्याय त्वा० धूम्रललामा धूम्रपुच्छाः । तूपराः शृङ्गहीनाः । मित्राबृहस्पतिभ्यां त्वा० । पृश्निर्नानावर्णः शुक्ल इत्येके । तिरश्चीनपृश्निः, तिर्यक्प्रवृत्तपृश्निवर्णः । एतेनोर्ध्वपृश्निर्व्याख्यातः । मरुद्भ्यस्त्वा जुष्टं० । फल्गूर्लवणवर्णो बदरफलवर्णः पाटलवर्णो वा । लोहितोर्णी लोहितलोमा । बलक्षी लोहिताक्षी ( श्वेताक्षी वा ) सरस्वत्यै त्वा० । पृषती चित्रवर्णा । स्थूलपृषती अनल्पचित्रा । क्षुद्रपृषती अत्यल्पचित्रा । विश्वेभ्यो देवेभ्यस्त्वा० । श्यामास्तिस्रो वशाः । ईषद्रक्तकृष्णाः । पूष्णे त्वा० । रोहिणीर्गोरोचनवर्णाः । मित्राय त्वा० । अरुणललामाः संध्यावर्णपुण्ड्राः । इन्द्राबृहस्पतिभ्यां त्वा० । शितिबाहुः । बाहोरेकदेशे श्वेतत्वं यस्य अन्यतः प्रथमादन्यत्र बाह्वेकदेशे श्वेतत्वं यस्य सः । समन्तः सर्वतः बाह्वोः श्वेतत्वं यस्य सः । इन्द्रावायुभ्यां० । शितिरन्ध्रो रन्ध्रेषु श्वेतः । अन्यत एकस्मिन्रन्ध्रे श्वेतत्वम् । समन्तः सर्वरन्ध्रेषु श्वेतत्वम् । मित्रावरुणाभ्यां त्वा० । शुद्धवाल ईषच्छुक्लवालः सर्वशुद्धवालः स्फटिकसदृशवालः । मणिवालः शुक्लाशुक्लवालः । अश्विभ्यां त्वा० शिल्पा नानावर्णास्तिस्रो वशाः । विश्वेभ्यो देवेभ्यस्त्वा० । श्येनीः कुमुदसंनिभाः । परमेष्ठिने त्वा० । श्यामललामाः श्यामपुण्ड्राः । सोमापूषभ्यां त्वा० । उन्नत उन्नतपृष्ठः । ऋषभो युवा वामनो ह्रस्वः । इन्द्रावरुणाभ्यां त्वा० । शितिककुत् श्वेतककुत् । शितिपृष्ठ उक्तः । शितिभसत् श्वेतजघनः । इन्द्राबृहस्पतिभ्यां त्वा० । शितिपाच्छित्योष्ठः शितिभ्रुः । इन्द्राविष्णुभ्यां० । सिध्माः सिध्मलाङ्गाः पादे सिताः सिध्माख्यरोगयुता वा तल्लैस्तेओड्डुपत् । कर्णास्तिस्रस्तादृश्यो वशाः । विश्वकर्मणे त्वा० । पृषोदराश्वित्रोदरा धात्रे त्वा० । श्वेतललामाः श्वेतपुण्ड्राः, इन्द्रापूषाभ्यां त्वा० । कर्णाच्छिन्नकर्णा यमाय त्वा० । श्वितिङ्गाः श्वेताङ्गाः श्वेतभे(पा)दा वा सोमाय त्वा० । नकुला नकुलवर्णा अग्नये यविष्ठाय त्वा० । रोहिणीर्लोहितवर्णा वसुभ्यस्त्वा० । अरुणा अरुणवर्णा अदित्यै त्वा० । द्विवर्षा रुद्रेभ्यस्त्वा० । बभ्रुललामा श्वेतपुण्ड्राः कपिलाः सोमेन्द्राभ्यां त्वा० । शुण्ठा अल्पकाया विष्णवे त्वा० । अधीलोधकर्णीः कर्णोपरि प्ररूढकर्णा विष्णव उरुक्रमाय त्वा० । उरुक्रमाय विस्तीर्णपादाय । लप्सुदिनो लम्बमानपुच्छः । पञ्चाव्योऽर्धतृतीयवर्षा आदित्येभ्यस्त्वा० । त्रिवत्सास्त्रिवर्षा अङ्गिरोभ्यस्त्वा० । गौरललामा गौरपुण्ड्रा इन्द्राविष्णुभ्यां त्वा० । शितिपृष्ठा इन्द्राय राज्ञे त्वा० । शितिककुद इन्द्रायाधिराजाय त्वा० । शितिभसद इन्द्राय राज्ञे त्वा० । तुर्यौह्यः सार्धचतुर्वर्षाः साध्येभ्यस्त्वा० । षष्ठौह्यश्चतुर्वर्षा विश्वेभ्यो देवेभ्यस्त्वा० । कृष्णललामा अग्नेन्द्राभ्यां त्वा० रोहितैता लोहितश्वेता अदित्यै त्वा० । कृष्णैताः कृष्णश्वेता इन्द्राण्यै त्वा० । अरुणैना अरुणश्वेताः संध्यावर्णाः कुह्वै त्वा० । धेनवो नवप्रसूता

राकायै त्वा० । अनड्वाहः शकटवाहाः । सिनीवाल्यै त्वा० । रोहितललामा लोहितपुण्ड्रा अग्नाविष्णुभ्यां त्वा० । पिशङ्गा गोरोचनवर्णाः सोमाय त्वा० । सारङ्गाः सोमाय राज्ञे त्वा० । नभोरूपा आकाशवर्णाः पर्जन्याय त्वा० । अजा मल्हा गलस्तना इन्द्राण्यै त्वा० । मेष्य आदित्येभ्यस्त्वा० । मालङ्गा महाकाया द्यावापृथिवीभ्यां त्वा० । कृष्णललामा वरुणाय त्वा० । रोहितललामा वरुणाय राज्ञे त्वा० । अरुणललामा वरुणाय रिशादसे त्वा० । शिल्पा विश्वेभ्यो देवेभ्यस्त्वा० । पृश्नयः सर्वदेवता येषां ते सर्वदेवत्याः सर्वाय त्वा० । एवं सर्वत्र । संज्ञोपसर्जनानां प्रतिषेधान्न सर्वनामकार्यम् । सर्वाभ्यो देवताभ्यस्त्वा० । श्वेतललामा ऐन्द्रासूराभ्यां त्वा० । अत्र रोहितप्रभृति त्रयाणां त्रयाणां प्रत्येकमुपाकरणं कार्यम । अष्टादशिनो नव नव प्रतिविभज्योपाकरणं करोत्येवमारण्यानाम् । तान्यूपान्तरालेषु धारयन्ति । दश दश प्रायश आरण्यानां ये दुर्ग्राह्याः पुरुषमृगकिंनरसिंहादयस्तान्, चित्रं प्रतिकृतिं (वोल्लिख्य) वा विधायोपाकरणाद्युत्सर्जनान्तं कुर्यात्, इति कठसूत्रम् । यूपान्तरालेष्वारण्यान्पशून्बन्धनोपायेन बध्नीयुरिति मानवकल्पसूत्रम् । नाडीषु मशकान् । करण्डेषु सर्पान् । पञ्जरेषु मृगव्याघ्रसिंहान् । कुम्भेषु मकरमत्स्यमण्डूकान् । जालेषु पक्षिणः । कारेषु(रासु) हस्तिनः । नौषु चोदकानि । यथार्थानितराणि । ये पशवो येन येनोपायेन यूपान्तरालेषु तिष्ठन्ति तेन तेनोपायेन स्थापनीया इति तात्पर्यार्थः ।

अत्र येषामारण्यानां पशूनां पदानामर्था न ज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः । अष्टादशिनानुपाकृत्याऽऽरण्यानुपाकरोति--सूकरो वराहस्तं बर्हिभ्यां प्लक्षशाखया च इन्द्राय राज्ञे त्वा जुष्टमुपाकरोमीत्युक्त्वा । कृष्णः कृष्णमृगः, वरुणाय राज्ञे त्वा० । ऋश्यः शृङ्गी मृगः, यमाय राज्ञे त्वा० । गवयो गोपश्वाकृतिः सास्नादिरहितः, ऋषभाय राज्ञे त्वा० । गौरोऽत्यन्तश्वेतमृगः शार्दूलाय राज्ञे त्वा० । मर्कटो वानरः पुरुषराजाय त्वा० । वर्तिका चटकासदृशा । टिट्टिभः क्षिप्रः श्येनाय त्वा० । क्रिमिः (कीटः) गोमयवृत्तिर्गोमयपिण्डकारी नीलंगवे त्वा० । कुलुङ्गो दंष्ट्रामृगः कटुस्वनः सोमाय राज्ञे त्वा० । शिंशुमारो ग्राहो जलचरः सिन्धवे त्वा० । हस्ती गजो हिमवते त्वा० । मयुः किंनरः किंपुरुषो वा प्रजापतये त्वा० । ऊलो मण्डूकः सर्पो वा । हलीक्ष्णस्तृणहिंसकः । हरितचटक इत्यन्ये । वृषदंशो मार्जारः । एते त्रयो धातृदेवत्याः । प्रत्येकं धात्रे त्वा० । एवं सर्वत्र । शारिः शुकस्त्री पुरुषवाक् सरस्वत्यै त्वा० । शुकः श्वेतः पुरुषवाक् सरस्वते त्वा० । आरण्योऽजः शरभः । नकुलः प्रसिद्धः । शका मक्षिका, पूष्णे त्वा० । क्रौञ्चो दारुणरवः । खञ्जरीटो वा । वाचे त्वा० । झ(ज)षो जषवत्तुण्डो मकरः अपांनपात्रे त्वा० । नक्रो दीर्घतुण्डो ग्राहः । मकरः पर्य-

स्तत्तुण्डो ग्रहः कलीकयो बहुपान्मत्स्यः । अकूपाराय त्वा० । पैङ्गराजो भरद्वाजो रक्ताक्षः, वाचे त्वा० । कुर्षीतकः समुद्रकाकः । आरण्यकुक्कुटो वा । भगाय त्वा० । आर्ती कुरङ्गी । वाहसः पृष्ठे क्षुल्लकशङ्खवाही जन्तुः । दर्विका जलपक्षी । वायवे त्वा० । चक्रवाको दिवाविहारी दिग्भ्यस्त्वा० । अजगरो महोरगो बलाय त्वा० । आखुर्मूषकः । सृञ्जया कृष्णमहिषः । नीलमाक्षिका वा जीवंजीविका । शयण्डकः कृकलासः । वृक्षगोधा वा शर(ल)भो वा । मित्राय त्वा० । असितः कृष्णसर्पः, मृत्यवे त्वा० । स्वजः पललं बिलादिषु यत्स्वयमेव जायते तत्स्वेदजः श्वेतसर्पो वा नानापदो वा । मन्यवे त्वा० । कुम्भीनसः स्वापशीलः सर्पः । पुष्करसादोऽहिराजः पुष्करसर्पो वा भ्रमरो वा । लोहिताहिर्लोहितसर्पः । त्वष्ट्रे त्वा० । वाहसोऽल्पसर्पः प्रतिश्रुत्कायै त्वा० । पुरुषमृगो नरमुखमृगश्चन्द्रमसे त्वा० । गोधा स्थलगोधा । कालका सरटा । दार्वाघाटः कृष्णसारङ्गः । वनस्पतिभ्यस्त्वा० । एणी मृगी, अह्ने त्वा० । कृष्णः कृष्णमृगो रात्र्यै त्वा० । पिकः कोकिलः क्षिवङ्का रक्तमुखी वानरी नीलशीर्ष्णी कृष्णमुखी वानरी गोलाङ्गुली अर्यम्णे त्वा० । कत्कटः कर्कटो धात्रे त्वा० । बलाका प्रावृट्प्रिया सूर्याय त्वा० । ऋश्यः पुंमृगः । मयूरः शिखी, श्येनः पत्री । गन्धर्वेभ्यस्त्वा० । कपिञ्जलोऽधोनिपाती शकुनिः वसुभ्यस्त्वा० । तित्तिरिस्तित्तिभः पुरुषवाक्शकुनी रुद्रेभ्यस्त्वा० । रोहिता ऋश्यस्त्री कुण्डृणाची ग्रहगोधिका कुड्यमत्स्यः । गोलत्तिका खञ्जरीटकोऽप्सरोभ्यस्त्वा० । सृमरभ्रमरः । पृषतः श्वेतबिन्दुशबलाङ्गो मृगः । विश्वेभ्यो देवेभ्यस्त्वा० । पित्वो महापुत्तिका व्याघ्रो वा । न्यङ्कुर्गोमायुर्हरिणो वा । ऋक्ष इत्यन्ये । कशः शृगालः । अनुमत्यै त्वा० । अन्यवापः काकः अर्धमासेभ्यस्त्वा० कश्यपः, मासेभ्यस्त्वा० । क्वयिर्जलकुक्कुटः कुटरुर्मृगासिंहः उलूकविशेषो वा । दात्यौहः काको जलकुक्कुट इत्येके, सिनीवाल्यै त्वा० । शितपुटो भ्रमरो बृहस्पतये त्वा० । शका मक्षिका भूम्यै त्वा० । पान्त्रो गृहकेलिकः शुकः । कशः सूतवशा नकुलजातिरत्यल्पको वा । मान्थीलवः समाम्मुक्जलकुक्कुटो वा पितृभ्यस्त्वा० । जहका बिलवासी क्रोष्टा । शल्लीजातीया, ऋतुभ्यस्त्वा० । लोपा श्मशानशकुनिका संवत्सराय त्वा० । कपोतो रक्तपादः । उलूको दिवाभीतः । शशः शशकः, निर्ऋत्यै त्वा० । कृकवाकुः कुक्कुटः सवित्रे त्वा० । रुरुः शृङ्गत्यागी मृगः, रुद्राय त्वा० । कृकलासः सरटः । शकुनिः काकः । पिप्पका कुलालशकुनिका शरव्यायै त्वा० । हरिणः प्रसिद्धो मरुद्भ्यस्त्वा० । शार्गः आरण्यचटकः, ब्रह्मणे त्वा० । तरक्षुर्व्याघ्रविशेषः । व्याघ्राकारगर्दभभक्षक इत्येके । चित्रव्याघ्रविशेषः । कृष्णः श्वा चतुरक्षोऽक्ष्णोरुपरिबिन्दुद्वयवान् । गर्दभः खरः, इतरजनेभ्यस्त्वा जु० । धूङ्क्ष्णा श्वेतकाकः, अग्नये त्वा० । अलजो भासः । अन्तरिक्षाय त्वा० । उद्रो जलबिडालः । मद्गुः पानीयकाकः । प्लवः परिप्लवः अद्भ्यस्त्वा० । हंससाचिः क्षुद्रहंसः, अदित्यै त्वा० ।

कौर्शो कुक्कुटविशेषः, इन्द्राण्यै त्वा० । गृध्रः प्रसिद्धः । शितिकक्षी पाण्डुरोदरो गृध्रः । वार्ध्राणसः कङ्कणत्वारिकः खड्गमृगो वा दिव्येभ्यस्त्वा० । श्वाविच्छल्ली सूचीरोमो द्यावापृथिवीभ्यां त्वा० । सुपर्णो गरुडः पर्जन्याय त्वा० । हंसः प्रसिद्धः । वृकोऽरण्यश्वा । वृषदंश उक्तः । इन्द्राय त्वा० । उद्र उक्तः, अद्भ्यस्त्वा० । लोपाशः क्रोष्टा, अर्यम्णे त्वा० । सिंहनकुलव्याघ्राः प्रसिद्धाः, महेन्द्राय त्वा० । परश्वान् महिषः आरण्यांस्तान्यूपान्तरालेषु धारयन्ति । दश दश प्रागारण्यानां दुर्ग्राह्याः पुरुषमृगसिंहकिंपुरुषादयस्तांश्चित्रपटे विलिख्योपाकरणाद्युत्सर्जनान्तं कुर्यादिति केचिद्व्याचक्षते । नैतद्युक्तम् । प्रतिनिधिकरणे प्रमाणाभावात्कर्महानिप्रसङ्गाच्च । सूकरो बर्हिभ्यां प्लक्षशाखया चेन्द्राय राज्ञे त्वा जुष्टमुपाकरोमीत्यादि । आरण्याः । एतेषां च शाखान्तरीयाः षट्त्रिंशद्देवतापेक्षया ( ताः ) पश्वपेक्षया चाष्टादश । कृष्णा भौमाः कृष्णवर्णास्त्रयो भूम्यै त्वा० । धूम्रवर्णास्त्रयोऽन्तरिक्षाय त्वा० । महाप्राणास्त्रयो दिवे त्वा० । शबलवर्णास्त्रयः कर्बुरवर्णास्त्रयो विद्युते त्वा० । सिध्मास्त्रयस्तारकायै त्वा० । एते पञ्चदश अजा अग्निष्ठ एव । उत्तरे चातुर्मास्याः कृष्णग्रीवास्त्रयो बभ्रवस्त्रय उपध्वस्तास्त्रयो वत्सतर्यस्तिस्रः श्यामास्त्रयः पञ्च संचाराः । एतास्त्रयः पृश्नयस्त्रयः कृष्णास्त्रयस्तूपरास्त्रयः प्रथमजास्त्रयो वत्साः सावातास्त्रयः समन्ववत्सा बाष्कास्त्रयश्चिरकालप्रसूताः संसृष्टा वर्णो वर्णान्तरे संसृष्टा गर्भिण्यो बीभत्सवत्सा अनुसृष्टा अविच्छिन्ना मातृभ्यः पृष्ठतः । अथवा वर्षान्ते संसृष्टाः पुनश्च कृष्णग्रीवा इत्यादिपौष्णान्ताः पञ्च । एताः श्वेतास्त्रयः प्राशृङ्गास्त्रयो मुखं प्रत्यागतशृङ्गा बहुरूपास्त्रयो विश्वकर्मणे त्वा० । धूम्रानूकाशाः कतमप्रदेशे धूम्रानूकाशाः कतमप्रदेशे धूम्राः कपिलास्त्रयो धूम्रास्त्रयो बभ्रुर ( भ्रवोऽ ) नूकाशाः कतमप्रदेशेऽतिबभ्रवः । धूम्रास्त्रयो लोहितास्त्रयो नाकदेवत्यै ( तायै ) त्वा० । श्वेता आदित्याः । पुनश्च कृष्णग्रीवा इत्यादि पौष्णान्ताः पञ्च । एतास्त्रयो बहुरूपास्त्रयः प्राशृङ्गास्त्रयः श्वेतास्त्रयः श्वेताः सौर्यस्त्रय एता अग्निष्ठ एव दधाति । अथ द्व्यानैकादशिनान्प्राकृतान्—आग्नेयादिवारुणपर्यन्तानाग्निष्ठ एव । आश्वमेधिकानग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्यादि ( द्याग्निष्ठ एव रो ) लोहितराज ( लिङ्ग ) युक्तोऽधोरामावधस्तादुदरप्रदेशे कृष्णौ रजतनाभी शुक्लनाभी पिशङ्गौ गोरोचनवर्णौ कल्माषवर्णः कृष्णोऽजः । एकश्वेतपादः । पेत्वो गलितमुष्को मेषः

अथ द्वंद्विनः पशून् अनोवाहौ शकटवहनसमर्थावनड्वाहौ बलीवर्दौ । ओजोदाभ्यामष्टमधातुप्रदातृभ्यामुष्टारौ शकटवाहिनोः सहकारित्वेन पुरोगामियुगवोढारौ । सीरवाहौ लाङ्गलवाहिनाववी अविसदृशौ ह्रस्वावनड्वाहावित्यर्थः । भूमेर्धेनुद्वयम् । दिशां वडवा-

द्वयम् । पुनर्भूमेर्धेनुद्वयम् । विराड्देवतायाः पुरुषी मनुष्यस्त्रियौ । पुनर्भूमेर्धेनुद्वयम् । आरोहणवाहौ मनुष्यारोहणार्थं निर्मितं शकटं वहन्तौ बलीवर्दौ । पूर्वं तु धान्यादिवाहिशकटार्थावुक्तौ । अत्र तु राजकुमारादिविनोदार्थशकटवाहिनावित्यर्थः । वरुणस्य तु कृष्णमृगजातीये स्त्रियौ वन्ये । द्युदेवतायाग्त्वाराड्याबुच्छ्रितशृङ्गौ । ऋषभौ सेचकौ । परिमरावुभयतो मरणयुक्तौ । यस्य पशोरग्रजोऽपि मृतोऽनुजोऽपि मृतस्तादृशौ । इत्याग्निष्ठे द्वंद्विनः ।

अथ पशूनां संख्या उच्यन्ते । अश्वतूपरगोमृगास्त्रयः पर्यङ्ग्यास्त्रयोदश अष्टादशिनोऽशीत्यधिकैकशतं पञ्चदशिनः पञ्चदश चातुर्मास्येषु पञ्चत्रिंशदधिकैकशतमेकादशिन एकादश पुनश्चैकादशाश्वमेधिनो द्वंद्विनो द्वाविंशतिः । एवं नवत्यधिकशतत्रयं ग्राम्याः पशवः । आरण्या इन्द्राय राज्ञ इत्यनुवाकेषु चैकादशाधिकैकशतं वसन्ताय कपिञ्जलाम् इत्यष्टादश, एकोनत्रिंशदधिकशतमारण्याः । ग्राम्यारण्याभ्यां सहैकोनविंशत्याधिकपञ्चशतसंख्या उक्ताः पशवः । उपाकृत्य पञ्चहोमाद्यन्नावग्निरित्यन्तम् ॥ १९ ॥

**निर्मन्थ्येन प्रचरिते पत्न्योऽश्वमलंकुर्वन्ति ॥ २० ॥**

पत्न्यो महिष्याद्या अश्वमलंकुर्वन्ति ॥ २० ॥

**पर्यग्निकृतमित्येके ॥ ( ख० ८ ) ॥ २१ ॥**

अलंकरणे कालविकल्प उक्तः ॥ २१ ॥

**सहस्रं सौवर्णा मणयः । सहस्रं राजताः सहस्रं सामुद्राः शाङ्खाः सहस्रं काचा वा । वालेषु कुमार्यः काचानावयन्ति । ग्रीवास्वितरान्मणीन्प्रतिमुञ्चन्ति भूरिति सौवर्णान्महिषी, भुव इति राजतान्वावाता सुवरिति शङ्खमयान्परिवृक्तिः ॥ २२ ॥**

एकैकस्याः शतं शतं कुमार्यः सचिवा भवन्ति । अपत्यस्थानीयानां राजपुत्रीणां राजकन्यानां शतं महिष्याः । उग्राणां राजदासभूतानां शतं वावातायाः । सूतग्रामणीनां कन्यानां शतं परिवृक्त्याः । सूतानां पञ्चाशद्ग्रामणीनां दासभूतानां पञ्चाशत् । सौवर्णराजतसामुद्राणां मणीनां सहस्रं सहस्रमेकैकस्य यथाक्रमं सुवर्णमयरजतमयसमुद्रमयमौक्तिकानेतान्मणीनावयन्ति[1] वालेषु । बालशब्देन रोमाण्युच्यन्ते । वालेषु मणीन्ग्रन्थयन्ति भूरिति महिषी सौवर्णान्मुखादारभ्याऽऽ कण्ठप्रदेशात् । मणौ मन्त्रावृत्तिर्द्रव्यपृथक्त्वात् । भुव इति राजतान्वावाता प्रत्यग्वा ग्रहात्प्राक्श्रोणेः । सुवरिति परिवृक्तीति

१ स्थापयन्ति ।

शेषः । अथ सौवर्णादिग्रथितवालेषु कुमार्यः शङ्खमणीनुपग्रथ्नन्ति । यावान्देशोऽलंकृतस्तं देशमाज्येनानक्ति ॥ २२ ॥

वसवस्त्वाऽञ्जन्त्विति गौल्गुलवेनाऽऽज्येन महिष्यश्वमभ्यनक्ति । रुद्रास्त्वाऽञ्जन्त्विति कासांववे(कौसुम्भे)न वावाता । आदित्यास्त्वाऽञ्जन्त्विति मौस्तकृतेन परिवृक्तिः । विश्वे त्वा देवा वैश्वानरा अञ्जन्त्विति प्रकृतेनेतरा विपरीत एकेऽभ्यञ्जनं मणिप्रतिमोचने समामनन्ति ॥ २३ ॥

गुग्गुलपक्वसर्पिषा महिष्यनक्ति वसवस्त्वा इति । गौल्गुलवेन सुरभिरित्यापस्तम्बोक्तमन्त्रो विकल्पः । कासांववे(कौसुम्भे)न देवदारुपक्वेन वावाता रुद्रास्त्वा० इति । मौस्तकृतेन पक्वेन परिवृक्तिः, आदित्यास्त्वा० इति । स्पष्टमन्यत् ॥ २३ ॥

युञ्जन्ति ब्रध्नमित्यश्व॰ रथे युनक्ति ॥ २४ ॥

दिवीत्यन्तः । रथस्य दक्षिणपार्श्वे एवालंकृतमश्वं युनक्ति ॥ २४ ॥

यूञ्जन्त्यस्य काम्या हरी विपक्षसेतीतरावश्वौ प्राष्टिवाहिन॰ रथे युनक्ति ॥ २५ ॥

नृवाहसेत्यन्तः । तस्याश्वस्य सहायभूतावितरौ द्वावश्वौ युनक्ति ॥ २५ ॥

केतुं कृण्वन्नकेतव इति रथे ध्वजमुच्छ्रयति ॥ २६ ॥

समुषद्भिरजायथा इत्यन्तः ॥ २६ ॥

जीमूतस्येवेति कवचमध्यूहते ॥ २७ ॥

पिपर्त्वित्यन्तः ॥ २७ ॥

धन्वना गा इति धनुरभिमृशति ॥ २८ ॥

जयेमेत्यन्तः । यजमानो धनुरादत्त इत्यापस्तम्बवैखानसौ ॥ २८ ॥

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियमिति ज्याम् ॥ २९ ॥

पारयन्तीत्यन्तः ज्यामभिमृशतीत्यनुकर्षः ॥ २९ ॥

ते आचरन्ती समनेव योषेति धनुरार्त्नी ॥ ३० ॥

अमित्रानित्यन्तः । धनुष आर्त्नी संमृशतीत्यर्थः ॥ ३० ॥

बह्वीनां पिता बहुरस्य पुत्र इति पृष्ठ इषुधिं विनह्यति[1] ॥ ३१ ॥

प्रसूत इत्यन्तः । पृष्ठभागे बाणं निनह्यति बध्नाति ॥ ३१ ॥

रथे तिष्ठन्नयति वाजिन इति सारथिमभिमन्त्रयते ॥ ३२ ॥

१ क. निनह्यति

रश्मयः इत्यन्तः ॥ ३२ ॥

तीव्रान्घोषान्कृण्वते वृषपाणय इत्यश्वान् ॥ ३३ ॥

शत्रूञ्जनपव्ययन्त इत्यन्तः ॥ ३३ ॥

स्वादुषꣳसदः पितर इति पितॄन् ॥ ३४ ॥

ईशत इत्यन्तः । तिसृभिः पितॄनुपतिष्ठत इत्यापस्तम्बः ॥ ३४ ॥

सुपर्णं वस्ते मृगो अस्या दन्त इतीषुमादत्ते ॥ ३५ ॥

यꣳसन्नित्यन्तः ॥ ३५ ॥

ऋजीते परिवृङ्धि न इति परिदानं कुरुते ॥ ३६ ॥

यच्छत्वित्यन्तः । परिदानमात्माभिमर्शनम् । अपामुपस्पर्शनं स्मार्तम् ॥ ३६ ॥

आजङ्घन्ति सान्वेषामित्यश्वाजनिमादायाहिरिव भोगैः पर्येति बाहुमिति हस्तघ्नमभिमृशति ॥ ३७ ॥

विश्वत इति मन्त्रान्तः । अश्वाजनिरश्वप्रेरककशा । हस्तघ्नमभिमन्त्रयत इत्यापस्तम्बः । हन्यमानश्चर्मविशेषो हस्तघ्नः ॥ ३७ ॥

वनस्पते वीड्वङ्गो हि भूया इति पञ्चभी रथम् ॥ ३८ ॥

वीडयस्वेत्यन्तः । धनुरादानादिरथाभिमन्त्रणान्तं याजमानमेव ॥ ३८ ॥

आऽमूरज प्रत्यावर्तयेमा इति दुन्दुभीन्निह्रादयन्ति ॥ ३९ ॥

जयन्त्वित्यन्तः । दुन्दुभीन्संह्रादयन्त्यध्वर्यव इति वैखानसः ॥ ३९ ॥

ये ते पन्थानः सवितः पूर्व्यास इत्युदकान्तमभिप्रेत्याऽऽक्रान्वाजी क्रमैरत्यक्रमीद्वाजीति स्वयंस्वयं वाजिन्नपो जुषस्वेत्यपोऽश्वमभ्यवगाहन्ति ॥ ४० ॥

उदकान्तमभिप्रेत्याऽऽगत्य स्वं स्वमश्वं प्रथमं पाययत्युदकं ततोऽवगाहनम् ॥ ४० ॥

यद्वातो अपो अगमदिति प्रदक्षिणमावर्तयते । अत्रैके धूर्योजनमामनन्ति । (ख०९) ॥ यतः प्रयाति तत्रावतिष्ठते ॥ ४१ ॥

रथयुक्तोऽयमश्वो यतो रथशालायाः प्रयातः पुनः प्रादक्षिण्येनाऽऽवृत्तस्तस्यामेव रथशालायामवतिष्ठते । अत्र धूर्योजनं शाखान्तरीयम् ॥ ४१ ॥

वि ते मुञ्चामि रशना इत्यश्वं विमुञ्चति ॥ ४२ ॥

प्रत्यश्वं मन्त्रावृत्तिः ॥ ४२ ॥

द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठꣳ संमार्ष्टि ॥ ४३ ॥

अद्भिः संमृशति ॥ ४३ ॥

रथवाहनमिति सह संग्रहीत्रा रथवाहने रथमादधाति ॥ ४४ ॥

सुमनस्यमाना इत्यन्तः । रथो यस्मिञ्छकटे स्थाप्यत इति तच्छकटं रथवाहनं तास्मि-न्रथमादधाति स्थापयति ॥ ४४ ॥

आहिते संग्रहीत्राऽवरोहति ॥ ४५ ॥

आहिते स्थापितेऽश्वे ॥ ४५ ॥

यथोपास्थितमश्वमुपस्थापयन्ति ॥ ४६ ॥

स्पष्टम् ॥ ४६ ॥

लाजी३ञ्छाची३न्यशो ममाँ३ इत्यन्नपरिशेषान्पत्न्योऽ-
श्वायोपयन्ति ॥ ४७ ॥

प्रजायतः इत्यन्त । रात्रौ यैर्दशभिरन्नैर्होमाः कृतास्तदन्नशेषेषु लाजा अपि विद्यन्ते, तानयमश्वो भक्षयेत् ॥ ४७ ॥

यथोपन्युप्तमत्ति तस्मै प्रजा राष्ट्रं भवति ॥ ४८ ॥

यस्यान्नमत्ति तत्पुत्रस्य राज्यम् ॥ ४८ ॥

आऽक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं
पृथिवी सधस्थमित्यश्वमभिमन्त्रयते ॥ ४९ ॥

स्पष्टम् ॥ ४९ ॥

यथोपाकृतान्नियुञ्जन्ति ॥ ५० ॥

यूपेष्विति शेषः ॥ ५० ॥

अश्वे पर्यङ्ग्यान्यूपेषु ग्राम्यान्पशूनारोकेष्वार-
ण्यान्धारयन्ति ॥ ५१ ॥

उपाकृतस्थानेऽश्वं स्थापयित्वोपाकृत्य पञ्चहोमादि अन्नावग्निरित्यन्तम् । केचिदुपाक-रणानन्तरमन्नावग्निहोमान्तं कृत्वाऽलंकरणाद्यथोक्तमुपाकृतं नियुञ्ज्यादश्वमग्निष्ठे ॥ ५१ ॥

प्रोक्ष्याश्वमुपपाययन्ति ॥ ५२ ॥

आलब्धाय स्वाहेति प्रोक्षणं सर्वेषां पायनं च ॥ ५२ ॥

यद्युपपाय्यमानो न पिबेदग्निः पशुरासीदित्युप-
पाययेत् ॥ ५३ ॥

न पिबेदश्वः पानीयं मन्त्रेण पाययेदध्वर्युः । नैमित्तिकमिदं कर्म । अयं वेद इत्यादि-स्तुच्यमाधार्ये पशूनां सर्वेषां समञ्जनम् ॥ ५३ ॥

समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याऽऽप्रियो भवन्ति ॥ ५४ ॥

इदं याजुषं हौत्रम् । समिद्धो अञ्जन्नित्यश्वमेधस्याऽऽप्रियो मध्यमेऽहन्येव दशोष्ट्वा जुह्वा स्रुक्स्वधितीत्यादि सर्वेऽध्वर्यवः पर्यग्निकरणं तन्त्रेणैव ॥ ५४ ॥

मेषस्त्वा पचतैरवत्विति पर्यग्नौ क्रियमाणेऽपा-
व्यानि जुहोति । पर्यग्निकृतान्ग्राम्यान्पशूनाल-
भन्ते प्रारण्यानुत्सृजन्ति । पर्यग्निकृतानां द्वांद्विनां
वडवे पुरुषे वा( षी चा ) त्सृजन्ति ॥ ५५ ॥

मेषस्त्वेत्यपाव्यानि दश नित्यानां निवृत्तिः । पर्यग्निकरणे कृते प्रतिनिवृत्तिः । आग्नीध्र आरण्यानुत्सृजन्तीति वैखानसः । वडवे पुरुषे(षी) तन्त्रेण नयनमत्रापि । ये बध्यमाना० प्रमुञ्चमाना० तन्त्रेणाग्नेर्हरणम् । अश्वस्य पुरस्तादजो नीयते ॥ ९९ ॥

तार्प्ये च कृत्त्यधीवासे हिरण्यकशिपौ रुक्मे
चाश्वꣳ संज्ञपयन्ति । प्लक्षशाखास्वितरान्पशूञ्श्या-
मूलेनाश्वꣳ संज्ञपयन्ति । स्पन्द्याभिरितरान्पशून् ॥५६॥

वेतसशाखा तस्यां तेनैव तार्प्यं कृत्त्यधीवासं हिरण्यकशिपूनास्तीर्य रुक्ममुपरिष्टा-त्कृत्वाऽश्वतूपरगोमृगान्निबध्नन्ति । प्लक्षशाखास्वितरान् । श्यामूलेनाश्वं श्यामूलं कम्बलम् । स्पन्द्याभिरितरान् ग्रीवायां संवेष्ट्य रज्जुभिर्गले वेष्टनं कुर्यादित्यर्थः ॥ ९६ ॥

प्राणाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति ॥५७॥

प्राणाय स्वाहेत्यश्वमेधपठितेनानुवाकेन संज्ञप्यमाने होमः, शमितार एकादशिनीवत् । अरातीयन्तमितेररशनोदसनमध्वर्यवः ॥ ९७ ॥

संज्ञप्ते यदक्रन्दः प्रथमं जायमान इति षोडशभि-
रश्वस्तोमीयं जुहोति । षट्त्रिꣳशता वा । क्रमैरत्य-
क्रमीद्वाजीति षट्त्रिꣳशी यामेन साम्ना प्रस्तोताऽ-
नुगायति ॥ (ख० १०) ॥ ५८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने तृतीयः पटलः ॥

यामेन साम्ना नाके सुपर्णम्, इत्यनेन साम्ना प्रस्तोताऽश्वमुपतिष्ठते ॥ ९८ ॥

अश्वस्तूपरगोमृगौ तुरगपर्यङ्ग्या दश व्युत्तराः[1]
सन्त्यष्टादशिनस्त्वशीतिशतकं द्वाविंशतिर्द्वैद्विनः ॥
सन्त्येकादशिनस्तथा प्रकृतिजैर्द्वाविंशतिर्वैकृता-
श्चातुर्मास्यपशूनवेहि सशतां पञ्चाधिकां त्रिंशतम् ॥
भूयः पञ्चदशैव पञ्चदशिनो ग्राम्या नवत्युत्तरान्
आरण्यांस्त्रिशतान्यथर्तु पशवस्त्वष्टादशारण्यजाः ॥

---

१ क. व्युत्तरः । २ क. हिंनान् ।

ज्ञेयाः सूकरपूर्वकास्तु दशतोऽत्रैकादशैते शतं
सर्वे पञ्चशती भवन्ति पशवोऽथैकोनिता त्रिंशतिः ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रि-
कायां चतुर्दशप्रश्ने तृतीयः पटलः ॥ ३ ॥

अथ चतुर्दशप्रश्ने चतुर्थः पटलः ।

**अम्बे अम्बाल्यम्बिक इति परिश्रिते**
**प्रतिप्रस्थाता पत्नीमुदानयति ॥ १ ॥**

ससस्त्यश्वक इत्यन्तः । अम्ब इत्यादिना महिषीमलंकृतामुदानयति हस्ते गृह्णाति रमणवदाह्वयत्येनामेतेन कर्मणेति ॥ १ ॥

**ता दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य**
**दक्षिणानूरूनाघ्नानाः सव्यानित्येकेषाम् ॥२॥**

आपो देवीः० वाक्त आप्यायतामित्यादिशमोषधीभ्य इत्यन्तः । एवं कृते पत्न्यो दक्षिणान्केशपाशानित्यादि । अत्र राजपत्न्यो दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः सिग्भिरवधून्वत्यस्त्रिः प्रदक्षिणमश्वं धुवन्त्यः परियन्ति अनेन मन्त्रेणेति भाष्यकृत् ॥ २ ॥

**गणानां त्वा गणपति हवामह इति प्रदक्षिण-**
**मश्वं धावन्त्यः परियन्ति ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

**अवन्तीः स्थावन्तीस्त्वाऽवन्त्विति परीत्य परीत्य**
**जपन्ति ॥ ४ ॥**

पत्न्यः ॥ ४ ॥

**सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य सव्यानूरूना-**
**घ्नाना दक्षिणानित्येकेषाम् । त्रिः प्रसव्यं त्रिः**
**प्रदक्षिणमन्ततो यथापुरस्तात्प्रवक्तृत्वः संपा-**
**दयन्ति ॥ ५ ॥**

अथ सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वत्यस्त्रिः प्रसव्यं परियन्ति प्रदक्षिणमन्ततो यथा प्रथमे पर्याये । तत्र मृतोपचारभूतसिग्वातस्थानीयं सिग्भि-रश्वस्याभिधूननं क्रियते ॥ ५ ॥

अम्बे अम्बाल्याम्बिक इति महिष्यश्वमुपसंविशति ॥ ६ ॥

महिष्यश्वसमीप उपविशति ॥ ६ ॥

तौ सह चतुरः पदः संप्रसारयावहा इति पदः संप्रसारयेते ( यति ) ॥ ७ ॥

पादान्संप्रसारयतः ( येत् ) ॥ ७ ॥

अहꣳ स्यां त्वꣳ स्याः सुरायाः कुलजः स्यात्त्रेमाश्चतुरः पदो व्यतिषज्य शयावहा इति पदो व्यतिषजते ॥ ८ ॥

अश्वस्य पदोऽन्योन्यं महिषी व्यतिषजति ॥ ८ ॥

सुभगे काम्पीलवासिनीति तार्प्येण वाससाऽध्वर्युर्महिषीमश्वं च प्रच्छादयति ॥ ९ ॥

गर्भधमित्यन्तः । तार्प्यं घृताक्तं वस्त्रम् । क्षौमेण वाससाऽध्वर्युर्महिषीमश्वं च प्रच्छाद्य ( आप० श्रौ० २०—१८–३ ) इत्यापस्तम्बः ॥ ९ ॥

उत्सक्थ्योर्गृदं धेहीति प्रजननं प्रजननꣳ संदधाति ॥ १० ॥

परावधीदित्यन्तः । अश्वस्य प्रजनने प्रजननं धारयेत् । प्रजननं योनिरित्युच्यते ॥ १० ॥

अम्बे अम्बाल्यम्बिक इति महिषी गर्हते ॥ ११ ॥

महिष्यश्वं कुत्सयति ॥ ११ ॥

ऊर्ध्वामेनामुच्छ्रयतादिति पत्न्योऽभिमेधन्ते ॥ १२ ॥

पुनन्निवेत्यन्तः । अभिमेधन्ते मैथुनायाऽऽह्वयन्ति ॥ १२ ॥

त्रिर्महिषी गर्हते । त्रिः पत्नयोऽभिमेधन्त उत्तरयोत्तरयर्चा ॥ १३ ॥

त्रिर्महिषी त्रिः पत्नयः । अम्बे अम्बाल्यम्बिक इति द्वितीया कुत्सा । यद्धरिणीति द्वितीयमभिमेधनम् । अम्बे अम्बाल्यम्बिक इति तृतीया । इयं यका इति तृतीयमभिमेधनम् । उत्तरे विकल्पार्थे ॥ १३ ॥

दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृचं वदन्ति ॥ १४ ॥

तारिषदित्यन्तः । सर्वाः पत्नय ऋचं जपन्ति ॥ १४ ॥

आपो हि ष्ठा मयोभुव इति तिसृभिर्मार्जयन्ते ॥ १५ ॥

च. न इत्यन्तः । शिरस्यप आनयन्ति ॥ १५ ॥

**गायत्रीत्रिष्टुबिति द्वाभ्यां महिषी हिरण्मयीभिः सूचीभिरश्वस्यासिपथान्कल्पयति ॥ १६ ॥**

शिम्यन्तु त्वेत्यन्तः । राज्ञः पत्न्यस्त्रिविधा उत्तमा मध्यमाऽधमा चेति ताश्च महिषी वावाता परिवृक्तीत्येतन्नामधेयाः । ताश्च मृतस्याश्वस्यासिना छेदनाय तत्तत्स्थानेषु रेखाः सूचीभिः कुर्युः ॥ १६ ॥

**उत्तराभ्यां द्वाभ्यां वावाता राजतीभिरुत्तराभ्यां द्वाभ्यां परिवृक्ती लोहमयीभिरायसीभिर्वा तूष्णीं तूपरगोमृगयोरसिपथान्कल्पयन्ति ॥ १७ ॥**

शिम्यन्तु त्वेत्यन्तः । यथा महिषी क्रोडात्प्राचीने मुखभागे लिखति । एवं वावाता क्रोडनाभ्योर्मध्येऽनन्तरभाविना मन्त्रद्वयेन लिखेत् । तत उत्तराभ्यां नारीस्ते० कुविदङ्ग० इति द्वाभ्यां परिवृक्ती शेषमित्यापस्तम्बः । लौहीभिः श्रोणिद्वयं समन्ततश्चन्द्रं नाम मेदः स्यान्न च वृषणौ । एवं तूपरगोमृगयोस्तूष्णीमितिवचनात् । अश्वस्य—ओषधे त्रायस्वैनमिति दर्भानन्तर्धानम् ॥ १७ ॥

**यवपिष्टैर्गोधूमपिष्टैर्वा प्रलिम्पन्ति ॥ १८ ॥**

न मृदा ॥ १८ ॥

**लोम्नामविच्छेदायेति विज्ञायते ॥ १९ ॥**

यवपिष्टलेपनेन लोम न विच्छिद्यत इति श्रुत्यन्तरे विज्ञायत इत्यर्थः ॥ १९ ॥

**कस्त्वा छ्यति कस्त्वा विशास्तीत्यश्वस्य त्वचमाछ्यति ॥ २० ॥**

तनुवे भुवदित्यन्तः । विशास्ति कस्त्वा छ्यतीत्यनुवाकेन । स्वधिते मैनमिति मन्त्रस्य प्रत्याम्नायः ॥ २० ॥

**नाश्वस्य वपा विद्यते ॥ (ख०११) ॥ २१ ॥**

नाश्वस्य वपा ॥ २१ ॥

**चन्द्रं नाम मेदः । तदुद्धरति ॥ २२ ॥**

चन्द्र इति वपास्थानीयमेदोविशेषः ॥ २२ ॥

**उद्धरतीतरेषां पशूनाम् ॥ २३ ॥**

वपामिति शेषः ॥ २३ ॥

**शृतासु वपासूत्तरत उपरिष्टादग्रेर्वैतसे कटेऽश्वस्य तूपरस्य गोमृगस्येति वपा आसादयति ॥ २४ ॥**

अश्वाभियुक्तेन सह ज्ञातव्यः । वपाधर्मेणोत्कृन्तामीत्युक्तम् । एवं तूपरगोमृगयोर्वपोद्धरणम् । न कस्त्वा० स्वधिते मैनमेवमितरेषामप्येकादशिनीवत् । शृतासु वपासु यस्त

आत्मा० अग्नेरुत्तरतश्श्रित्यामेवापरेणाऽऽहवनीयं गत्वा वेतसशाखायामश्वतूपरगोमृगाणां वपा आसादयति सुपिप्पला ओषधीः कृता इति ॥ २४ ॥

दक्षिणतः प्लक्षशाखास्वितरेषां पशूनाम् ॥ २५ ॥

वपा आसादयतीत्यनुवर्तते । दक्षिणतः प्लक्षशाखास्वितरेषां पशूनां वपा आसादयतीत्यर्थः ॥ २५ ॥

एकधा प्राजापत्यानां वपाभिः प्रचरति ॥ २६ ॥ एकधेतरेषां पशूनां प्राजापत्यानां चन्द्रस्य वपयोर्मेदसोऽनुब्रूहि । प्राजापत्यानां चन्द्रस्य वपयोर्मेदसः प्रेष्येत्यश्वस्य तूपरस्य गोमृगस्येति वपानाᳬ संप्रेष्यति वपा मेदः प्रस्थितं प्रेष्येति वा ॥ २७ ॥ विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि । विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसः प्रेष्येतीतरेषां पशूनाᳬ संप्रेष्यति । वपां मेदः प्रेष्येति वा ॥ २८ ॥

शाखाद्वयं बर्हिःप्रत्याम्नायत्वेनाऽऽसन्नाभिमर्शनमुत्तमप्रयाजादि स्वाहा देवेभ्य इति हुत्वा महिमानं जुहोति राजतेन तस्य ते द्यौरित्यनुवाकशेषेण । प्रजापतिर्देवता । हुत्वाऽभिषेकार्थमवशेषयति । जुह्वामुपस्तीर्येत्यादि प्रकृतिवत् । अश्वादीनां वपाः समवदाय संप्रेष्यति । उपांशुना वा प्रजापतयेऽश्वस्येत्यादि । जातवेदो वपाभिर्गच्छ० चन्द्रवपाभिर्गच्छ देवा० इति वा । प्रजापतेरहं० जेमानमिति वा । इतरेषां पशूनां वपा अवदाय संप्रेष्यति विश्वेभ्यो देवेभ्य इत्यादि । सर्वे पशवो वैश्वदेवार्था भवन्तीति वैखानसः ॥ २६ ॥ २७ ॥ २८ ॥

पुरस्ताद्वपानाᳬ होमात्स्वाहा देवेभ्य इति पूर्वं महिमानं जुहोति यस्ते देवेषु महिमा संबभूवेति वा हुत्वा शेषं करोति ॥ २९ ॥ उपरिष्टाद्वपानाᳬ होमाद्देवेभ्यः स्वाहेत्युत्तरं यस्ते पृथिव्यां महिमा संबभूवेति वा हुत्वा शेषं करोति ॥ ३० ॥ अत्रैव मार्जनमाम्नातम् ॥ ३१ ॥

जातवेदो वपाभिर्गच्छेत्यूहेन विश्वेषां देवानां प्राणैः० प्राजापत्याभिश्चरित्वाऽथेतरवपाभिश्चरत्यध्वर्युः । ( श्चरन्त्यध्वर्यवः ) । अथ महिमानमुत्तरं सौवर्णेन तस्य ते पृथि-

वीति होमसंपातमन्यस्मिन्पात्रे निधाय परिवप्यम् । अथ वपोद्धरणाभिघारणं स्वाहोर्ध्व-नभसमित्येकादशिनीवत् । संस्रावं हुत्वा समुत्क्रम्य चात्वाले मार्जनम् ॥ २९ ॥ ॥ ३० ॥ ३१ ॥

**अग्रेणाऽऽहवनीयमभितो यूपमुपविश्य होता ब्रह्मा च ब्रह्मोद्यं वदतो दक्षिणतो ब्रह्मोत्तरतो होता । अथ वा किꣳ स्विदासीत्पूर्वचित्तिरिति होतुः पृष्ठानि प्रज्ञातानि ब्राह्मणे । ब्रह्मणो विजयꣳ संज्ञपयन्ति ॥ ३२ ॥**

यद्यग्निष्ठयूपमभितो ब्रह्मोद्याय दक्षिणतो ब्रह्मा, उत्तरतो होता किꣳ स्विदासी० कः स्वित् पृच्छामीति होता पृच्छति द्यौरासीत्० सूर्य एकाकी चरति वेदिमाहुरिति प्रति-वचनं ब्रह्मणः किꣳ स्विदिति प्रश्नस्य द्यौरिति परिहारः, कः स्विदिति प्रश्नस्य सूर्य इति परिहारः पृच्छामि त्वेत्यस्य वेदिमाहुरिति परिहारः । प्रश्नवाक्यानि ब्रह्मणो विजयं प्रकाशयन्ति, उदञ्चं होतारं प्रतीत्यर्थः । एवं कृत्वा प्रातःसवनाय संप्रसर्पतीत्यादिशेषं प्रकृतिवत् । संतिष्ठते प्रातःसवनम् ॥ ३२ ॥

**प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्यास्थि लोम च तिर्यगसंभिन्दन्तः सूकरविशसं विशसतेति संप्रै-षवत्कुर्वन्ति ॥ ३३ ॥**

अथ माध्यंदिनसवनमुच्यते । माध्यंदिने पशुपुरोडाशानां विकल्पः । सवनीयानां हविष्कृता वाचं विसृज्य गुदं मा निर्लेषीः इति कृत्वा प्रजापतयेऽश्वस्य शकृदादीनां यथा सूकरो न विनश्यति त्वक्कर्मलोमभिः सहाश्वस्य कण्ठं छित्वा व्यङ्गेषु बध्नाति । पशूनां ( पशु ) व्यङ्गेषु लोहितेन शृतेन स्विष्टकृतं यजतीति भरद्वाज-वचनात् ॥ ३३ ॥

**अश्वस्य लोहितं स्विष्टकृदर्थं निदधाति ॥ ३४ ॥**

नाश्वस्य गुदो विद्यते । कण्ठं गुदस्थाने तूपरगोमृगयोर्गुदावेव । पादचतुष्टयं सत्वक् छिद्यते शकृदादीनामाधारभूतं मांसं प्रक्षाल्य चिह्नं कृत्वा निदधाति । कुम्भ्यामवदाय हृदयवर्ज्यानि सर्वाण्यङ्गानि पच्यन्ते । शूले प्रणीय हृदयम् । अश्वस्य लोहितं रक्तं स्विष्टकृदर्थमिति ॥ ३४ ॥

**गोमृगकण्ठमश्वशफं च माहेन्द्रस्य स्तोत्रं प्रत्य-भिषिञ्चति ॥ ३५ ॥**

गोमृगकण्ठादिभिर्होमः । वषट्काराहुतिपक्षे शामित्रे श्रपणम् । अस्मिन्पक्षे गोमृग-

कण्ठादिषु जुहूधर्मा अश्वशफधर्मा एकं छिद्यते । गोमृगकण्ठश्वेतरेषां प्रकृतिवत् । शुक्रामन्थिनावित्यादि । दक्षिणाकाले दिक्षु वित्तं विभज्य ददाति । केचित्तु—( औपासने श्रपणं दर्विहोमपक्षे तदा काले अग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति वा रुद्राय स्विष्टकृते स्वाहेति वा, अग्नये स्विष्टकृते स्वाहेति वा नाऽध्वर्युभ्यो दानं, इति च । ) न विषाणप्रासनम् । मरुत्वतीयाभ्यामित्यादि । माहेन्द्रे महानाम्नि साम्नि दक्षिणं प्रत्यपि पक्षमित्यादि कृत्वाऽग्निमन्वारब्धमभिषिञ्चति ॥ ३५ ॥

हिरण्यगर्भः समवर्तताग्र इति षट्प्राजापत्यान्पुरस्तादभिषेकस्य जुहोति ॥ ३६ ॥ षडुपरिष्टात्सप्तममेकेषां यः प्राणत इति पूर्वासां प्रथमा भवति ॥ ( ख० १२ )॥३७॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिं मरीचीनां पदमिच्छन्ति वेधसः ॥ यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे । नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्टं मनिषाणामुं मनिषाण सर्वं मनिषाण ॥ भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्यौ चरति राजसूयँ स राजा राज्यमनुमन्यतामिदम् । प्रजापत इत्येषा । नवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीवधन्व इदं नो देव प्रतिहर्य हव्यमित्युत्तरासामुत्तमा ॥ ३८ ॥

हिरण्यगर्भ इति षट्प्राजापत्याञ्जुहोति । स्पष्टमन्यत् ॥ ३६ ॥ ३७ ॥ ३८ ॥

अयं पुरोभुव इति पञ्चाशतं प्राणभृतः पुरस्तादभिषेकस्य जुहोति । प्राची दिशां वसन्त ऋतूनामिति पञ्चाशतमपानभृत उपरिष्टात् ॥ ३९ ॥

उपरिष्टादभिषेकस्य जुहोतीत्यनुकर्षः ॥ ३९ ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति
पुरुषेण नारायणेन शतातृण्णꣳ सौवर्णꣳ
रुक्मं यजमानस्य शिरसि निदधाति ॥ ४० ॥

देवा इत्यन्तः । पुरुषसूक्तानुवाकेन सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधि निदधाति स्थापयति ॥ ४० ॥

प्रजापतेस्त्वा पृथिव्यै बाहुभ्यामन्तरिक्षस्य हस्ताभ्यां प्रजापतिꣳसाम्राज्यायाभिषिञ्चामीति महिम्नोरुद्रेकेण पर्णमयैः पात्रैः स(सिꣳ)ह चर्मण्यध्यभिषिञ्चति ॥ ४१ ॥

महिम्नोः संस्रावेणाभिषिञ्चति यजमानमिति शेषः ॥ ४१ ॥

ऋषभचर्माभिषिच्यमानस्योपरिष्टाद्धारयन्ति ॥ ४२ ॥

व्याघ्रचर्मावस्तीर्य चर्मण्यवस्थितोऽभिषिच्यते । अभिषिच्यमानस्य राज्ञ उपर्यृषभचर्म धार्यते ॥ ४२ ॥

ऊर्ध्वा अस्य समिधो भवन्तीति प्राजापत्याभिराप्रीभिर्यजमानस्य हस्तं गृह्णाति ॥ ४३ ॥

देवा इत्यन्तः । प्राजापत्याप्रीभिर्द्वादशभिरभिषिच्यमानस्य यजमानस्य दक्षिणहस्तं गृह्णात्यध्वर्युः ॥ ४३ ॥

मृगो न भीम इति वैमृधीभ्यां मुखं विमृष्टे ॥ ४४ ॥

वैमृधीभ्यामृग्भ्यां यजमानो मुखं विमृष्टे हस्ताभ्यामिति शेषः ॥ ४४ ॥

अग्निना देवेन पृतना जयामीति जागतान् विष्णुक्रमान् क्रामति ॥ ४५ ॥

अभिषेके समाप्ते—अग्निना देवेनेति यजमानो जागतान् विष्णुक्रमान् क्रामति ॥४५॥

मधुश्च माधवश्चेति द्वादशाऽऽहुतीर्जुहोति । त्रयोदशेत्येकेषाम् । वसन्ताय स्वाहा ग्रीष्माय स्वाहेति जुहोति ॥ ४६ ॥

मधुश्च माधवश्चेति द्वादशभिस्त्रयोदशभिर्वा मासनामभिरभिषिच्यमानस्य (रभिषिक्तस्य) शिरसि जुहोति । वसन्ताय स्वाहेति षड्भिश्च जुहोतीत्यर्थः । सर्वत्र यथालिङ्गं त्यागः माहेन्द्रे न त्वनिग्राह्याः । उक्थ्यादि । संतिष्ठते माध्यंदिनसवनम् ॥४६ ॥

**हविरासादनप्रभृतीनि कर्माणि प्रतिपद्यते ॥ ४७ ॥**

आरभते । आदित्यग्रहणाद्याग्रयणं गृहीत्वा षोडशिग्रहणं सवने सवने पक्षे विरमति वारेत्यादि ॥ ४७ ॥

**उत्तरत उपरिष्टाद्ग्रेर्वैतसे कटेऽश्वं तूपरं**
**गोमृगमिति यथाङ्गमनुपूर्वम् ॥(ख० १३)॥**
**प्राञ्चः कल्पयन्ति ॥ ४८ ॥**

शृतं हविः शमितरित्यादिमुख्यं प्रतिप्रस्थाता, अन्येषामध्वर्यवः पृषदाज्येन हृदयाभिघारणान्तं कृत्वा यस्त आत्मेत्यादिरन्तरा यूपं कृत्वाऽग्नेश्चित्यस्योपरि पञ्चहोत्रा वैतसकटेऽश्वं प्राक्शिरसमुदीचीनपादमुदङ्मुखं यथाङ्गं रचयति मुखं निधाय जुह्वा कण्ठपादवक्षस इत्यादि । एवमश्वाकृतिं कुर्यादिति भावः ॥ ४८ ॥

**प्रतीचो वा दक्षिणतः प्लक्षशाखास्वितरान्पशून् ॥ ४९ ॥**

एवं पुरस्तादश्वस्य प्रत्यक्शिरसं तूपरं पश्चादश्वस्य गोमृगमासन्नाभिमर्शनमेवं रचयित्वा वसा(पा)होमग्रहणम् ॥ ४९ ॥

**नानाकुम्भीष्वेते पशवः श्रप्यन्ते । वपाभिः**
**प्रचरणकल्पो व्याख्यातः ॥ ५० ॥**

इतरेषां जुह्वामुपस्तीर्येत्यादिवसा(पा)होमं(मार्थं) गृहीत्वा कटमास्तीर्य संप्रेष्यत्यध्वर्युः प्रजापतयेऽश्वस्येत्यादि हविषां मेदसामनुब्रूहि ॥ ५० ॥

**क्रमैरत्यक्रमीद्वाजीति वैतसेन कटेनाश्वं तूपरं**
**गोमृगमिति सर्वहुतं जुहोति ॥ ५१ ॥**

आऽक्रान्क्रमैर्द्यौस्त इत्यनुवाकेन स्वाहाकारान्तेनाश्वतूपरगोमृगान्सर्वहुताञ्जुहोति ॥ ५१ ॥

**हुताय स्वाहेति हुतमभिजुहोति ॥ ५२ ॥**

अश्वं हुत्वा हुताय स्वाहेति हुतमभिजुहोति । इलुवर्दाय स्वाहा बलीवर्दाय स्वाहा, इत्यभिहोमः । कटमाहवनीये प्रहरतीत्यापस्तम्बः ॥ ५२ ॥

**येऽश्वस्य हुतस्य गन्धमाजिघ्रन्ति ॥ ५३ ॥**

पापकर्माणो हुताश्वगन्धावघ्राणेन पुण्यकर्माणो भविष्यन्तीति भावः ॥ ५३ ॥

**सर्वे ते पुण्यलोका भवन्तीति विज्ञायते ॥ ५४ ॥**

अथेतरेषां विश्वेभ्य इति संसृष्टेन । दिग्ययागे चाश्वादीनां प्रजापतेर्जेमानं० इतरेषां विश्वेषामित्यादि । नारिष्ठान्हुत्वा ॥ ५४ ॥

स्तेगान्द९ष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरित्याज्यमव-
दानं कृत्वा प्रतिसंख्यायाऽऽहुतीर्जुहोति ॥ ५५ ॥
ग्राम्यान्हुत्वाऽरण्येऽनुवाक्यं जुहोति द्यावापृ-
थिवीय९ हुत्वाऽश्वस्तोमीयं जुहोति ॥ ५६ ॥
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ।
यज्ञं च नस्तनुवं च प्रजां चाऽऽदित्यैरिन्द्रः सह
सीषधातु । आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं
भेषजाऽकरत् । अग्ने त्वं नो अन्तम इति द्विपदा९
हुत्वाऽश्वलोहितेन शृतेन स्विष्टकृतो जुहोति॥५७॥
गोमृगकण्ठेन प्रथमामाहुतिं जुहोति । अश्वशफेन
द्वितीयाम् । अयस्मयेन कमण्डलुना चरुणा वा
तृतीयाम् ॥ ५८ ॥

स्तेगानित्यादिभिश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमाञ्जुहोति । प्रयासाय स्वाहेत्यनुवाकेन चित्त९ संतानेत्यनुवाकेन द्यौस्ते पृष्ठं यदक्रन्द इति त्रिभिरनुवाकैः कमैरत्यक्रमीदितीमेऽनुवाकाः । अथैतेषां मन्त्रव्यवस्था उच्यन्ते । स्तेगानित्येकादश तृतीयान्ताः । षडादौ ततस्तृतीयाद्या द्वितीयान्ताश्चत्वार उत्तमस्तृतीयान्तः । वाजमिति द्वादश । पञ्च तृतीयान्ताः । ततो द्वौ द्वितीयान्तौ । ततः पञ्च तृतीयान्ताः । कूर्मानित्येकादश तृतीयान्ता द्वितीयवर्जं स तु द्वितीयान्तः । योक्त्रमिति दश । तृतीयान्ताश्चत्वारो द्वितीयान्तास्त्रयः पुनस्तृतीयान्ताः । उत्तरस्मिन्नेकादश सर्वे तृतीयान्ताः । इन्द्रस्यैकादश त्रीन् आद्यान्वर्जयित्वा सर्वे तृतीयान्ताः । उत्तरेऽप्येकादश सर्वे द्विपदाः षष्ठान्तिमवर्जं तौ तु त्रिपदौ । ओज इति नव । आद्यास्त्रयस्तृतीयान्ताः । षट् प्रथमान्ताः । आनन्दमष्टौ सर्वे तृतीयान्ताः । अहरिति चतुर्दश द्विपदाः । उत्तरावपि चतुर्दशकौ । प्रथमान्ताः सर्वे । पन्थामित्येकादश द्विपदाः । कमैरित्यनुवाकमन्त्राः प्रयासाय स्वाहेति द्वादश द्विपदा मन्त्राः । चित्तिमिति नव प्रतिवाक्यम् । द्यौस्त इति दश सर्वे प्रथमान्ताः । यदक्रन्द इति त्रिभिरनुवाकैः प्रत्यृचं पञ्चत्रिंशत् । कमैरिति षट्त्रिंशत् । इमा नु कं यज्ञं नः । आदित्यैरिति तिस्रो द्विपदाः । अथाश्वस्य लोहितेन स्विष्टकृतं यजति । गोमृगस्य कण्ठेन प्रथमाम् । अश्वस्य शफेन द्वितीयाम् । अयस्मयं कमण्डलुं पूरयित्वा तृतीयहोमस्तु पूर्ववत् । वनस्पतियागोत्तरकालमितरेषां स्विष्टकृदादि ॥ ९५ ॥ ९६ ॥ ॥ ९७ ॥ ९८ ॥

पत्नीसंयाजान्तमहः संतिष्ठते ॥ (ख०१४) ॥ ५९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने चतुर्थः पटलः ।

आग्निमारुतान्तमनूयाजादि पत्नीसंयाजान्तं समिदाधानान्तं महः संतिष्ठते ॥ ५९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां चतुर्दशप्रश्ने चतुर्थः पटलः ।

अथ चतुर्दशप्रश्ने पञ्चमः पटलः ।

श्वोभूते प्रतायते सर्वस्तोमोऽतिरात्र उत्तमो बृहत्सामा ॥ १ ॥

यज्ञायज्ञीय नमस्तेऽस्तु अह्नः पक्षे वसतीवरीर्गृह्णाति सवनीयपरिस्तरणान्तं पूर्ववत् । महारात्रे बुद्ध्वेत्यादि । अतिरात्रः सर्वस्तोमश्च बृहत्सामा । ध्रुवं प्रयुज्य षोडशिपात्रं परिप्लवादि । सवनीयस्य पशोः पात्रासादनकाले द्वादश पशुरशनाश्चतुर्विंशतिं यूपरशनाः पूर्वबद्धा विसृ( स्र )स्य पुरस्तात्प्रातरनुवाकादग्निं युनज्मीति । अन्वहपक्षे आग्रयणाग्रं सदसि बहिष्पवमानः ॥ १ ॥

पशुकाल ऐकादशिनान्वायव्यान्पशूनुपाकरोति । प्राजापत्यमृषभं तूपरं बहुरूपं द्वादशमुपालम्भ्यꣳ सर्वेभ्यः कामेभ्यः ॥ २ ॥

पशुकाले त्रिवृद्भ्यां परिवीय—अग्नयेऽनीकवत इत्याश्वमेधिकान्गव्यान्प्राजापत्यामित्यादि । अथवा—अग्नयेऽनीकवत इत्येतासां देवतानां स्थाने प्रजापतिर्वा विश्वे देवा इत्यस्मिन्पक्षे देवतैक्यात्समवदाय प्रचारः । पूर्वस्मिन्पक्षे देवतानानात्वात्प्रचारभेदः । पक्षद्वये गव्या एव पशवः । वैश्वदेवपक्ष एकादशिना(शानां) सह प्रचारः । प्राजापत्यपक्षे द्वादशानाम् । पशूनेहीत्यादि । दक्षिणाकाले विभज्य ददाति । कृष्णाविषाणप्रासनम् । उक्थ्यपर्यायैः प्रचर्येत्यादि आश्विनं तिरोह्नान्तम् । एकादश समिष्टयजूंषि, इत्यादि प्रकृतिवत् ॥ २ ॥

अवभृथेन प्रचरिते पुरस्तात्स्विष्टकृतः ॥ ३ ॥

अवभृथेन प्रचर्य यत्ते ग्राव्णेति बिन्दुस्पर्शनान्तम् ॥ ३ ॥

आत्रेयं खलतिं विक्लिधꣳ शुक्लं पिङ्गाक्षꣳ शिपिविष्टं तिलकावलमवभृथमभ्यवनीय जुम्बुकाय

स्वाहेति तस्य मूर्धञ्जुहोति । चुम्बुकाय स्वाहेत्येकेषाम् । मृत्यवे स्वाहेति द्वितीयाम् । भ्रूणहत्यायै स्वाहेति तृतीयाम् । ब्रह्महत्यायै स्वाहेत्येकेषाम् ॥ ४ ॥

पुरस्तात्स्विष्टकृत इत्युपहोमकालो दर्शपूर्णमासयोर्व्याख्यातः । आत्रेयमित्यादि तिलकावल्ठं चित्रितं शिरसि जुहोति मृत्यव इति तिसृभिः ॥ ४ ॥

तस्मै शतमनोयुक्तं च ददाति ॥ ५ ॥

अध्वर्यवे शतपर्यन्तमित्यर्थः ॥ ५ ॥

शते वाऽनोयुक्ते चेत्येकेषाम् ॥ ६ ॥

अयं कल्पः शाखान्तरोक्तः ॥ ६ ॥

सह पुण्यकृतः पापकृतश्चावभृथमवयन्ति ॥ ७ ॥

पुण्यकर्माणः पापकर्माणश्च पराचीरवगच्छन्ति ॥ ७ ॥

अवभृथादुदेत्य हस्तसंस्रस्ता ग्राममायन्ति ॥ ८ ॥

अन्योन्यहस्तसंरभ्य ( ब्धा ) ग्राममभ्युदायन्ति । यागदेशं गत्वा समिदाधानादि, उदवसानीयान्ते देवीरिमामिति वीणागाथिनौ गायतः ॥ ८ ॥

सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति पञ्चदश वा । छगलः कल्माषः किकिदीविर्विदीगय इति त्रयस्त्वाष्ट्राः ॥ (ख० १५) ॥ ९ ॥

तृतीयेऽह्नि प्रातःकाले गोजातीया एकादश पशवः । ते च देवताविशेषस्यानुक्तत्वात्प्राजापत्याः । छगलादयस्त्रयस्त्वाष्ट्राः । छगलश्छागार्भकः । स च कल्माषः कृष्णवर्णमिश्रः । किकिदीविस्तित्तिरिः । विदीगयः कुक्कुटविशेषः । एते च तस्मिन्नेवाहन्यालब्धव्याः । सौरीः सूर्यदेवताकाः । अनूबन्ध्याश्चरमकालीनाः पशवः । ताश्च वशा वन्ध्याः श्वेताः श्वेतवर्णा नवसंख्याकाश्च भवन्ति ॥ ९ ॥

पात्नीवते संतिष्ठतेऽतिरात्रः ॥ १० ॥

अनूबन्ध्यावपाहोमान्ते वपनं कृत्वा स्नात्वा पात्नीवतस्य कर्म शाखाच्छेदनादि । ( छगलश्छागार्भकः । कल्मापः कृष्णबिन्दुयुक्तः । किकिदीविष्टिट्टिभः । विदीगयः पक्षिविशेषः पृषन्न्यङ्को वा । एते त्रयः पशवः पात्नीवते ) । साण्डमित्येतस्य प्रत्याम्नायः । पशूत्सर्जनान्तं (वपायागान्तं) कृत्वा, इमं स्तनमित्यादि । अनूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवां हवींष्यनूबन्ध्यां संस्थाप्य विशालयूपकर्म ॥ १० ॥

श्वोभूते त्रिपशुना पशुबन्धेन बैल्वे त्रिविशाखे यूपे यजत आग्नेयमैन्द्राग्नमाश्विनम् । तान् पशूनालभते । अपित्रा त्रैतानां प्रथमजमाश्विनं कालकाभ्रुमश्विभ्यां मध्यमे विशालयूपे त्रैतानां मध्यमजमूर्जे दक्षिणे विशालयूपे त्रैतानामुत्तमजं पृथिव्या उत्तरे विशालयूपे ॥ ११ ॥

न पश्विष्टयादयः । शाखाहरणाद्यनूबन्ध्यादिवत् पात्रप्रयोगे तिस्रः कुम्भ्यः । विष्णूनि स्थेत्यन्तं कृत्वा यूपसमानमपरादूर्ध्वं त्रिशाखमष्टाश्रियः सत्रपालमध्यमे विशालयूपे, अग्नये त्वा० दक्षिण इन्द्राग्निभ्यां त्वा० उत्तरे, अश्विभ्यां त्वा० त्रैतानां प्रथमजं प्रथमपुत्रम् । कालकाभ्रुः कृष्णाभ्रुः । मध्यमयूप आश्विनदेवत्यमालभते । तस्यामेव जातायां मध्यमजमूर्देवत्यं दक्षिणे यूपे तस्या एव तृतीयायां पृथिविदेवत्यम्[1] । उत्तरे यूप इति पक्षान्तरम् । उपाकृत्य पञ्चहोमादिनियोजनादिवपाहोमान्तं कुर्यात् ॥ ११ ॥

पशुपुरोडाशं निरुप्याग्नयेऽंहोमुचेऽष्टाकपालमिति दशहविषं मृगारेष्टिं निर्वपति ॥ १२ ॥

अथ पशुपुरोडाशस्य कर्म । तेषां पशुरोडाशानाम् । अग्नयेऽंहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिं निर्वपति । पञ्चसप्ततिः कपालानि अन्यद्भर्जनार्थमेकं द्वे स्थाल्यौ प्रातर्दोहपात्राणि वाजिनपात्रं च । अग्नये जुष्टं० इन्द्राग्निभ्यां जुष्टं० अश्विभ्यां जुष्टं० (दशहविषामिष्टीनामेकतन्त्रम् । ) अग्नयेऽंहोमुचे जुष्टं० इन्द्रायांहोमुचे जुष्टं० वायोः सवित्र आगोमुग्भ्यां० वायुसवितृभ्यामागोमुग्भ्यामिति वा मैत्रायणीयपाठः । अश्विभ्यामागोमुग्भ्यां० मरुद्भ्य एनोमुग्भ्यो जुष्टं० विश्वेभ्यो देवेभ्य एनोमुग्भ्यो जु० अनुमत्यै जुष्टं० अग्नये वैश्वानराय० द्यावापृथिवीभ्यामंहोमुग्भ्यां० इति । अग्नेऽंहोमुग्घव्यं रक्षस्वेन्द्रांहोमुग्घव्यं रक्षस्वेत्युत्करे निनीय यथाभागमिदमग्नेरंहोमुचो मरुतामेनोमुचां विश्वेषां देवानामेनोमुचामग्नेर्वैश्वानरस्य द्यावापृथिव्योरंहोमुचोरिति पेषणार्थान् । इदं वायोः सवितुरागोमुचावश्विनावागोमुचोरनुमत्या इतिचर्वर्थान् । निर्वापक्रमेण कपालोपधानमग्नेयादीनामेकादशैकादश, मृगाराणामष्टावेकादशेत्यादिस्थालीद्वयं भर्जनार्थं ( सप्त द्वादश स्थालीः ) द्वादशाद्विकपालमेवमुपधाय दोहकर्म संक्षालननिनयनार्थं कामधुक्षः० मित्रावरुणाभ्यामागोमुग्भ्यां हविरिन्द्रियमित्यादि पिण्डं कृत्वा व्यावर्तध्वमिति सप्तकृत्वस्तथा तण्डुलार्थान्व्यावर्तध्वं व्यावर्तेथां पुनरथ व्यावर्तध्वमिति द्वौ पुरोडाशौ व्यावर्तेथामित्यु-

[1] क. तस्या एवजातायां मध्यम०

त्तमौ । इदं वायोः सवितुरागोमुचोरनुमत्या इति चरू । इदमग्नेर्वैश्वानरस्येदं द्यावापृथिव्योरꣳहोमुचोः (इति) पुरोडाशपञ्चकमभिश्रित्य तप्ते प्रातर्दोहे लौकिकदध्यानयनम्। अथ घर्मोऽसीति चरुम् । अथ भानार्थान्घर्मा स्थ विश्वायुष इति । अथ मारुतं वैश्वदेवमानुमतं चरुं वैश्वानरं द्यावापृथिव्यं पर्यग्निकरणाद्याप्यलेपनिनयनान्तम् । उद्वासनकाले प्रथममन्त्रेणाभिघार्य उत्तरौ तूष्णीं, उत्तरमन्त्रेणोत्तरं तूष्णीं यस्त आत्मेत्युत्तरांश्चरूंस्तूष्णीमानुमतवैश्वानरयोर्मन्त्रेणोत्तरयोस्तूष्णीमेव क्रमेणोद्वास्य पयस्यां तूष्णीं द्वयोः पात्रयोरित्यादि आसन्नाभिमर्शनं क्रमेण । प्रचरणकाले पशुपुरोडाशैः प्रचर्य, अग्नयेऽꣳहोमुचेऽनुब्रूहीत्यादि ॥ १२ ॥

अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानुवाक्या भवन्ति ॥ १३ ॥

इदं याजुषं हौत्रम् ॥ यथालिङ्गं याज्यानुवाक्याः ॥ १३ ॥

पशुपुरोडाशानां मृगारेष्टेश्च समानꣳ स्विष्टकृदिडम् ॥ १४ ॥

[ अꣳहोमुचेरहमन्नादः । इन्द्रस्याꣳहोमुच इन्द्रियाव्यन्नादः । मित्रावरुणयोर्जेमानं० वायुसवित्रोर्वृत्रहा० अश्विनोर्वृत्रहा० मरुतामिन्द्रियाव्यन्नादः० मित्रावरुणयोर्जेमानं० वायुसवित्रोर्वृत्रहा० अश्विनोर्वृत्रहा० ( मरुतामिन्द्रियाव्यन्नादो वृत्रहा वा । ) विश्वेषां देवानां प्राणैः० वृत्रहा वा । अनुमत्या अहमन्नादः० तथा वैश्वानरस्य द्यावापृथिव्योर्वृत्रहा० ] समानं तु स्विष्टकृदिडम् । यत्ते वयं पुरुषत्रा० इति स्विष्टकृतः पुरोनुवाक्या, यथा ह तद्वसव० इति याज्या भवति । शृतꣳ हविरित्यादि ब्राह्मणतर्पणान्तम् । एवं विशालयूपकर्म समाप्य ग्रन्थिविस्रंसनादि सक्तुहोमं धूमादिमन्त्रणादि( कं )कृत्वा यदाकूतादिति दशाऽऽकूतीः । प्रत्यवरुह्य पुनर्मन इत्युपतिष्ठते नित्यम् । अयं नो नभसेत्यादि, उपस्थानं येऽग्नय इति । समारोप्य त्रैधातवीयो( यामु )दवस्यति । उदवसानीया धर्माः क्रियन्त उपांशुत्वादयः, न पूर्णाहुतिः । सहस्रदक्षिणा अत्र नियम्यते । उदवसानीयान्ते विशालयूपकर्मेति भाष्यकृत् । अथ वीणागाथी, उप त्वाऽग्न इति ॥१४॥

श्वोभूते द्वादश ब्रह्मौदनानन्वहं निर्वपति । द्वादशाभिर्वेष्टिभिर्यजेत ॥ १५ ॥ तासु द्वादशानि शतान्यन्वहं ददाति ॥ १६ ॥ पिशङ्गास्त्रयो वासन्ता इति यथर्तु यथादैवतं यथासमाम्नातमृतुपशुभिर्यजेत ॥ १७ ॥ संतिष्ठतेऽश्वमेधः ॥ (ख० १६) ॥ १८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने पञ्चमः पटलः ।

गृहं गत्वा द्वादश ब्रह्मौदनानि ( न् ) समिद्वर्जमग्न्याधेयवत् । यजमानः सहर्त्विग्भिर्भोजयित्वा द्वादशाहमन्वहम् । अन्वहं द्वादशशतं दानम् । एवं च राज्ञो नित्योऽश्वमेधः । नैमित्तिककाम्ययोर्वा परिगणनादित्येके । तदसत् । राजा सार्वभौमोऽश्वमेधेन यजेत इति वचनाच्च । द्वादशभिर्वैष्टिभिर्यजेतेति नैमित्तिकेष्टिरोदनो द्रव्यमग्निर्देवताऽन्वाधानादि सिद्धमिष्टिः संतिष्ठते । तास्विष्टिषु द्वादशानि शतानि चान्वहं ददातीत्युक्तम् । इष्ट्वा यक्ष्य इत्यादि विशेषः । आगामिपर्वणि सौत्रामणी मैत्रावरुणी चाऽऽमिक्षा वा । आगामिनि वसन्ते पर्वणि पशुबन्धेन यक्ष्य इत्यादि । पिशङ्गास्त्रयो गोरोचनवर्णाः सारङ्गाश्चातकवर्णाः । पृपन्तस्त्रयः । पृपन्तस्त्रयः पृश्निसक्थ्या महाकाया अवलिप्ता अन्येन वर्णेन मिश्रिताः । अथान्यस्मिन्पर्वणि संवत्सरदेवतास्त्रिभिर्यजेत निवक्षसः निम्नवक्षसो नीलवक्षसो वा । त्रिपशुबन्धा एतदन्तं यजमानस्य ब्रह्मचर्यादि परिसमाप्यतेऽश्वमेधः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां चतुर्दशप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

अथ चतुर्दशप्रश्ने षष्ठः पटलः ।

---

**पञ्चाहः पुरुषमेधः । राजा ब्राह्मणो वा । यः कामयेत सर्वेषां भूतानां ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यं गच्छेयमिति । स एतेन यजेत ॥ १ ॥**

पञ्चाहसाध्यः पुरुषमेधः । ब्राह्मणो राजन्यो वा यजेत, न तु वैश्यः । ओजो वीर्यमाप्नोतीति वचनात् । सर्वा व्युष्टीर्व्यश्नुत इत्यापस्तम्बः ॥ १ ॥

**तस्याश्वमेधेन कल्पो व्याख्यातः ॥ २ ॥**

तस्य पुरुषमेधस्य ॥ २ ॥

**त्रयोविꣳशतिर्दीक्षाः । द्वादशोपसदः । पञ्च सुत्याः । एकादश यूपा एकादशाग्नीषोमीया अग्निष्टोमः प्रथममह उक्थ्यो द्वितीयमतिरात्रस्तृतीयमुक्थ्यश्चतुर्थमग्निष्टोमः पञ्चमम् । मध्यमेऽहनि पौरुषमेधिकान्पशूनुपाकरोति ॥ ३ ॥**

तस्याहीनद्वादशाहवदिति भाष्यकृत् । शिशिरे दीक्षते । अग्निचित्यमाश्रित्य

प्रयोगः । शिशिरे पर्वणि प्रातरग्निहोत्रꣳ हुत्वा पुरुषमेधेन यक्ष्य इत्यादि । विद्युत्० सोमप्रवाकवरणादिसक्षेदान्तं बृहस्पतिपुरोहिता इत्याद्युखासंभरणान्तं तस्मिन्नेवाहनि वायव्यः पशुः प्रवर्ग्यसंभरणं च । पष्ठ्या द्रव्यनिर्देशादग्निवद्दीक्षणीया, उखाप्रवृञ्जनादि सर्वमग्निवत् । व्यहमेकैका चितिः प्रायणीय ऋषीष्टकानां विश्वेषु त्वा० इत्यादीनामुपधाय विरामः । न वाङ्य० आसन्नाश्वः । श्वोभूत एकाद्यष्टकाद्यश्वपरिणयनान्तम् । श्वोभूत एकाष्टकामुपधाय विरामः । एवं प्रत्यहं पञ्चमेऽग्निजातानित्यादिस्तोमभागान्तमुपधाय विरामः । श्वोभूते स्तोमभागादिसंयानीयान्तं प्रत्युदमुपसादयत्यध्वर्युः । ऐन्द्रवायवग्रहमाग्नेयमतिग्राह्यं दक्षिणाकालेऽश्वमेधे यथा भवति तथा ददाति । यज्ञायज्ञीये नमस्ते अस्तु । अस्मिन्काले वसतीवरीरुत्तरस्याह्नः । एवं पत्नीसंयाजान्तमहः संतिष्ठते ।

अहीनसंततयः सवनीयस्य परिस्तरणीयान्तः । अध्वर्युर्महारात्रे बुद्ध्वा पञ्चदश उक्थ्यः षडहस्य द्वितीयविकारः शुक्राग्र(हः)ऐन्द्रमतिग्राह्यमेक ऐन्द्रः । ऐन्द्रपत्नीसंयाजान्तमहीनसंततयः सवनीयस्य परिस्तरणान्ते महारात्रे बुद्ध्वोक्थ्यं सौर्यमेकमातिग्राह्यमेकमेकादशनीवेदिपरिव्ययणं कुर्यात् ॥ ३ ॥

देव सवितः । तत्सवितुः । विश्वानि देव सवितरिति पुरुषानुपाकरिष्यन्स्तिस्रः सावित्रीर्जुहोति॥४॥

तिस्र ऋचः सावित्रीः सवितृदेवताप्रकाशका इत्यर्थः ॥ ४ ॥

ऐकादशिनानुपाकृत्य पुरुषानुपाकरोति ॥ ५ ॥

द्वयानैकादशिनानुपाकृत्य पुरुषानुपाकरोतीत्यर्थः ॥ ५ ॥

ब्रह्मणे ब्राह्मणमालभत इति यथासमाम्नातम् । तेषामष्टाचत्वारिꣳशतं मध्यम उपाकरोति ॥ ६ ॥

एकादशैकादशेतरेष्ववशिष्टान्मध्यमेऽष्टौ वा ॥ ७ ॥

उत्तमानग्नियुक्तान्पुरुषान्सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति पुरुषेण नारायणेन दक्षिणतो ब्रह्माऽभिष्टौति ॥ ८ ॥

ऐकादशिनानाश्वमेधिकांश्चोपाकृत्य पुरुषानालभते ब्रह्मणे ब्राह्मणमिति ( तै० ब्रा० ३-४-१ ) चतुर्थ्यन्तपदोक्ता देवताः । द्वितीयान्ताः पशवः । ब्रह्मणे त्वा जुष्टमुपाकरोमीत्यादि । स्पष्टमन्यत् ॥ ६ ॥ ७ ॥ ८ ।

पर्यग्निकृतान्पुरुषानुदीचो नीत्वोत्सृज्याऽऽज्येन तद्देवता आहुतीर्हुत्वाऽथैकादशिनीः सꣳस्थापयन्ति ॥ ९ ॥

उपाकृत्य पञ्चहोमादि पर्यग्निकृतान्पुरुषानुत्तरतो नीत्वोत्सृजति । तत आज्येन तद्देवतायै ( याः ) ब्रह्मणे स्वाहा इत्यादिहोमा द्वयोरेकादशिनीः संस्थापयन्ति पत्नीसंयाजान्तं पूर्ववदहीनसंततयः । अन्वाधानादि रात्रौ परिस्तरणान्तम् । महारात्रे बुद्ध्वेत्यादि पञ्चदश उक्थ्योऽग्निष्टोमो वा । अतिग्राह्यं न वा । ऐन्द्रवायवग्रहः । अग्निष्टोमपक्षे दधिधर्मः पत्नीसंयाजान्तं पूर्ववदहीनसंततयः परिस्तरणान्तम् । महारात्रे बुद्ध्वेत्यादि सप्तदशोऽतिरात्रः शुक्रग्रहो यज्ञायज्ञियेऽ नमस्ते अस्तु० कृष्णविषाणप्रासनं तिरोह्नान्तम् ॥ ९ ॥

**दक्षिणाकाले मध्यमं प्रतिराष्ट्रस्य यदन्यद्ब्राह्मणादिक्षु वित्ताद्भूमेः सेनाभ्यश्च तत्पुरुषमेधे ददाति ॥ (ख०१७) ॥ १० ॥**

मध्यमं प्रतिराष्ट्रस्येति क्षत्रिययजमानविषयम् ॥ १० ॥

**यथाऽश्वमेधं ब्राह्मणो यजमानः सर्ववेदसं दद्यात् ॥ ११ ॥**

ब्राह्मणो यजमानश्चेत्तदा सर्ववेदसं ददाति ॥ ११ ॥

**एकादश यूपा एकादशानूबन्ध्या मैत्रावरुणी वैश्वदेवी बार्हस्पत्या वा ॥ १२ ॥**

अवभृथादुदवसानीयान्तमग्निष्टोमवदिति भाष्यकृत् । अनूबन्ध्या एकादशसु यूपेषु सूर्यदेवत्या वैश्वदेवत्याः प्रजापतिदेवत्या वा । अनूबन्ध्याः समाप्य ग्रन्थिविस्रंसनादि ॥ १२ ॥

**त्रैधातवीयोदवसानीया तयेष्ट्वा पृथगरणीष्वग्नीन्समारोह्योत्तरनारायणेनाऽऽदित्यमुपस्थाय गृहेषु प्रत्यवस्येद्यानभिप्राप्नुयात्तान्यज्ञक्रतूनारभेत ॥ १३ ॥**
**संतिष्ठते पुरुषमेधः ॥ १४ ॥**

त्रैधातवीयोदवसानीयास्थाने भवति । तयेष्ट्वाऽग्नीन्समारोप्य-अद्भ्यः संभृतः पृथिव्या इत्यनुवाकेनाऽऽदित्यमुपस्थाय ग्रामं प्रविश्य त्रैधातवीयया यजेत वेति । अनन्तरे पर्वणि सौत्रामणी मैत्रावरुणी च । ततोऽमावास्यायां साकंप्रस्थायीयेन यजेत । पञ्चबिलेन चरुणा पञ्चशारदीयेनेति । पञ्चबिलस्य चरोर्विज्ञायते । आज्य आग्नेयः पूर्वस्मिन्बिले । दधन्यैन्द्रो दक्षिणे । शृते प्रतिदुहि [नव]नीतमिश्रे वा वैश्वदेवः पश्चिमे । अप्सु मैत्रावरुण उत्तरे । पयसि बार्हस्पत्यो मध्यमे ( आप० श्रौ० २०–८–२९ ) इत्यापस्तम्बः । ब्राह्मणभोजनान्तेयमिष्टिः । समाप्यते पुरुषमेधः ॥ १३ ॥ १४ ॥

सर्वमेधो दशरात्रः । यः कामयेत सर्वमिदं भवेयमिति । स राजे(एते)न यजेत । तस्य पुरुषमेधेन कल्पो व्याख्यातः ॥१५॥

अथ सर्वमेधो दशरात्रो राजा यजेत । तद्द्वादशाहाविच्छिन्नं दीक्षत इति सूत्रान्तरात् । शैशिरे वसन्ते वा पर्वणि पत्नीभिः सह राजा सर्वमेधेन यक्ष्य इत्यादि । पष्ठ्यां दीक्षणीया सप्तहोतुः स्थाने दशहोता दशरात्राय दीक्षिष्यमाण इति ब्राह्मणम् ॥ १५ ॥

त्रिस्तावा वेदिरेकशतविधोऽग्निरग्निष्टुत् ॥ १६ ॥

पञ्चाशदधिकचतुःशताङ्गुली(ल)संमितः पुरुषः पुरुषस्थानीयः । तेनाग्निमानमरत्निप्रादेशयोर्वाऽपि विवृद्धिपक्षे पञ्चोत्तरशतविधाभ्यासेन चैकोत्तरशतविधाभ्यासेन चैकोत्तरं शतम् । उक्तस्य पुरुषस्य चतुर्भागीयास्तदर्धेन तत्पादाः पुरुषस्य पञ्चमांशेन पञ्चमभागीयास्तदर्धेन तत्पादाः पुरुषस्य पञ्चदशभागेनाष्टाङ्गुलाः षड्भागीया वा । गार्हपत्यस्य धिष्णियानां प्राकृत (ता) एव करणीयः(याः) ॥ १६ ॥

अग्निष्टोमः प्रथममहः । सर्वमाग्नेयं क्रियते ॥१७॥ इन्द्रस्तुदुक्थ्यो द्वितीयꣳ सर्वमैन्द्रं क्रियते॥ १८॥ सूर्यस्तुदुक्थ्यस्तृतीयꣳ सर्वꣳ सौर्यं क्रियते ॥१९॥ विश्वेदेवस्तुदुक्थ्यश्चतुर्थꣳ सर्वं वैश्वदेवं क्रियते ॥ २० ॥ आश्वमेधिकं मध्यमं पञ्चमम् । तस्मिन्नश्वं मेध्यमालभते ॥ २१ ॥ पौरुषमेधिकं मध्यमꣳ षष्ठम् । तस्मिन्पुरुषान्मेध्यानालभते ॥ ॥ २२ ॥ अप्तोर्यामः सप्तमम् । तस्मिन्सर्वान्मेध्यानालभते ॥२३॥ वपा वपावतां त्वच उत्कृत्यावपानां जुहोति॥ २४॥ संवृश्चौषधिवनस्पतीनार्द्राञ्शुष्काꣳश्चानुप्रकिरन्ति ॥ २५ ॥ प्रातःसवने सन्नेषु नाराशꣳसेषु चान्नमन्नं जुहोति ॥२६॥ सर्वं जुहोति सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्या इत्येवं माध्यंदिने सवने तथा तृतीयसवने हुतेषु हविःषु त्रिणवमष्टमम् । त्रयस्त्रिꣳशं नवमम् । विश्वजित्सर्वपृष्ठोऽतिरात्रो दशमम् ॥ २७॥

गार्हपत्यं चित्वा प्रायणीयया प्रचर्य चतुर्भागीयासंमितेन दण्डेन वेदिमानम् । तिस्रो दीक्षाः षडुपसदः । द्वादश दीक्षा द्वादशोपसदो वा । सोमक्रयकाले दशाक्रयः । (तत आतिथ्याप्रचरणादिवसतीवरीग्रहणान्तं कर्म प्रकृतिवत् । ) महारात्रे बुद्ध्वा, इत्याद्यग्निष्टुदग्निष्टोमः । सोमपात्रप्रयोगे बृहन्नसि० अग्नये वाचं वदतेत्यूहः । द्विदेवत्यानामाग्निर्देवता जगती छन्दः । अग्नेः पात्रमसीत्यूहः । ग्रावाऽस्यध्वरकृत्० पवित्रायाग्नये सोममित्याद्यनूहो वा । ऐन्द्रवायवग्रहणकालेऽस्याजरास इति चतुर्वाक्यमनुद्रुत्य, उपयामगृहीतोऽस्यग्नये त्वा० उपयम्याग्न आयूंषि पवस० उपयामगृहीतोऽस्यग्निभ्यां त्वा एष ते योनिः सजोषां त्वा० ऐन्द्रवायवाग्रमेव मैत्रावरुणं यजनानो मित्रावरुणा त्रिवाक्यपूर्वा । उपयामगृहीतोऽस्यग्निभ्यां त्वा राया वयं एष ते ऋतायुभ्यां त्वा० शुक्रं द्वे विरूपे भवतः । चतुर्वाक्यान्यनुद्रुत्योपया० शण्डाय त्वा० मन्थिनो पूर्वापरचतुर्वाक्यानि मर्काय त्वा० मनो नयेषु० एष ते आग्रयणं० ( त्रीणि शतानि ) चतुर्वाक्यानि चानुद्रुत्योपयामगृहीत० हिं ३ सोमः पवते० विश्वेभ्यस्त्वा० अग्निभ्यः० द्वितीयेऽतिग्राह्ये उत्तिष्ठन्० सोममग्ने चमूसुतं, उपया० अग्नये त्वेति । तरणिर० उपयाम० अग्नये त्वा० एष ते० अग्नये त्वा० उक्थ्यं० अग्निर्वृत्राणि० आहुतः । उपयाम० अग्नये त्वोक्थायवे । यत अग्ने० एष ते व्योनिरग्नये त्वोक्थायवे । नित्यं मूर्धानं० ध्रुवस्येति । आश्विनं अश्विनौ पिबतं० वाहसं, उपयाम० अश्विभ्यां त्वा । त्रिवृतयूपमित्यादि कापेयानां प्रथममाग्नेयमाग्निष्ठ उपाकरोति विभज्य सप्तरात्रवत् । पञ्चपष्ठसप्तमानामह्नां ( महेषु ) सूत्रोक्ताः पशवः । शिष्टानामह्नां ( महेषु ) कापेया एव विभक्ताः । तामतिरात्रचरमेति लिङ्गात् । कापेयानामुपदेशेनैव प्राप्तिः । नतु चोदकेन । अग्नयेऽग्निभ्यामनुब्रूहीत्यादि एवं प्रेष्य । ऐन्द्रवायवस्य मैत्रावरुणस्य ( अग्निभ्यामनुब्रूहीत्यादिरत्र वा ) एवमाश्विनस्य सवनमुखप्रेषे प्रातः प्रात.सवनस्येन्द्रस्य ( अग्नये ) सोमाय तस्मा अग्नय ऐन्द्राग्नः, अग्निनाऽग्निः, त्रिवाक्यानि अग्निभ्यां त्वा० वैश्वदेवं अग्निर्देवतानां जठरं त्रिवाक्यान् उपयाम० विश्वेभ्यस्त्वा० अग्निभ्य उक्थ्यपर्याय उपयाम० अग्निभ्यां त्वा० अग्निभ्यस्त्वा देवायुवं, माध्यंदिने वशी त्वं देव अग्नेः प्रियं पाथः । पूर्ववच्छुक्रामन्थिनौ । मरुत्वतीये अग्निश्रिय इति चतुर्वाक्यानि । उपयाम० अग्नये त्वा मरुत्वते द्वितीयवदुत्तमे मरुत इति चतुर्वाक्यानि ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

**दक्षिणाकाले मध्यमं प्रतिराष्ट्रस्य यदन्यद्ब्राह्मणादिक्षु वित्तात्तत्सभूमि पुरुषवद्ददाति । यथा पुरु**

षमेधे यथा पुरुषमेधे ॥ (ख०१८) ॥ २८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशप्रश्ने षष्ठः पटलः ।

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्दशः प्रश्नः ।

दक्षिणाकाले प्राप्तेऽश्वमेधवत् । अग्नये मरुत्वतेऽनुब्रूहि इड अग्न इति चतुर्वाक्यानि माहेन्द्रं श्रुधि श्रुतं० अध्वरम् । उपयाम० अग्नये त्वा० उक्थ्यपर्यायस्तथैव तृतीयसवनस्य ( सवनीय ) आदित्यं विश्वेषामधितिः उपयाम० अग्निभ्यस्त्वा । त्वमग्ने सुमतिं सिन्धुः० उपयाम० अग्निभ्यस्त्वा० शृतातङ्क्या, त्वामग्ने, आहुत, उपयाम० अग्निभ्यां त्वा विवश्व आदित्येति नोहः । अग्निभ्योऽनुब्रूहि प्रियेभ्यः, आशिरो सुमनस्यमानोऽग्नय आशिरम् । अथ तृतीयस्य सवनीयस्याग्नेः सोमागिति अन्तर्यामसावित्रेण सावित्रम् । नित्या यज्ञायज्ञियं उपयाम० अग्नये त्वा० वैश्वदेवं, अग्निर्देवानां जठरं उपयाम० अग्निभ्यस्त्वा० ज्योतिष्टोमवत्पात्नीवतम् । यज्ञायज्ञियस्थाने वारवन्तीयं, तस्मिन्स्तूयमाने वसतीवरीर्गृह्णाति । हारियोजनं, उपया० अग्नये हरिवते सह सोमा अग्नये । एवं पत्नीसंयाजान्तम् । पूर्ववदहीनसंततयः पारिस्तरणान्तम् । शेषं पूर्ववत्समानम् । अभ्यासः प्रश्नपरिसमाप्त्यर्थः ॥ २८ ॥

प्रयोगवैजयन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
न्यायसूत्रस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां चतुर्दशप्रश्ने षष्ठः पटलः ।

इति सत्याषाढसूत्रव्याख्यायां चतुर्दशप्रश्नः ॥

# अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे चयनक्रतुप्रतिपादकैकादशद्वादशप्रश्नगतसूत्राणां पाठक्रमेण प्रतीकानि ।



अथ वाजपेयराजसूयप्रतिपादकत्रयोदशप्रश्नगतसूत्राणां प्रतीकानि ।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्र एकादशादिचतुर्द-
शान्तप्रश्नगतसूत्राणा प्रतीकानि ।